॥ शिवमयम् ॥

# कामिकागमः

## उत्तरभागः

# KAMIKAGAMAM

## (UTTARA BHAGAM)


दक्षिणभारतार्चकसंघसंचालकैः

**श्री वे. स्वामिनाथशिवाचार्यैः**


प्रकाशितः


दक्षिणभारतार्चकसंघः

24, बद्रैयन वीथी, मद्रास

( रिजिस्टर्ड् 39–1950 मद्रपुरी )

1988

॥ शिवमयम् ॥

# कामिकागमः

उत्तरभागः

दक्षिणभारतार्चकसंघसंचालकैः

**श्री चे. स्वामिनाथशिवाचार्यैः**

प्रकाशितः

दक्षिणभारतार्चकसंघः

24, बद्रैयन वीथी, मद्रास

(रिजिस्टर्ड् 39—1950 मद्रपुरी)

1988

# PREFACE

The first part of the Kāmika which is best known as Pūrvakāmika was published in Devanāgari script in 1975. The second part which is well known as Uttarakāmika has now been published. Pūrvakāmika contains 75 chapters. The first one deals with the enumeration of the Śaivāgama texts and their extant, the second with formation of mantra-s. Chapters three to eight deal with the daily rites in Temples. Nine to sixty-one deal with the architecture. Sixty-two to seventy-five deal with the consecration ceremonies.

Pūrvakāmika in the introductory verses, gives contents of Pūrva and Uttara Kāmika. Relating to Pūrvakāmika contents of all serventy-five chapters are found; but relating to Uttarakāmika contents of ninety chapters only are indicated. Probably verses giving contents of eight other chapters are omitted in manuscripts used for the edition. However 98 chapters are available in Uttarakāmika. Chapters 1 to 7 deal with special daily rites relating to Temples; chapters 8 to 19 explain occational rites; chapters 20 to 29 deal with the Śaiva personal sanctifying ceremonies from birth to death during life time and also after death (pūrva-apara-saṃskāra); chapters 30 and 31 deal with expiation ceremonies; chapters 32 and 34 deal with renovation and consecration ceremonies of temples; chapter 33 deals with six magical rites (ṣaṭkarma); chapters 35 to 71 explain consecration ceremonies pertaining to the different forms of Śiva and his retinue; chapters 72 to 82 explain temple rites performed for some special purposes; chapters 83 to 98 deal with the rites pertaining to sixteen kinds of special gifts (ṣoḍaśamahādāna). An analysis of these chapters is given in the sanskrit introduction.

As per definition available in Texts, each āgama contains four sections (pāda) namely jñāna (philosophy), kriyā (ritual), yoga, and caryā (daily conduct or conventions of the particular schools). In the published portion of Kāmika, in pūrva and uttara, the matter dealt with relates mostly to the ritual part (Kriyā). Perhaps the matter dealt with in chapters 20 to 29 in the Uttarakāmika may be partaining to the section caryā.

Manuscripts contaning 19 chapters of the Jñāna-pāda and one chapter of yogapāda of Kāmikāgama are available, but this portion is not yet published Manuscripts containing caryā-pāda are so far not available, but as indicated before, chapters 20 to 29 of Uttarakāmika may be a portion of caryāpāda. According to the statement (paṭala 1, śl. 16-17) found in the jñānapāda of Kāmika, Kriyā, caryā and Yoga pāda-s were explained by Śiva before jñāna-pāda.

Kāmika and Kāraṇa are the main āgama-s considered as authority at present by all the priests in Tamilnadu Temples. After great effort Śiva Śri C. Svaminatha Śivācārya has now published the Kāmikāgama in two parts. Unfortunately he passed away on 15-9-1986. May the goddess and Lord Śiva grant him liberation as he was publishing texts which are very useful for temple worship.

N. R. BHATT,
*Head of Sanskrit Department,*
*French Institute of Indology,*
PONDICHERRY.

# उपोद्घातः

पूर्वकामिकाख्ये कामिकागमस्य पूर्वभागे पञ्चसप्ततिसंख्याकेषु पटलेषु नित्यविधिः, देवालयमण्डपशालाप्राकारविमान-गोपुरादिनिर्माणपूर्वकं तत्प्रतिष्ठाविधिः, लिङ्गप्रतिमादिलक्षणनिरूपणपूर्वकं तत्स्थापनविधिश्च निरूपिताः। सोऽयमागमः १९७५ तमे वत्सरे प्राकाशि। तादृशकामिकाख्यस्यागमस्य उत्तरभाग उत्तरकामिकाख्योऽष्टोत्तरनवतिपटलात्मकोऽयं ग्रन्थोऽधुना प्रकाश्यते।

अत्र प्रथमद्वितीयपटलयोः पश्चिमद्वारदक्षिणद्वारार्चनविधी, तृतीये सकलार्चनविधिः, चतुर्थे स्नपनविधिः, पञ्चमे नित्योत्सवविधिः, षष्ठे महोत्सवविधिः, सप्तमे नीराजनविधिरिति विशिष्टा नित्यविषयः प्रतिपाद्यन्ते। अष्टमपटलादारभ्य एकोनविंशतितमपटलान्ते भागे नैमित्तिका मासोत्सवविषयोऽभिधीयन्ते। विंशतिपटलादारभ्य एकोनत्रिंशान्तपटलेषु शिवपूर्वापरसंस्काराः, त्रिंशैकत्रिंशयोः प्रायश्चित्तविधी, द्वात्रिंशे चतुस्त्रिंशे च जीर्णोद्धारसंप्रोक्षणविधी, त्रयस्त्रिंशे षट्कर्मविधिः, पञ्चत्रिंशादारभ्यैकसप्तत्यन्तं विविधप्रतिष्ठाविषयः, द्विसप्तत्यारभ्य द्व्यशीतिपटलान्तं केचन विशेषविषयः, त्र्यशीतिप्रभृत्यष्टनव-त्यन्तपटलेषु तुलारोहादिषोडशदानविषयश्च प्रतिपाद्यन्ते। तत्र पटलार्थसंग्रहोऽधुना वर्ण्यते।

प्रथमे पटले पश्चिमद्वारहर्म्ये लिङ्गे, सकले, मुखलिङ्गे च गृहस्थाश्रमिणा शिवविप्रेण कर्तव्यः परार्थयजनविधिः प्रतिपाद्यते। तत्रादौ पश्चिमद्वारहर्म्ये परार्थयजनं राजराष्ट्रसमृद्धिजनकं भुक्तिमुक्तिफलप्रदं च भवतीति फलनिरूपणम्। शिवविप्रेण प्रतिदिनं प्रातरावश्यकशौचस्नानकरणानन्तरं द्विजत्वसंपत्तिसिद्धयेऽवश्यकर्तव्यस्य संध्यावन्दनकर्मणः प्रतिपादनम्। आवश्यकशौचस्नानहोमादिविषये द्विजानां कर्तव्यत्वेन विहितस्य श्रुतिस्मृत्यादिसंसिद्धकर्मणोऽनुष्ठानं शिवविप्रेण कर्तव्यं वा न वेति विकल्पः प्रदर्शितः। स्वशास्त्रोक्तसंध्यामन्त्रादितर्पणविधानानन्तरमेव शिवविप्रेण परार्थयजनाय देवालयप्रवेशः कर्तव्य इत्युच्यते। तत आत्मस्थानद्रव्यमन्त्रलिङ्गशुद्ध्याख्यासु पञ्चशुद्धिषु मध्ये प्रथमा आत्मशुद्धिर्निरूप्यते। तत्र करन्यासपूर्वकं द्वादशान्तस्थशिवेन सह जीवस्य योजनरूपमात्मयोजनं, भूतशुद्धिः, करन्यासाङ्गन्यासाष्टत्रिंशत्कलान्यासादिभिरात्मनः शैवतनुकरण-प्रकारः, अन्तर्यागकरणप्रकार इत्यादिविषयाः प्रतिपाद्यन्ते। ततः स्थानशुद्धिर्द्रव्यशुद्धिश्च कथ्येते। तत्र द्रव्यशुद्धिप्रतिपादने पञ्चगव्य पाद्याचमनार्घ्येषु विषये उत्तममध्यमकन्यसप्रकारा अभिहिताः। ततो मन्त्रशुद्धिः प्रतिपाद्यते। ततः सामान्यार्घ्य-संपादनद्वारपूजनयोर्निरूपणम्। ततो लिङ्गशुद्धिप्रकारो विधीयते। अत्र द्वारपूजनानन्तरं वा पञ्चशुद्धिः करणीयेति विकल्पः सूच्यते। तत आसनकल्पनप्रकारो निरूप्यते। तत्र अनन्तासन–सिंहासन–योगासन–पद्मासन–विमलासनानां स्वरूपवर्णनं, स्नानावाहनकालादौ पृथगेतेषामासनानां विनियोग इति कथनं च दृश्येते। ततः पञ्चब्रह्ममन्त्राष्टत्रिंशत्कलान्यासादिभिर्मूर्तिकल्पन-प्रकारोऽभिधीयते। तत आवाहन–स्थापन–संनिधान–संनिरोधन–अवकुण्ठन–अमृतीकरणाख्यमुद्राप्रदर्शन-पाद्य-आचमन–अर्घ्य–पुष्पदानान्ता दशसंस्काराः कर्तव्या इत्युच्यते। गन्धपुष्पधूपदीपाद्युपचारैः शिवं पूजयेदित्युच्यते। तत आमन्त्रणहविः-प्रदान–भूषणप्रदान–आरात्रिकप्रदर्शनप्रकाराः कथ्यन्ते। एवं दर्पणदर्शनं छत्रचामरनिवेदनं च कर्तव्यमित्युच्यते। रात्रौ दीपदानावसाने नीराजनं कर्तव्यमिति सूच्यते। महाहविर्निवेदनान्ते बलिहोमौ समाचरेदिति भण्यते। स्नपनकाले मन्त्रगानं वा वीणागानमथवा वेदाध्ययनं स्तोत्रपाठादिकं वा विधेयम्। तदूर्ध्वं गौडभाषयैर्गानं धूपान्तमाचरेदिति स्नपनकाले विधेयस्य गानविधेः प्रदर्शनम्। ततो गीतसहितनृत्तविधिनिरूपणम्। तत्र द्राविडभाषोत्थगानयुतमथवा संस्कृततदपभ्रंशभूतभाषोत्थगानयुत-महाराष्ट्रभाषोत्थगानयुतं वा नृत्तमाचरेदित्युच्यते। रुद्रकन्यालक्षणं चाभिधीयते। ततो नित्योत्सवशुद्धनृत्तयोर्विधेयत्वेन सूचनम्। अन्ते च चुलुकोदकविसर्जनं कर्तव्यमित्युच्यते। एवं यजनविधौ क्रियाकलापः प्रादर्शि। ततः साधकेन सिद्ध्यर्थमाचरणीयस्य यजनविशेषस्य सूचनं दृश्यते।

ततः शुद्धैः शैवोक्तैः केवलैर्मन्त्रैर्यजनमुत्तमं, शैवैर्वेदोक्तैश्च मन्त्रैर्यजनं मध्यमं, केवलैर्वैदिकैर्मन्त्रैर्यजनमधममिति यजनविषये त्रैविध्यप्रतिपादनम्। ततः शैवमन्त्राणां प्राशस्त्यकथनम्। तत्र बीजमन्त्रसमुद्भूता रुद्राध्यायादयः। अतो रुद्राध्यायादिस्थाने बीजमन्त्रं विनियोजयेदित्युच्यते। ततः पूर्वोक्तो यजनप्रकारः पूर्वास्यके दक्षिणास्यके कौबेरास्यके हर्म्ये लिङ्ग-सकल-मुखलिङ्गविषयेषु समान एव इत्युक्त्वा पश्चिमद्वारहर्म्ये कर्तव्यो विशेषः प्रतिपाद्यते। तत्र द्वाराभिमुख्येन देवस्योर्ध्व-मुखकल्पनं, मनोन्मन्या देवस्य वामे वा दक्षिणे वा स्थापनं, देव्या द्विहस्तैकमुखान्वितत्वं, तथा गर्भावरणविघ्नेशावरणगणेशावरण-लोकेशावरणास्त्रावरणविषये कर्तव्यस्य विशेषस्य प्रतिपादनं, देवाग्रे वृषभ–शूल–ध्वजस्थान–गोपुराणां कल्पनं, परिवारार्चने विशेषप्रतिपादनम्, ईशानदेशे चण्डेशस्थानकल्पनं, याम्ये विघ्नेशस्थानकल्पनमित्यादिविशेषाः प्रदर्शिताः। अन्तेऽन्यत्सर्वं पूर्वद्वारार्चनेन समानमित्युक्तम्। एवं प्रथमपटलार्थसंग्रहः।

द्वितीये पटले दक्षिणद्वारार्चनविधिः प्रोच्यते। तत्र प्रथमं दक्षिणद्वारार्चाया उत्तमोत्तममध्यमाधमत्वेन प्रकारत्रयमस्ति। प्रतिमा दक्षिणास्या चेदुत्तमोत्तमपूजा कर्तव्या। मुखलिङ्गं दक्षिणास्यं चेन्मध्यमा पूजा विधेया। लिङ्गं दक्षिणास्यं यदि भवति, तत्राधमा पूजा कर्तव्येति पूजायां प्रकारत्रयं सूचितम्। प्रतिमासु मध्ये नृत्तमूर्तेर्दक्षास्यत्वेन यजनमतिशोभनमित्यभिधीयते। पश्चिमाभिमुखं लिङ्गं, दक्षास्यं बेरं च श्रेष्ठमिति कथ्यते। अव्यक्तं लिङ्गं मोक्षदं, व्यक्तं बेरं भूतिदायकं, मिश्रं मुखलिङ्गं भुक्तिमुक्तिप्रदमिति यजनफलं निरूप्यते।

आचार्यः शौचाचमनस्नानसंध्योपासनानि कृत्वा, दक्षिणद्वारमाश्रित्य शिवार्घ्यहस्तो द्वारमस्त्रेण संप्रोक्ष्य द्वारपानर्चये-दित्युक्त्वा द्वारदेवतार्चनप्रकारोऽभिधीयते।

ततो दक्षिणास्यकलिङ्गविषयेऽर्चनप्रकारो निरूप्यते। तत्र गर्भावरणविघ्नेशावरणगणेशावरणलोकेशावरणास्त्रावरण-पूजाविषये विशेषः प्रतिपाद्यते। अत्र बहवो विकल्पाः प्रदर्शिताः। वृषभबलिपीठध्वजादीनां दक्षिणदिशि स्थानं कल्पनीयम्। अन्यत्सर्वं प्राग्वदेव विधेयमित्युच्यते।

ततो दक्षिणद्वारार्चनविषये बेरार्चनप्रकारः संग्रहेणाभिधीयत इति प्रतिज्ञा। तत्र लोहजे, शैलजे, मृन्मये, धातुजे, रत्नजे, चित्रहीने शिलाबिम्बे च मूललिङ्गवत्पूजा कर्तव्या। रत्नजे लोहजे पक्वमृन्मये च बेरे बेरशोधनमिष्टदिवसे विधेयम्। यदा बेरं सधूसरं भवति, तदा वस्त्रसंमार्जनं कर्तव्यम्। पुण्यदिवसे स्नपनं कर्तव्यमित्यादिविषयाः प्रतिपाद्यन्ते। बेरार्चनविषये आसनकल्पने विद्यादेहकल्पने च विधेयो विशेषोऽभिधीयते। ततः प्रतिमानां विषये विशेषेण कलान्यासः समाख्यात इति सूच्यते। प्रतिमालक्षणोक्तवशात् ध्यानं कर्तव्यमित्युच्यते। तत आवाहन–स्थापन-संनिधान–निरोधनेषु विषयेऽनुष्ठेयो विशेषः प्रतिपाद्यते। तथा पाद्याचमनार्घ्यप्रदानविषये च कर्तव्यो विशेषश्च कथ्यते। तत्र पाद्यादिविषये प्रोक्तसर्वद्रव्यसंयुक्तं श्रेष्ठम्, एक-द्रव्यहीनं मध्यमं, द्रव्यद्वयहीनं कन्यसं, द्रव्यत्रयहीनं नीचमिति चोक्तम्। गन्धपुष्पधूपदीपनैवेद्यताम्बूलानि मूलमन्त्रेण दातव्यानि। यथाकालं बलिहोमनित्योत्सवनृत्तानि विधेयानीति च सूच्यते। तत उत्तमोत्तममध्यमाधमपूजासु विषये कालः प्रतिपाद्यते। लिङ्गविषये प्रतिमाविषये च कर्षणादिप्रतिष्ठान्तं सर्वं कर्म, तथा संवत्सरोत्सवपवित्रारोहणमासार्चनाङ्कुरार्पणनित्यार्चनादिकं तन्त्रेऽस्मिन्नन्यथाप्रतिपादितं तथा सर्वं समालोच्य विधेयम्। अनेनैव प्रकारेण यथान्यायं सम्यगन्वीक्ष्य देशिकोत्तमेन सौम्यवक्त्रेशपूजाद्यं कर्तव्यमित्युच्यते। अन्ते च यस्य देवस्य यस्यां दिशि मुखं भवति तस्य देवस्य सा दिक् प्राचीति निश्चिता। तद्वशादपरा दिशो दिग्वेदिभिः कल्प्या इत्यभिहितम्। एवं द्वितीयपटलार्थसंग्रहः।



तृतीये पटले सकलार्चनविधिरुच्यते। सकलार्चनं सर्वाभीष्टफलप्रदमित्युच्यते। आचार्यः शौचाचमनस्नान-संध्यावन्दनतर्पणानि कृत्वा, प्रासादं प्रविश्य, पादौ प्रक्षाल्याचम्य भस्मधारणं कुर्यादित्युच्यते। तत आत्मशुद्धिविषये कर्तव्याः क्रिया निरूप्यन्ते। तत्र करन्यासपूर्वकमात्मनः शिवे योजनं, भूतशुद्धिरात्मनः शैवतनुकल्पनप्रकार इत्येते विषयाः प्रतिपाद्यन्ते। तत्र करन्यासविषये विशेषस्तथा कलान्यासविषये कर्तव्य एकत्रिंशत्कलान्यासश्च सूचितः। ततः स्थानशुद्धिद्रव्यशुद्धि-मन्त्रशुद्धिप्रकाराः संक्षेपेण निरूप्यन्ते। ततो द्वारपूजा, बेरशुद्धिप्रकारश्चाभिधीयते। तदनन्तरमासनकल्पनप्रकारस्तत्र मूर्तिकल्पनप्रकारश्च निरूप्येते। तत्र विद्यादेहकल्पनप्रकारो विशेषेण प्रतिपाद्यते। 'सदाशिवो महेशो रुद्रश्चेति त्रिधा शिवदेहः प्रोक्तः। अयमेव विद्यादेह इति व्यपदिश्यते। शिवस्य समवायिनी विमला शक्तिः सदाशिवतनुर्मता। माहेश्वरी मूर्तिः सौम्यस्वरूपिणी। या रौद्री मूर्तिः सा उग्रस्वरूपिणी। 'ब्रह्मा, विष्णुः, रुद्रः, महेशः, सदाशिवः' एते कारणदेवा इत्युच्यन्ते। सदाशिवदेहसिद्ध्यर्थमष्टत्रिंशत्कलान्यासः कर्तव्यत्वेन मतः। रुद्रेशयोः शरीरसिद्ध्यर्थमेकत्रिंशत्कलान्यासः कर्तव्य इत्यादिविषयाः विद्यादेहविषये प्रतिपाद्यन्ते। अष्टत्रिंशत्कलान्यासः प्राक् प्रतिपादित इत्युक्त्वा, एकत्रिंशत्कलान्यासप्रकारो वर्ण्यते। ततः सदाशिवमहेशनृत्तमूर्त्यादीनां ध्यानविषयः प्रतिपाद्यते। एवं कालान्तकगजघ्नादिमूर्तीनां ध्यानविषयश्च प्रोच्यते। ततः पूर्वोक्ताना-मावाहनप्रकारः संक्षेपेण सूच्यते। ततः स्नापनादिकं तथा पाद्यादिकं गन्धपुष्पधूपदीपनैवेद्यं च सर्वं लिङ्गार्चनोक्तवत्कर्तव्यमिति सूच्यते। ततः पञ्चावरणार्चनमथवा चतुस्त्रिद्व्येकावरणेष्विष्टावरणार्चनं प्रागुक्तवद्विधेयमित्यावरणार्चनप्रकारः सूचितः। ततः स्वतन्त्रालये परिवारयुते बलिं समाचरेत्। अत्र होमो नित्योत्सवो वापि कर्तव्यः। अत्रानुक्तं शुद्धनृत्तादिकं सर्वं लिङ्गार्चनोक्त-वत्कर्तव्यम्। शुद्धनृत्तं विना सर्वं कर्मापि वा विधेयमित्यत्र विकल्प उक्तः। नटेशस्य प्रदोषादौ नीराजनविधिर्विधेय इति सूच्यते। उत्सव–स्नपन–दमनारोपण–पवित्रारोहण–कृत्तिकादीप–वसन्तोत्सव–मासोत्सव–नवनैवेद्यकर्म–प्रायश्चित्त–जीर्णोद्धा-रकर्माणि देवस्य कर्तव्यत्वेन विहितानि सर्वाण्यपि देव्या अपि विधेयानीति सूचितम्। देवीविषये पूर्वफल्गुनीसंयुक्ते आषाढेऽ-श्विनीमासे च पूरकर्म कर्तव्यमित्युच्यते। एवं सकलार्चनविषये क्रियाकलापो निरूपितः। महेश्वरविषये गौरी तथा सदाशिव-विषये मनोन्मनी च तत्तन्मन्त्रेण शक्तित्वेन पूजयेत्। गौर्याविषये षड्विंशतिकलान्यासेन मूर्तिकल्पनं कर्तव्यमिति सूच्यते। एवं तृतीयपटलार्थसंग्रहः।

चतुर्थे पटले स्नपनविधिरुच्यते। तत्र प्रथमं अष्टम्यादितिथिषु विषुवायनसंक्रमादिकालविशेषेषु, तथा दुर्भिक्षे, भूमिकम्पादिदुर्निमित्ते, ज्वरमार्यादिरोगपीडने, अवग्रहे च संजाते तद्दोषनिवृत्त्यर्थं, तथा प्रतिष्ठान्ते, उत्सवान्ते, नित्ये, नैमित्तिके, काम्ये च शंकरस्य स्नपनं विधेयमिति स्नपननिमित्तकथनम्। तच्च स्नपनमनेकविधमित्युच्यते। महास्नपनकर्मण्यादौ अङ्कुरार्पणं कर्तव्यमिति सूच्यते। ततो मण्डपविधानं तत्संस्कारश्च वर्ण्येते। ततः सूत्रन्यासपुरःसरं पञ्चकलश–नवकलश–पञ्चविंशतिकलश–एकोनपञ्चाशत्कलशस्नपनेषु कलशस्थापनविधिर्निरूप्यते। अत्र पञ्चकलशस्नपनात्प्रभृत्येकैकावरणस्याधिक्यकल्पनेन एकोन-पञ्चाशत्कलशस्नपनान्तं कलशस्थापनप्रकारो निष्पद्यत इति सूच्यते।

ततोऽष्टोत्तरशतस्नपनविषये प्रथमप्रकारोऽभिधीयते। तत्र द्वाराष्टकमावरणत्रयं च कल्पनीयमित्युच्यते।

ततोऽष्टाधिकसहस्रस्नपनविधौ प्रथमप्रकारो निरूप्यते। तत्र सूत्रन्यासपुरःसरं चतुरश्रे मण्डले चत्वारिंशद्व्यूहाः कल्पनीयाः। तत्र प्रतिव्यूहं पञ्चविंशतिकलशाः स्थापनीया इत्युच्यते।

ततोऽष्टोत्तरशतस्नपनविषये द्वितीयप्रकारः प्रतिपाद्यते। अत्र चत्वारि द्वाराणि कल्पनीयानि, मध्ये पञ्चविंशति-कलशाः, कोणेषु एकविंशतिकलशाश्च स्थाप्या इति कलशस्थापनप्रकारः कथितः।

ततोऽष्टाधिकसहस्रस्नपनविषये द्वितीयप्रकारोऽभिधीयते। अत्र सूत्रन्यासपुरःसरं चतुरश्रे मण्डले चतुर्दशस्वावरणेषु कलशस्थापनप्रकारः प्रोच्यते।

ततः कुम्भस्थापनाय स्थण्डिलकल्पनविषये शालिमाननिरूपणं, तदनुसारेण तिलतण्डुलमानकथनं, कुम्भमानकरकमान-कथनं, कुम्भेषु सूत्रवेष्टनकूर्चन्यासप्रकारकथनं, कुम्भेषु द्रव्यन्याससरत्नन्यासप्रकार इत्यादिविषया निरूप्यन्ते।

ततः पञ्चकलश—नवकलश—पञ्चविंशतिकलशस्नपनविषयेषु द्रव्यनिरूपणम्।

ततः पञ्चविंशतिस्नपनविषये प्रोक्तस्यान्तरावरणस्य त्यागेन षोडशस्नपने कलशस्थापनविधिः सिध्यतीति षोडशस्न-पनप्रकारोऽभिहितः। ततः षोडशस्नपनविषये द्रव्यनिरूपणं कृतम्।

तत एकोनपञ्चाशत्स्नपनविषये द्रव्यनिरूपणम्। ततः पञ्चकलश—नवकलश-पञ्चविंशतिकलश-एकोनपञ्चाशत्कलश-स्नपनविषयेषु देवतान्यासप्रकारो वर्ण्यते। अत्र प्रसङ्गाद् द्वात्रिंशत्कलशस्नपनप्रकारो निरूप्यते। तत अष्टोत्तरशतस्नपनविषये द्रव्यनिरूपणम्। अत्र द्रव्यनिरूपणे प्रकारत्रयं वर्ण्यते। द्रव्यनिरूपणे चान्ते प्रसङ्गात् कषाय—मार्जनोदकयोर्लक्षणं कथ्यते। अथाष्टोत्तरशतस्नपनविषये देवता निरूप्यन्ते। तत एकाशीतिकलशस्नपनप्रकारो निरूप्यते। अत्र नवव्यूहाः कल्पनीयाः। प्रतिव्यूहं नव कलशाः स्थापनीयाः। द्वाराणि चात्राष्ट भवेयुरित्युच्यते।

ततोऽष्टोत्तरसहस्रस्नपनविषये द्रव्यनिरूपणम्। प्रसङ्गाद् द्रव्यनिरूपणविषये रत्नोदक-लोहोदक-धातूदक-बीजोदक-गन्धोदक--मृदुदक—मार्जनोदक—परिमार्जनोदक--पत्रोदक- पुष्पोदक—माल्योदक--अस्त्रोदक--फलोदक--कषायोदक—आढ्योदक-कान्तोदक--मूलोदक—ब्रह्मकूर्च—वल्कलोदकानां लक्षणमभिहितम्।

ततोऽष्टोत्तरसहस्रस्नपनविषये तृतीयः प्रकारो वृत्तमण्डले कल्पनीयः प्रतिपाद्यते। अत्र चतुर्दशस्वावरणेषु कलश-स्थापनप्रकारः कलशसंख्यानिरूपणपुरःसरं सद्रव्यं च प्रतिपाद्यते। अष्टोत्तरसहस्रस्नपनविषये द्रव्यन्यासे उत्तममध्यमकन्यसप्रकारा वर्ण्यन्ते। अष्टोत्तरसहस्रस्नपनविषये देवतान्यासप्रकारो निरूप्यते।

अथाष्टोत्तरपञ्चशतस्नपने तथाष्टोत्तरद्विशतस्नपने च कलशस्थापनप्रकारो निरूप्यते। अत्रोभयत्रापि चतुरश्रमण्डले व्यूहक्रमेण कलशविन्यासप्रकारोऽभिहितः।

ततः स्नपनद्रव्याणां मानं निरूप्यते। ततो विहितद्रव्याणामभावे आद्यानां द्रव्याणां निरूपणम्। पश्चाद् द्रव्यन्यासप्रकारो निरूप्यते।

ततो होमकर्मनिरूपणम्। तत्र कुण्डे वा स्थण्डिले वा होमं कुर्यादिति विकल्पोक्तिः, होमद्रव्याणां निर्देशः, तथाष्टकुण्डपञ्चकुण्डचतुष्कुण्डानुसारेण समिधां निर्देशः, तथा होमकर्मप्रकारश्च दृश्यन्ते।

ततो लिङ्गविषये स्नपनकलशाभिषेकविधिरुच्यते। ततः सकलविषये स्नपनकलशाभिषेकप्रकारोऽभिधीयते। अत्र चित्रादिषु सकलेषु विषये दर्पणादौ स्नपनं कर्तव्यमिति सूच्यते। देव्याः स्नपनविषये द्रव्यभेदो न विद्यते। देवताभेद एव दृष्यत इत्युच्यते। देवतानिरूपणे विशेषश्च प्रतिपाद्यते।

ततः सर्वदोषापनुत्तये, सर्वाभीष्टसिद्ध्यर्थं च क्षीराद्यैः स्नपनविशेषैः परमेशानं स्नापयेदित्युक्त्वा तेषां स्नपनविशेषाणां फलान्तरप्रदर्शनम्। तेषां स्नपनानां कर्तव्यकालनिर्देशस्तत्स्नपननिर्वर्तने विशेषप्रदर्शनं च।



अथ नित्यकर्मणि पञ्चविंशतिस्नपनं प्रशंसितम्। उत्तमोत्तमपूजायामष्टोत्तरशतावधि स्नपनं कर्तव्यम्। नैमित्तिककर्मणि पञ्चविंशतिसंख्यादिसाष्टसहस्रनवावधिस्नपनानि विधेयानीत्यादिविषयाः स्नपनविषये सूच्यन्ते। एवं स्नपनविषये नित्यं, नैमित्तिकं, काम्यमिति त्रैविध्यमस्ति। प्रत्यवायनिवारणाय नित्यनैमित्तिके स्नपने कुर्यात्। काम्यार्थं काम्यस्नपनं कर्तव्यमिति च सूचितम्।

क्रियामन्त्रादिभेदेन तन्त्रभेदो भवेत्। तत्र शैवोक्तमेव कर्तव्यम्। नान्यशास्त्रतः करणीयमिति च सूचितम्।

ततः स्नपनादिकर्मनिर्वर्तनाय आद्यस्य गुरोर्निरूपणम्। विशेषत्रापि तादृशेनाचार्येणैव निर्वर्तनीयेत्युक्त्वा विशेष-पूजाविधिप्रदर्शनम्। ततो नित्यनैमित्तिककर्माचरणविषये कर्तव्यप्रकारनिरूपणम्। तत्र नैमित्तिककर्माचरणे कालो द्विविधो भवतीत्युक्त्वा तत्कालविशेषप्रतिपादनम्। तत आचार्यपूजाविषयप्रदर्शनम्। तत्र यागोपयुक्तं स्वर्णाम्बरादिकमाचार्याय प्रदेयं, तत्सम्भोगाय कल्पयेदित्युक्तम्। एवं चतुर्थपटलार्थसंग्रहः।

पञ्चमे पटले नित्योत्सवविधिः प्रतिपाद्यते। तत्र प्रथमं नित्योत्सवो नित्यपूजाङ्गभूत इति प्राशस्त्यकथनम्। ततः शिवाग्रे तद्वामे वा, प्रासादमण्डपादौ वा गोमयापलेपनादिना संस्कृते स्थले लक्षणयुक्तं पात्रं स्थापयेदित्युक्त्वा, अत्र लिङ्गाक्षतलिङ्गपात्र निर्माणप्रकारोऽक्षलिङ्गाक्षतलिङ्गयोर्निर्माणप्रकारश्चाभिधीयते। एवं पुष्पलिङ्गनिर्माणप्रकारश्च सूच्यते। ततो नित्योत्सवविषयेऽक्षलिङ्गाक्षतलिङ्गपुष्पलिङ्गानामुपयोक्तव्यकालनिरूपणम्। ततः पुष्पाक्षताक्षलिङ्गेषु चन्द्रशेखरयुक्तं तद्विहीनं वा पाशुपतास्त्रं पूजनीयमित्युक्त्वा तद्विषये ध्यानार्थं मिश्रशान्तोग्रमूर्तीनां स्वरूपं निरूप्यते। अथवा प्रतिमाकारेण पाशुपतास्त्र-मूर्तिश्चन्द्रशेखरमूर्तिश्च कल्पनीयेत्युच्यते। ततः पादुकानिर्माणप्रकारः कथ्यते। पादुकयोर्वृषभोऽनन्तो वा पूजनीयः, पादुकयोः परितो लोकपालाश्च पूजनीया इत्युच्यते।

ततो नित्योत्सवविधानप्रकारोऽभिधीयते। तत्र लिङ्गपाशुपतास्त्रचन्द्रशेखरमूर्तिपादुकाख्यैश्चतुर्भिर्युक्तं वा त्रिभिर्द्वाभ्यां वा युक्तं नित्योत्सवमाचरेत्। केवलपाशुपतास्त्रेण युक्तो वा नित्योत्सवो विधातव्य इति विकल्पा अभिहिताः। तत उत्सवकाले प्रयोक्तव्यानां रागतालादीनां प्रदर्शनम्। प्रदक्षिणकरणप्रकारनिरूपणम्। प्रदक्षिणकरणानन्तरं कर्तव्यानां क्रियाकलापानां निरूपणम्। अन्ते सकलानामन्यदेवानां देवीनां च विषये नित्योत्सवकरणप्रकारसूचनम्। एवं पञ्चमपटलार्थसंग्रहः।

षष्ठे पटले महोत्सवविधिः प्रोच्यते। तत्र प्रथमं 'ध्वजारोहाद्यवरोहान्ता क्रिया उत्सवः' इत्युत्सवस्वरूपविवरणम्। ततो 'ध्वजाङ्कुरो ध्वजाङ्गं भवति। अतस्तदङ्गं ध्वजात्पूर्वं कर्तव्यम्' इति ध्वजाङ्कुरकर्म सूच्यते। ततः 'तीर्थर्क्षादौ निश्चित्य ध्वजारोहणमारभेत्' इत्युक्त्वा तीर्थर्क्षनिर्णयप्रकारोऽभिधीयते। अनन्तरम् 'अधिवासपूर्वं ध्वजमारोपयेत्' इत्युक्त्वा ध्वजाधिवासविधिः प्रतिपाद्यते। तत्र ध्वजपटलक्षणं, ध्वजपटे वृषादिलेखनप्रकारः, नयनोन्मीलनं, वृषभयागकरणप्रकार इत्येते विषया अभिधीयन्ते।

ततः प्रातर्ध्वजपटं संपूज्य, तं त्रिशूलेन सहितं, देवेशेन युक्तं तद्वियुक्तं वा रङ्गे शिबिकायां वा आरोप्य नानानृत्तवाद्यसहितं ग्रामप्रदक्षिणं नीत्वालयं प्रवेशयेदित्युच्यते। ततो 'ध्वजारोहादिदिनेऽधिवासदिने वा ध्वजदण्डं स्थापयेद्' इत्युक्त्वा ध्वजदण्डस्थापनप्रकारो निरूप्यते। तत्र ध्वजदण्डप्रमाणं, ध्वजदण्डार्हा वृक्षाः, ध्वजयष्टिसंपादनप्रकारः, तत्र स्कन्धवंशयोजनप्रकारः, रज्जुसंपादनप्रकारः, ध्वजदण्डस्थापनविषये रत्नन्यासादिक्रियानिरूपणं, ध्वजदण्डस्थापनयोग्यस्थान-कथनं, ध्वजदण्डमूले वेदिकाकरणप्रकार इत्यादिविषयाः कथ्यन्ते। ततो ध्वजारोहणविधिः प्रतिपाद्यते। तत्रान्ते ध्वजारोहात्प्रभृति ध्वजावरोहावसानपर्यन्तमेककालं द्विकालं त्रिकालं वा वृषं पूजयेदित्युच्यते।

ततो भेरीताडनविधिरुच्यते । तत्र भेरीताडनं यथाविधि रात्रौ कर्तव्यमिति सूच्यते । भेरीताडनप्रकारः, तत्काले विनियोज्यानां रागतालादीनां कथनमित्यादिविषया निरूप्यन्ते ।

तत उत्सवो भेरीताडनपूर्वो ध्वजारोहणपूर्वोऽङ्कुरार्पणपूर्व इति त्रिविधो भवतीत्युक्त्वा, तत्प्रकारत्रयेऽपि विधेयाः क्रियाविशेषाः प्रतिपाद्यन्ते ।

ततो यागशालानिर्माणप्रकारः, तत्र वेदिकाकल्पनप्रकारः, यागशालायां शिविरविसर्जनानन्तरं विधेयः संस्कारः, वेदिकायां स्थण्डिलकल्पनप्रकारः, तत्र कुम्भस्थापनप्रकारः, मङ्गलाष्टकदशायुधनिवेशनप्रकार इत्यादिविषयाः कथ्यन्ते ।

ततः प्रतिसरविधिरभिधीयते । तत्र सूत्रलक्षणं, भस्माधारपात्रे रक्षासूत्रन्यासप्रकारः, देवदेव्योः प्रतिसरबन्धने विशेषनिरूपणं, त्रिशूलदशायुधादीनां सूत्रबन्धनप्रकार इत्येते विषयाः सप्रपञ्चं प्रतिपाद्यन्ते ।

ततो यागारम्भस्य पूर्वेद्युस्तद्दिने वा तीर्थार्थमङ्कुरार्पणं कर्तव्यमिति तीर्थाङ्कुरकर्मणः सूचनं क्रियते ।

ततो यागशालायां विधेयः पूजाविधिः, होमविधिश्च प्रतिपाद्यते । ततो होमान्ते तदादौ वा हविर्दद्यादिति हविर्दानविधिः सूचितः ।

ततो होमविध्यन्ते बलिदानं कर्तव्यमित्युक्त्वा बलिदानविधिः सप्रपञ्चं निरूप्यते । तत्र नवाहोत्सवविषये, द्वादशाहोत्सवविषये च दिनदेवानां बलिद्रव्याणां विशिष्य निरूपणं दृश्यते । अन्ते सायंप्रातर्बलिं दद्यादिति बलिदानकालनिरूपणं दृश्यते ।

अनन्तरं 'बलिदानान्ते बलिकाले वा बेरयात्रा कर्तव्या' इत्युक्त्वा बेरयात्राप्रकारो विशेषतया निरूप्यते । तत्र वाहनक्रमो बेरक्रम इत्यादिविषयाः प्रतिपाद्यन्ते । अन्ते च प्रतिदिनमुत्सवकालेऽह्नि रात्रौ च बेरयात्रा विधेयेत्युक्तम् । यानान्ते देवाय स्नपनमवश्यं कर्तव्यमित्युच्यते । मृगयायां विशेषेण स्नपनं कर्तव्यमिति सूच्यते । ततो रथारोहणविषये विशेषः प्रतिपाद्यते । यानकाले वर्षादिसंभवे कर्तव्यस्य प्रायश्चित्तस्य विधिर्निरूप्यते । ततः 'तीर्थाहःपूर्वे पञ्चमे दिने चतुर्थे दिने वा तैलाभ्यङ्गमाचरेत्' इत्युक्त्वा तैलाभ्यङ्गविधिः कथ्यते । पश्चात् तीर्थाहात् पूर्वदिवसे कर्तव्या नटेशभ्रमणविधिः प्रतिपाद्यते । तत आचार्यतृप्तये विधेयो मात्रादानविधिर्निरूप्यते । अत्र आचार्येशिवयोर्भेददर्शनेऽधोगतिप्राप्तिरित्युच्यते । ततस्तीर्थोत्सवविधिः प्रतिपाद्यते । अनन्तरं चूर्णोत्सवविधिरुच्यते । ततः 'समुद्रादौ महाजले महातीर्थं प्रकर्तव्यम्' इत्युक्त्वा महातीर्थविधेः प्रतिपादनम् । ततो ध्वजावरोहणविधिः प्रतिपाद्यते । तत अङ्कुरार्पणे, ध्वजारोहणे, यागाधिवासने, होमारम्भे, नृत्तमूर्त्युत्सवे, तीर्थे, शुद्धस्नपनकाले चाचार्यं कर्ता वस्त्रहेमाङ्गुलीयकैः पूजयेदित्युच्यते । तत आचार्यदक्षिणाविषये श्रेष्ठमध्यमकन्यसक्रमो निरूप्यते । ततो भक्तोत्सवविधिः प्रदर्श्यते । ततः संवत्सरोत्सवकाले यदा मासोत्सवो भवेत्तदा मासोत्सवविधिकरणप्रकारः संक्षेपेण प्रतिपाद्यते । तत एकाहोत्सवविधिर्निरूप्यते । तत्रैकाहोत्सवः कर्तुरभिलाषवशात् बहुकालेषु कर्तव्य इत्युक्त्वा बहुकालाः प्रदर्श्यन्ते । ततो वारपूजाविधिः प्रतिपाद्यते । तत्र प्रतिवारमुपयोज्यानि पत्राणि रत्नानि च निर्दिश्यन्ते । ततो 'वारपूजावसाने वारोत्सवमाचरेत्' इत्युक्त्वा वारोत्सवविषये विधेयो विशेषः कथ्यते । ततः सामान्यत उत्सवविषये 'ध्वजे ध्वजो नेष्टः, वृषभध्वजः कर्तव्यः' इत्यादिना शिवोत्सवे ध्वजारोहणे कृतेऽन्यदेवानां ध्वजारोहणं न कर्तव्यमित्यादि कर्तव्याकर्तव्यप्रतिपादकरूपा विशेषविषयाः प्रतिपाद्यन्ते । ततोऽस्मिन्कामिकागमे वत्सरः 'सौरः चान्द्रः' इति द्विधा प्रोक्तः । तत्र सौरः श्रेष्ठः, चान्द्रो मध्यमः, सावनाख्यो वत्सरभेदोऽधम इत्युच्यते । तत उत्सवविषये प्रकारान्तरेण क्रियाकलापः प्रतिपाद्यते । अन्ते ध्वजस्थापनं द्वादशाब्दावसानान्ते कर्तव्यम् । जीर्णादिदोषसंभवे ध्वजान्तरं निवेशयेदित्युक्तम् । एवं षष्ठपटलार्थसंग्रहः ।



सप्तमे पटले नीराजनविधिरुच्यते । तत्र प्रथमं नीराजनस्य कालनिरूपणम् । ततो नीराजनदीपपात्रस्थापनार्थं गर्भगृहेऽर्धमण्डपे स्नपनमण्डपे महानसे वा स्थण्डिलं, मण्डलं वा कृत्वा तत्रास्त्रमन्त्रेण प्रोक्षयेदित्युच्यते । ततो नीराजनार्थं बलिपात्रोक्तवर्त्मना दीपाधारसहितानि पात्राणि विधेयानीत्युक्त्वा तत्पात्रलक्षणप्रमाणादिनिरूपणम् । ततो निष्कले, प्रतिमासु, विशिष्य नृत्तमूर्तिविषये च दीपाधारेषु निक्षेप्याणां द्रव्याणां प्रतिपादनम् । दीपपात्रदेवतानिरूपणम् । दीपपात्रेषु निक्षेप्याणां द्रव्याणां परिमाणनिरूपणम् । नीराजनकरणप्रकारप्रतिपादनम् । ततो भस्मना तिलकधारणविधिरुच्यते । ततो भस्मदानविधिः प्रतिपाद्यते । ततः सज्वलानि निर्ज्वालानि च पात्राण्याहृत्य पदभ्रमे वृषभाग्रे गोपुरान्तिके वृक्षमूले वा निक्षिपेदित्युच्यते । नीराजनप्रयुक्तानि द्रव्याणि गुरवे दद्यादथवा तेनैव वह्निना दहेदित्युच्यते । अन्ते राज्ञोऽभिषेककालादौ, आचार्याभिषेकेऽपि नीराजनं विधेयमित्युक्त्वा तन्नीराजनविधौ विशेषप्रकारोऽभिधीयते । एवं सप्तमपटलार्थसंग्रहः ।

अष्टमे पटले कृत्तिकामासे दीपारोपणविधिरभिधीयते । तत्र प्रथमं दीपारोपणकालनिर्णयप्रकारो निरूप्यते । तदर्थं नक्षत्रतिथिनिर्णयप्रकारा वर्ण्यते । ततोऽत्राङ्कुरार्पणं कुर्यादित्युच्यते । दीपारोपणस्य पूर्वेद्युरधिवासनं कर्तव्यमित्युक्तम् । तत्र दीपदण्डस्थापनयोग्यस्थाननिरूपणम् । ततो दीपदण्डप्रमाणकथनं, दीपदण्डयोग्यवृक्षनिरूपणं, दीपदण्डे कीलयोजनप्रकारः, तत्र कीलप्रमाणकीलसंख्याकथनं, पात्रधारणार्थं प्रतिकीलं चक्रयोजनप्रकारवर्णनं, प्रतिचक्रं दीपिकायोजनप्रकारनिरूपणं, दीपिकासंख्याकथनं, दीपदण्डे बहिःशुष्कैर्नारिकेलदलादिभिराच्छादनं कार्यमित्यादिविषया अभिधीयन्ते । ततो दीपदण्डे दक्षिणभागे दण्डत्रयप्रसिद्ध्यै द्वारकल्पविषये कल्प-अनुकल्प-उपकल्पाख्यप्रकारत्रयनिरूपणम् । दीपदण्डस्थापनविषये मालाकाराद्याकारभेदो वर्ण्यते । ततो दीपारोपणं प्रासादे कुत्र कुत्र कर्तव्यमिति तत्तत्स्थानानां नाम्ना निर्देशः । अत्र ग्रामादिष्वपि बहिर्दीपारोपणं कर्तव्यमिति सूच्यते । ततः 'पूर्वेद्यु अधिवासनं कर्तव्यम्' इति पूर्वं सूचितस्याधिवासकर्मणः प्रतिपादनम् । अधिवासे दीपदण्डस्थापनं, तन्मूले वेदिकल्पनप्रकारः, शिविरविसर्जनपूर्वकं तत्र कर्तव्यसंस्कारनिरूपणं, तत्र विधेयस्य होमविधेः प्रतिपादनमित्यादिविषया निरूप्यन्ते । ततोऽधिवासानन्तरं द्वितीयदिवसे चतुर्दिक्षु विदिक्षु च कूटानि कल्पनीयानीत्युक्त्वा कूटकल्पनप्रकारवर्णनम् । ततो नन्दीमुखे दिवाकरे सायंकाले दीपदण्डमभ्यर्च्य, तत्र वस्त्रयुग्मवेष्टनम् । ततः कूटेषु, स्थण्डिलेषु, कुण्डेषु वाधिवासहोमेन सह होमं कुर्यादित्युक्त्वा, तत्र विधेयस्य होमविधेः प्रतिपादनम् । पूर्णाहुतिप्रदानान्ते सर्वान्दीपानेकीकृत्य पात्रे स्थापनम् । ततः सर्वालंकारसंयुक्तं नानावाद्यनृत्तसंयुक्तं बेरयात्रापुरःसरं दीपदण्डे मूर्धादिपादपर्यन्तं दीपारोपणप्रकारो निरूप्यते । अत्र बेरयात्रां विनापि दीपारोपणं विधेयमिति पक्षान्तरं सूच्यते । तत्र दीपारोपककर्तुः परिचारकस्य देशिकेन वस्त्राद्यैः पूजा कर्तव्येत्युच्यते । ततो ज्योतिर्लिङ्गमनुस्मृत्य पूर्वकल्पितकूटानां दाहो विधेय इत्युच्यते । अत्र कूटदाहं विनान्यत्कर्म समाचरेदिति पक्षान्तरं च सूच्यते । ततस्तोरणाधोभागे देवं दीपदण्डप्रदक्षिणं कारयित्वा हर्म्यप्रदक्षिणपूर्वं सभास्थानमण्डपं नयेत् । ततः प्रासादादिषु सर्वत्र दीपारोपणं विधेयम् । ततः परिवेषक्रमेण देवं स्वस्थानं प्रापयेत् । तत्र बेरे लिङ्गे च स्नपनं कारयेन्नवेति विकल्पोऽभिधीयते । ततो नारिकेलफलान्वितं पृथुकं देवाय निवेदयेदिति दीपारोपणविधौ क्रियाकलापः प्रादर्शि । इमां दीपारोपणक्रियामङ्कुरार्पणं विनापि कारयेदिति चोक्तम् । तत आचार्यादिभ्यो दक्षिणादानप्रकारः कथ्यते । इदं दीपारोपणकर्म राजगृहे ग्रामादौ च कर्तव्यम् । रोगनिवृत्तये गोशालायां च दीपारोपणकर्म कर्तव्यमित्युच्यते । अन्ते च दीपारोपणकालविषये नक्षत्रतिथिनिर्णयप्रकारः कथ्यते । एवमष्टमपटलार्थसंग्रहः ।

नवमे पटले मार्गशीर्षमासे पुष्यमासे च कर्तव्यो विशेषपूजाविधिः कथ्यते । तत्र प्रथमं मार्गशीर्षमासे आर्द्रानक्षत्रयुक्ते दिने देवस्य घृतस्नानसमन्वितं स्नपनमथवा केवलस्नपनं वा कारयित्वा, विशेषेण गन्धाद्यैरभ्यर्च्य, नानागानसमन्वितं ग्रामप्रदक्षिणं नीत्वा देवं धाम प्रवेशयेत् । अथवा रात्रौ दिवापि वा बलिहोमाभ्यां सह सर्वालंकारसंयुक्तं बेरप्रदक्षिणं

नीत्वा, चूर्णोत्सवेन सह तीर्थोत्सवं कारयित्वा देवमालयं नयेदित्युच्यते। ततस्तत्र सायंकाले विधेयो डोलारोहविधिः प्रतिपाद्यते। तत्र डोलाकल्पनप्रकारः, डोलायां देवतायजनं च कथ्यते। ततो डोलायां फलकोर्ध्वे शिवं, वामे देवीं, मध्यमे सेनानीं चारोहयेत्। तत्र नानागाननृत्तवाद्यसमोपेतं हरं संतोषयेदिति डोलोत्सवविधिर्निरूप्यते। ततो डोलारोहणमिदमन्यस्मिन्नपि काले कुर्यात्। प्रत्यहं वा कुर्यादिति पक्षान्तरमपि सूच्यते। डोलारोहणं विना केवलडोलाचलनमात्रमपीष्टमिति चोक्तम्। एतत्पक्षे डोलायां देवेशस्यावाहनं कृत्वा तत्सान्निध्यं ध्येयम्। एवं डोलारोहणविधिप्रतिपादनं दृश्यते। मार्गशीर्षमासे मघानक्षत्रे शम्भोर्देव्याश्च विशेषेण घृतसमन्वितं पायसं दापयेदित्युच्यते।

पुष्यमासे पुष्यनक्षत्रे क्षौद्राभिषेचनं महाहविर्निवेदनं, नैवेद्यान्ते बेरयात्रा च कर्तव्येति पुष्यमासपूजाविधिः प्रदर्शितः। एवं नवमपटलार्थसंग्रहः।

दशमे पटले माघमासे कर्तव्यो घृतकम्बलपूजाविधिरभिधीयते। तत्रादौ माघमासे मघानक्षत्रे घृतकम्बलं कुर्यादिति कालनिर्देशः। ततो घृतसंपादनं, तत्संस्कारश्च वर्ण्यते। ततः पञ्चगव्यपञ्चामृतैर्विशेषस्नपनं विशेषपूजां च विधाय होमं च कुर्यादित्युक्त्वा तत्र कर्तव्यो होमविधिः प्रतिपाद्यते। ततः प्रातर्मध्याह्ने च पूर्ववत्स्नपनसमन्वितं विशेषपूजां च कृत्वा, सर्वालंकारसंयुतं ग्रामप्रदक्षिणपूर्वकं पूर्वसंस्कृतस्य घृतस्य लिङ्गे पीठान्तं सर्वत्र लेपनं कर्तव्यम्। ततो गन्धाद्यैरर्चयित्वा कम्बलेन वेष्टयेत्। ततस्ताम्बूलसमन्वितं हविर्निवेदयेत्। ततः संध्यान्तरे परेद्युर्वा कम्बलादि विसर्ज्य पूर्ववत् पूजयेत्। यथासंभवमाचार्याय दक्षिणादानं विधेयम्। एतत्कर्माङ्कुरार्पणपूर्वकमथवा तद्रहितं वा कुर्यादिति सूच्यते। एवं दशमपटलार्थसंग्रहः।

एकादशे पटले माघमासे विधेय शिवरात्रिपूजाविधिरुच्यते। तत्रादौ शिवरात्रिव्रताचरणफलनिरूपणम्। ततो 'माघमासे शुक्लपक्षचतुर्दशीरात्रिः शिवरात्रिः, तस्यामेव शिवालये शिवलिङ्गविषये शिवरात्रिपूजा कर्तव्या' इति कालनिर्देशः। ततः पूर्वेऽह्नि कृतस्नानोपवासेन साधकेन श्रद्धया पूजा कर्तव्येत्यधिकारिनिरूपणम्। ततो रात्रौ चतुर्षु यामेषु पूजाविधिः प्रतिपाद्यते। तत्र प्रथमे यामे पायसान्नं, द्वितीये यामे कृसरान्नं, तृतीये यामे गौडान्नं, चतुर्थे यामे शुद्धान्नं च निवेदयेदिति निवेदनप्रकारः कथ्यते। ततः पूजान्ते विधेयस्य होमविधेः प्रतिपादनम्। स्वयं कर्तुमशक्तश्चेदन्येन वा स्वार्थे व्रताचरणं कर्तव्यमिति च सूच्यते।

ततो रात्रौ जागरणं कृत्वा प्रभाते कृतनित्यक्रियो विधिपूर्वकं देवस्य स्नपनं कृत्वाऽभ्यर्च्याचार्यपूजां कुर्यात्। तत्र वित्तशाठ्यं विना दक्षिणादानं कर्तव्यम्। तथा लिङ्गिनां, शिवभक्तानां, व्रतगानामतिथीनां च यथाशक्ति पूजा कर्तव्या। ततः साधकः पूजां सम्यग् यथाविधि समाप्य, स्वगृहं गत्वा, बन्धुजनैः साकं यथावत्पारणां समाचरेदिति शिवरात्रिपूजाविधौ क्रियाकलापः प्रादर्शि। एवमेकादशपटलार्थसंग्रहः।

द्वादशे पटले फाल्गुनमासे कर्तव्यो गन्धपूजाविधिः कथ्यते। तत्रादौ फाल्गुनमासे उत्तरफल्गुनीनक्षत्रयुक्ते दिने गन्धपूजा कर्तव्येति कालनिरूपणम्। ततो विशेषस्नपनविशेषपूजासमन्वितं गन्धपूजाविधिरनुष्ठेय इत्युच्यते। ततश्चन्दनस्य, तत्र योजनीयानामगरुकुङ्कुमप्रभृतीनां गन्धद्रव्याणां च प्रमाणकथनम्। घृतकम्बलविध्युक्तमार्गेण होमो विधेयः। लिङ्गे पीठे च सर्वत्र गन्धैरालेपनं कर्तव्यम्। कम्बलवेष्टनं विनान्यत्सर्वमपि कर्म घृतकम्बलविध्युक्तवर्त्मना विधेयमिति सूचनम्। सर्वेषु रोगसंभवेषु तथोत्पातसूचकाद्भुतेषु दृश्यमानेष्वभिचारकृतदोषेषु च पूर्वोक्तदोषनिवृत्त्यर्थं, वाञ्छितावाप्तये च गन्धपूजाविधिरनुष्ठेय इति गन्धपूजाविधिफलं निरूप्यते। एवं द्वादशपटलार्थसंग्रहः।



त्रयोदशे पटले चैत्रमासे कर्तव्यो दमनपूजाविधिः प्रतिपाद्यते। तत्र प्रथमं दमनविटपावतारकथाप्रतिपादनपूर्वकं तत्पूजाफलनिरूपणम्। ततो दमनाहरणप्रकारकथनम्। ततः सायंकाले विधेयोऽधिवासविधिः, प्रातराचरणीयविधिश्च वर्ण्यते। अत्र पवित्रारोपणविधानक्रमेण शिवमर्चयेदित्यनुष्ठानक्रमः सूच्यते। अन्ते च 'भगवन्नतिरिक्तं वा हीनं वा यन्मया कृतं तत्सर्वं पूजाकर्म संपूर्णमस्तु' इति प्रार्थनीयमित्युच्यते। दमनपूजाविध्याचरणानन्तरं परितोषकरं गुरुपूजनं, दीक्षितानां तृप्तिं च कुर्यादिति कथ्यते। गृहस्थो ब्रह्मचारी वा य एनं विधिमाचरति, तस्य चैत्रमासपूजाजपादिफलसिद्धिः स्यादित्यभिधीयते। एवं त्रयोदशपटलार्थसंग्रहः।

चतुर्दशे पटले चैत्रमासे विधेयो वसन्तोत्सवविधिरभिधीयते। तत्रादौ 'चैत्रमासे वसन्तोत्सवः कर्तव्यः, स चेष्टदः' इति वसन्तोत्सवफलं सूच्यते। अत्र पूर्वेद्युः कौतुकबन्धनं विधेयमिति सूचितम्। ततो मन्दीभूते दिवाकरे परिवेषक्रमं कृत्वा सर्वालंकारसमोपेतं देवं ग्रामप्रदक्षिणपूर्वकमुद्यानवनं नयेदित्युक्त्वोद्यानवनालंकारवर्णनं प्रतिपाद्यते। तत उद्यानवने विधेयोत्सवप्रकारस्य निरूपणम्। तत्र सेवार्थं वसन्तः कुसुमायुधश्च समागताविति मत्वा तयोः पूजा कर्तव्येत्युक्त्वा तत्पूजाप्रकारो वर्ण्यते। ततो नृत्तवाद्यसमोपेतैर्दिव्यगानैः कालं व्यपोह्य देवमालयं नीत्वा, स्नपनं कृत्वा विशेषेण पूजां कुर्यादिति वसन्तोत्सवे क्रियाकलापोऽभिधीयते। उत्सवकर्तुः सर्वकामावाप्तिः स्यादित्युत्सवफलं चोक्तम्। एवं चतुर्दशपटलार्थसंग्रहः।

पञ्चदशे पटले वैशाखमासे कर्तव्यः शीतकुम्भविधिः कथ्यते। वैशाखमासे विशाखानक्षत्रयुक्ते दिने शीतकुम्भविधिः कर्तव्य इति कालो निरूपितः। ततोऽवग्रहे ग्रामदाहादिके चतुष्पाद्रोगसंभवे ज्वरमार्यादिसंभवे तद्दोषापनुत्तये, तथोत्पातसूचकेषु सर्वेष्वद्भुतेषु च सर्वारिष्टनिवृत्तये, प्रायश्चित्तादिविषये च शीतकुम्भविधिरनुष्ठेय इति चोक्तम्। ततो लिङ्गमूर्धनि त्रिपादीं विन्यसेदित्युक्त्वा त्रिपादीकरणप्रकारस्तत्र देवतान्यासादिप्रकारश्च कथ्यते। ततः प्रधानकुम्भोपकुम्भयोः प्रमाणलक्षणादिनिरूपणम्। तत्र पृष्ठे सुषिरसंयुक्तं हेमनालसमन्वितं प्रधानकुम्भं स्थण्डिले निवेशयेत्। तदग्रे पृष्ठरन्ध्रहीनमुपकुम्भं दक्षिणभागे विन्यसेदिति प्रधानकुम्भोपकुम्भयोर्न्यासप्रकारो न्यरूपि। ततः प्रधानकुम्भे उपकुम्भे च कर्तव्यः क्रियाविशेषः प्रतिपाद्यते। ततः शीतकुम्भविधावनुष्ठेयो होमविधिः, जपविधिश्च प्रतिपाद्यते। होमकाले गोस्तनेभ्यो विशेषतः क्षीरं पातयेदित्युच्यते। ततोऽभिषेकप्रकारनिरूपणम्। अभिषेकानन्तरं विधेयस्य नैवेद्यविधेर्निरूपणम्। नानावाद्यघोषैः जयशब्दैः स्तोत्रैर्नर्तनविशेषैश्च देवं संतोषयेदित्युच्यते। यावता कालेन काङ्क्षितं फलं सिध्यति तावत्कालं प्रत्यहमेवं देवं पूजयेदित्युच्यते। ततः प्रथमेऽह्नि कर्तव्यो विशेषप्रकारो वर्ण्यते। अन्ते सप्ताहं द्विसप्ताहं त्रिसप्ताहमेकमासं द्विमासं त्रिमासं वा विधिमेनं समाचरेदित्युच्यते। तत आचार्यादीनां दक्षिणादानप्रकारः, तेषां भोजनार्थं व्यञ्जनान्वितत्तण्डुलदानप्रकारश्च कथ्यते। प्रत्यहं भक्तानां, योगिनां, दीनानाथजनानां भोजनं कारयितव्यमित्युच्यते। एवं पञ्चदशपटलार्थसंग्रहः।

षोडशे पटले ज्येष्ठमासे कर्तव्यः फलपूजाविधिरुच्यते। ज्येष्ठमासि मूलनक्षत्रयुक्ते दिने फलपूजा कर्तव्येति कालनिरूपणम्। पञ्चामृतसमन्वितं विशेषस्नपनं विधाय पायसनैवेद्येन सह विशेषपूजां कृत्वा, समिदाज्यान्नकैः सह विशेषहोमं च विधाय, नानाफलसमायुक्तैर्द्रव्यैः पूर्णाहुतिं कुर्यात्। ततः पीठादिलिङ्गमूर्धान्तं फलैः पूरयेत्। ततः पूर्वं वस्त्राभ्यां लिङ्गं पीठं च वेष्टयेत्। संध्यान्तरे परे वाह्नि फलानि बहिर्नयेत्। फलपूजाक्रियासमाप्तौ देशिकाय वस्त्रकाञ्चनैः पूजां कुर्यादिति फलपूजाविधौ क्रियाकलापः प्रादर्शि। अन्ते फलपूजाविधानेन कर्तुरभीष्टसिद्धिः शीघ्रं भवेदिति फलश्रुतिर्दृश्यते। एवं षोडशपटलार्थसंग्रहः।

सप्तदशे पटले आषाढमासपूर्वफल्गुनीपूजाविधिः प्रतिपाद्यते । तत्रादौ आषाढमासे पूर्वफल्गुनीनक्षत्रयुक्ते दिनेऽथवा आश्वयुजमासे वेयं पूजा कर्तव्येति विकल्पेन कालो निरूप्यते । ततो रात्रौ देव्या देवदेव्योश्च वा कौतुकबन्धनविधिः कर्तव्यः । प्रातः कन्याभ्यः काञ्चनादिकं, वस्त्रं, भोजनं च प्रदाय, देव्याः क्षीरं निवेदयेत् । ततः सर्वालंकारसंयुतं ग्रामप्रदक्षिणं कृत्वा देवीमास्थानमण्डपमानयेत् । ग्रामप्रदक्षिणकाले लवणसंयुतं मुद्गाङ्कुरं निवेदयेत् । आस्थानमण्डपे परिवेषकर्मो विधेयः । ततश्चूर्णोत्सवविधानेन देवाय देव्यै च भक्तजनेभ्यश्च रात्रिचूर्णं तैलं च दद्यात् । ततस्ताम्बूलसहितं नानाव्यञ्जनसंयुक्ततण्डुलदानं च विधेयम् । अत्र चूर्णकार्यं हित्वा तण्डुलादिप्रदानमात्रं वा कुर्यादिति विकल्पश्चोच्यते । ततस्त्रिशूलेन सह देवीं नद्यादिकं नीत्वा तीर्थोत्सवकरणप्रकारो विधीयते । तीर्थोत्सवानन्तरं देवीमालयं प्रवेशयेदित्युक्तम् । अत्र तीर्थोत्सवकर्महीनं वा ग्रामप्रदक्षिणमात्रं वा कुर्यादिति पक्षान्तरं सूच्यते । ततो देवदेव्योरुभयोरपि ग्रामप्रदक्षिणपूर्वकं तीर्थोत्सवविधानप्रकारश्च वर्ण्यते । ततस्तीर्थोत्सवानन्तरमालयं प्रवेश्य तत्र स्नपनं कारयित्वा मुखवासयुक्तताम्बूलेन सह प्रभूतहविषं निवेदयेत् । तत आचार्यपूजा कर्तव्येति क्रियाकलापः प्रादर्शि । अन्ते देव्याः संतुष्टिकारणमेतत्पूर्वफल्गुनीपूजाविधानं सर्वारिष्टनिवृत्तये सर्वपापविनाशार्थं सर्वकार्यार्थसिद्धये सर्वाभीष्टसिद्ध्यर्थं च कर्तव्यमिति फलश्रुतिर्दिश्यते । एवं सप्तदशपटलार्थसंग्रहः ।

अष्टादशे पटले श्रावणमासे विधेयः पवित्रारोपणविधिरभिधीयते । तत्रादौ संवत्सरकृतस्य दुरितस्य विनाशार्थं करणीयं पवित्रकर्म प्रतिपाद्यत इति प्रतिज्ञा । ततः पवित्रकर्माकरणे देशिकसाधकपुत्रकसमयिनां दोषः स्यादिति प्रतिपादनम् । ततो वाङ्मनःकायव्यापारजनितात्पतनात् त्रायते तस्मादेतत्पवित्रकमिति पवित्रशब्दार्थवर्णनम् । ततः पवित्रारोपणकर्मणः कालनिरूपणम् । पवित्रनिष्पादनाय सूत्रसंपादनप्रकारकथनम् । पवित्रकरणप्रकारस्तत्राधिदेवताप्रतिपादनम् । स्वायम्भुवकिञ्चाद्यनुसारेण सूत्रसंख्यानिरूपणम् । ग्रन्थिकल्पनप्रकारकथनम् । रक्तचन्दनादिभिः सूत्रराञ्जनप्रकारवर्णनम् । तान्त्रिक–यज्ञसूत्राख्यमाला–बाहुमालपवित्राणां रचनाप्रकारसूचनम् । ततः क्षुद्रलिङ्गविषये, वृषभे, तथावरणविषये, चण्डेशक्षेत्रपालयोर्विषये च दातव्यस्य पवित्रस्य प्रतिपादनम् । ततो लोकपालेषु क्षेत्रनेम्यां च प्रदक्षिणमेकसूत्रं देयमित्युच्यते । ततो यागधाम–वृषस्थान–प्रासाद–जनकाश्रयान् सर्वान्कुम्भांश्च त्रिवृत्सूत्रेण वेष्टयेदित्युक्तम् । ततः पवित्रारोपणदिनात्पूर्वेद्युः कर्तव्यस्याधिवासविधेः प्रतिपादनम् । तत्र प्रथमं मण्डपविधिप्रदर्शनम् । मण्डपे वेदिकाकुण्डकल्पनप्रकारकथनम् । तत्र मण्डपे पश्चिमभागे मण्डलं कुर्यात् । प्राचि पदिसे विन्यसेदित्युक्तम् । ततो मण्डपपूजाविधेः, पूजानन्तरं विधेयस्य होमविधेश्च प्रतिपादनम् । चरुपाकविधिनिरूपणम् । दन्तकाष्ठादित्रयाङ्गानामधिवासप्रकारकथनम् । ततोऽधिवासे पवित्रविषये विधेयानां संस्काराणां निरूपणम् । तत्र संपातहोमविधिप्रदर्शनम् । ततो भान्वादीनां गन्धपवित्रारोपणप्रकारनिरूपणम् । शिवाय आमन्त्रणपवित्रारोपणप्रकारकथनम् । तत्रामन्त्रणमन्त्रप्रदर्शनम् । लोकपालानां तदस्त्राणां क्षेत्रपालस्य चामन्त्रणपवित्रदानविधिनिरूपणम् । सिद्धान्तपुस्तके स्वगुरौ च पवित्रदानप्रकारकथनम् । ततो गुरुर्यागधाम्नो निःसृत्य, समाचम्य, पञ्चगव्यप्राशनादिकं कृत्वाचम्य शिवमनुस्मरन्स्वपेदित्यधिवासनविधौ क्रियाकलापः प्रादर्शि । ततः परेद्युः कर्तव्यस्य पवित्रारोपणविधेः प्रदर्शनम् । तत्र प्रथममाचार्यः प्रातः कृतस्नानसंध्यावन्दनादिको देवेशात्पवित्राण्यवरोप्य चण्डेशार्थं तानीशमण्डले पात्रे निक्षिपेत् । ततो यथाविधि विशेषस्नपनोपेतं शिवं यजेत् । अथानन्तरमग्निकार्यं समाचरेत् । पूर्णाहुत्यनन्तरं अनले नन्द्यादिभ्यश्च पवित्रं दत्त्वा, ततः क्रमेण ब्रह्मणे कुम्भवर्धनीभ्यां च पवित्रं दद्यात् । ततः स्वमूर्तौ गुरुपङ्क्तौ च पवित्रं दद्यादित्युच्यते । ततो भगवते शिवाय मखव्रतफलपूर्तये प्रार्थनाप्रकारो निरूप्यते । तत्रात्मतत्त्वादिपवित्रत्रयारोपणविधिरुच्यते । ततश्चतुस्त्रिद्व्येकमासार्धमासं वा सप्ताहं पञ्चाहं त्र्यहं तु वाथैकाहमारभ्यकर्मान्तमेकभुक्त्यादिनियमं यथाशक्त्यनुष्ठेयमित्युच्यते । व्रताचरणमिदं यावत्सूत्रावरोहणं कर्तव्यमिति सूच्यते । अनन्तरं चतुर्थपवित्रदानप्रकारो निरूप्यते । ततो व्रतसमर्पणविधिरुच्यते । ततः पवित्रावरोहणविधिः प्रतिपाद्यते । एवं पवित्रोत्सवविधौ क्रियाकलापः प्रादर्शि । एवमष्टादशपटलार्थसंग्रहः ।



एकोनविंशे पटले नवनैवेद्यविधिरुच्यते । तत्र प्रथममाषाढमार्गशीर्षमाघमासाश्विनान्येषु मासेषु नवनैवेद्यविधिमाचरेदिति कालनिरूपणम् । ततो देशिकोऽङ्कुरार्पणं कृत्वा शुभनक्षत्रयुक्ते दिने शुभलग्नके सुमुहूर्ते शिवभक्तजनैः परिवृतस्त्रिशूलधर्मधराभ्यां सह नानानृत्तवाद्यसमन्वितं देवक्षेत्रं गत्वा, दधियुक्तेन हविषा भूतबलिं विधाय, नानाशाकव्यञ्जनसमन्वितं धान्यसमर्दनं कृत्वा, ग्रामप्रदक्षिणपूर्वकमालयं प्रवेशयेदित्युच्यते । अत्राङ्कुरार्पणं त्रिशूलचण्डेश्वरानुगमनं विनापि सर्वं कुर्यादिति विकल्पः सूच्यते । ततश्चूर्णोत्सवक्रमप्रोक्तमार्गेण व्रीहेरवकुट्टनं कृत्वा तण्डुलसंपादनं कर्तव्यमित्युक्तम् । ततो मरीचिक्षीरकनारिकेलफलगुलवारैस्तण्डुलान् संस्कुर्यादित्युच्यते । ततः स्नपनं कृत्वा देवदेव्योस्तण्डुलनिवेदनप्रकारोऽभिधीयते । ततः सकलमूर्तिभ्यो वृषादिपरिवारेभ्यश्च निवेदनप्रकार उच्यते । ततस्तत्र विधेयो होमविधिर्बलिविधिरुत्सवविधिश्च सूच्यते । अत्र होमबलिं बोत्सवक्रियां वा हित्वा सर्वमन्यत्कुर्यादिति विकल्पोऽभिधीयते । ततो वस्त्रहेमाङ्गुलीयाद्यैः सहाचार्याय दक्षिणां दापयेदित्युक्तम् । अन्ते य एवं कुरुते, स पुण्यां गतिमवाप्नुयादिति फलश्रुतिर्दिश्यते । एवमेकोनविंशपटलार्थसंग्रहः ।

विंशे पटले समयविशेषदीक्षाविधिः प्रतिपाद्यते । तत्रादौ 'समयसंस्थितां दीक्षां प्रवक्ष्यामि' इति प्रतिज्ञा । तत आचार्यः कृतनित्यक्रियः सामान्यार्घ्यकरो यागमण्डपं प्रविश्य, द्वारद्वाराधिपपूजां, विघ्नोत्सारणं, यागगेहरक्षां च विधाय, भूतशुद्धिसकलीकरणान्तर्यागान्कृत्वा, विशेषार्घ्यं संपाद्य, तदम्भसात्मानं द्रव्याणि च संप्रोक्ष्य, प्रादेशमात्रैः षट्त्रिंशत्संख्यातैर्दर्भैर्ज्ञानखड्गं कल्पयेदित्युच्यते । अत्र द्वात्रिंशतिभिर्दर्भैर्वा ज्ञानखड्गः कल्पनीय इति पक्षान्तरं सूचितम् । ततो यथाविधि पञ्चगव्यं संपाद्य, तेन यागमण्डपं संप्रोक्ष्य, लाजचन्दनसिद्धार्थभस्मपुष्पकुशाक्षतैः सप्तभिर्मिश्रितान्विकिरान्कृत्वाभिमन्त्र्य मण्डपे तान्विकीर्य, वीक्षणादिभिः संस्कारैर्यागमण्डपं संस्कृत्य, तथा कुण्डस्यापि यथाविध्यष्टादश संस्कारान्विधाय, मण्डपे वेद्यां वा, ईशाने पश्चिमे वापि शिवकुम्भं वर्धनीं च संस्थाप्य गन्धपुष्पाद्यैः संपूजयेदिति कुम्भवर्धनीस्थापनप्रकारः सूच्यते । ततो दशदिक्पालानां दशास्त्राणां च पूजाप्रकारोऽभिधीयते । ततो 'भवद्भिः स्वस्यां दिशि विघ्नशान्त्यै सावधानेन यागावसानान्तं स्थातव्यम्' इति शिवाज्ञां दिक्पालान्श्रावयेदित्युच्यते । ततो मण्डले स्थण्डिले वापि लिङ्गे वा विशेषपूजोपेतं शिवं पूजयेत् । पावके च शिवमर्चयेदित्युक्त्वा तत्पूजाप्रकारो निरूप्यते । ततो 'भगवन् मदीयं देहमाविश्यानुकम्पया भावितात्मनां शिष्याणामनुग्रहः कर्तव्यः' इति संप्रार्थ्य, शिवाल्लब्धानुज्ञो गुरुरात्मनः शिवेनैक्यं भावयेदित्युक्त्वा शिवतनुकल्पनप्रकारोऽभिधीयते । अत्र मण्डले कर्मणां साक्षित्वेन, शिवकुम्भे यज्ञरक्षकत्वेन, पावके होमाधिकरणत्वेन, शिष्यदेहे पाशविमोचकत्वेन, मम देहेऽनुग्रहकारत्वेन च देवो व्यवस्थितः । पञ्चाधिकरणो देवस्त्वहमेव सदाशिव इत्यपृथग्भूतमात्मानं भावयेदित्युच्यते । ततो दीक्षार्थं द्वारि स्थितानां शिष्याणां यागमण्डपप्रवेशाय शिवे प्रार्थनाप्रकारस्तदनुज्ञाप्रापणप्रकारश्चाभिधीयते । ततो शिष्याणां दीक्षाकरणविधिः प्रतिपाद्यते । तत्र शिष्यस्य पटेन नेत्राच्छादनं विधाय, मण्डलं नीत्वा रुद्रेश्वरपदावाप्तिदायकं शिवहस्तं शिरसि विन्यस्य तदञ्जलौ पुष्पाणि निक्षिप्य, दृगालोकाच्छादनं पटमपनीय भगवन्तं दर्शयित्वा, पुष्पप्रक्षेपं कारयित्वा, पुष्पपातवशान्नामकरणं कुर्यादित्युच्यते । अत्र द्विजादिक्रमेण चतुर्णां वर्णानां, स्त्रीणां च नामकरणविषये विशेषः प्रतिपाद्यते । ततस्तत्र विधेयो होमविधिर्विशिष्य निरूप्यते । तत्र नाडीसंधान–द्विजत्वापादन–रुद्रांशापादनप्रकाराः कथ्यन्ते । ततो गुरुणा प्राणायाममार्गेण शिष्यदेहे शिवसंयोजनप्रकारो वर्ण्यते । ततो गुरुः शिष्याय यज्ञोपवीतं दद्यात् ।

ततः शतं सहस्रं वा हुत्वा शिवमन्त्रेण पूर्णाहुतिः कर्तव्येति होमविधेः परिसमाप्तिर्दिश्यते । तत एवंविधसमयसंस्कारयुक्तः शिवपूजने, होमविधौ, अध्ययने, मन्त्रश्रवणे च योग्यो भवति । स मानवो रौद्रं पदं प्राप्नोति । स एव निर्वाणदीक्षायामधिकारी भवेदित्युच्यते । अन्ते च य आचार्योऽप्रजन्मनां दीक्षाविधानप्रकारेण शूद्रस्य दीक्षां करोति, स शूद्रतामाप्नोतीत्युक्तम् । एवं विंशपटलार्थसंग्रहः ।

एकविंशे पटले स्थालीपाकविधिरभिधीयते । तत्रादौ स्थालीं ताम्रमयीं मृण्मयीं वा लक्षणान्वितां कुर्यादिति पात्रलक्षणकथनम् । ततः स्थाल्यां संस्कारपूर्वकं चरुपाकविधिरुच्यते । तत्र शालितण्डुलादीनां प्रमाणनिरूपणं, पाकप्रकारः, तथाभिघारशीताभिघारसंपातहोमानां कर्तव्यप्रकार इत्येते विषयाः प्रोच्यन्ते । एवं संपादितेन चरुणैव होमः कार्य इति सूच्यते । ततश्चरोराद्यो भागो देवविषये, द्वितीयो भागो होमकर्मणि, तृतीयो भागः परिवारविषये, चतुर्थो भागो देशिकविषये च विनियोज्य इत्युच्यते । पृथक् चरुश्चेत् सर्वमीशाय निवेदयेदिति चरुविभागविधिः प्रतिपाद्यते । अन्ते 'फलकाङ्क्षिभिः साधकैः प्राणाग्निहोत्रं कर्तव्यम्' इति सूच्यते । एवमेकविंशपटलार्थसंग्रहः ।

द्वाविंशे पटले स्वप्नाध्यायविधिरभिधीयते । तत्रादौ दीक्षायाः पूर्वं काम्यकर्मणि चोत्तमं स्वप्नं लक्षयेदित्युच्यते । यामक्रमेण स्वप्नफलसिद्धिप्रकारो निरूप्यते । ततः शुभफलप्रदाः स्वप्नाः कथ्यन्ते । अनन्तरमशुभफलप्रदाः स्वप्ना निरूप्यन्ते । स्वप्ने देवताः पितरो योगिनो द्विजातिनृपश्च यद्वदन्ति तत्तथैव भविष्यतीत्युच्यते । धातुदोषजस्वप्नानां न शुभाशुभसूचकत्वमित्युच्यते । एवं पूर्वदृष्टविषयकस्य पूर्वश्रुतविषयकस्य स्वप्नस्यापि न शुभाशुभसूचकत्वमित्युच्यते । जात्या वयसा धनेन वा आचारेण धर्मेण विद्यया वा यः श्रेष्ठः, स एव प्रथमं शुभं वाशुभं वा स्वप्नमाचार्याय निवेदयितुमर्हतीत्युच्यते । स्वप्नज्ञदेशिकशिष्याणां विषये परस्परमनुष्ठेया आचारा निरूप्यन्ते । एवं द्वाविंशपटलार्थसंग्रहः ।

त्रयोविंशे पटले निर्वाणदीक्षा कथ्यते । तत्रादौ 'परममोक्षदां निर्वाणदीक्षां प्रवक्ष्यामि' इति प्रतिज्ञा । तत आचार्यः कृतनित्यक्रियः कृतमन्त्रतर्पणः कृतसूर्यार्चनः सकलीकृतविग्रहः सामान्यार्घ्यकरो द्वारद्वारपालार्चनं कृत्वा, पश्चिमद्वारमार्गेण यागमण्डपं प्रविश्य, ब्रह्माणमभ्यर्च्य, यथाविधि क्षेत्ररक्षां विधाय, भूतशुद्ध्यादिकं कृत्वा, विशेषार्घ्यं संपाद्य, ज्ञानखड्गं संकल्प्य, पञ्चगव्यं विधाय, विकिरप्रक्षेपं कृत्वा, भूमिशुद्धिं विधाय, शिवकुम्भं वर्धनीं च संपूज्य, लोकपालानां शिवाज्ञां संश्राव्य, अस्त्रवर्धनीं भ्रामयित्वा, ज्ञानखड्गमभ्यर्च्य मण्डले, देवेशं संपूज्याग्नौ मन्त्रतर्पणं विधाय, भगवन्ननुकम्पया मदीयं देहमाविश्य, शिष्याणां भावितात्मनां भवतानुग्रहः कार्यः' इति देवं संप्रार्थ्य, लब्धानुज्ञः शिरस्युष्णीषं विन्यस्य, आत्मनः शिवत्वभावनां कुर्यादित्युच्यते ।

ततोऽधिवासक्रियार्थं शिवादेशादानविधिरुच्यते । ततः शिष्यमात्मनः सव्यभागे विनिवेश्य, शिवादिमन्त्राणां दीपनं सम्यगाचरेदित्युक्त्वा मन्त्रदीपनप्रकारो वर्ण्यते । ततः शिष्यस्य पाशसूत्रबन्धनविधिः, पाशसूत्रे सुषुम्नायोजनं, पाशसूत्रे आत्मसंयोजनं, मलादिपाशानां शान्त्यतीतादिपञ्चकलानां च सूत्रे ( सूत्रस्थे चैतन्ये ) योजनं, मन्त्राध्वादीनां व्याप्यव्यापकभावकथनमित्येते विषयाः कथ्यन्ते । व्याप्यव्यापकभावविषयप्रतिपादने 'मन्त्रादीनां पञ्चानामध्वनां परमव्यापिकाः पञ्च कलाः, तेन ता एव कला दीक्षया विभाव्य शोधनीयाः । तच्छुद्ध्यैव तद्गर्भस्थानां पञ्चानामध्वनां शुद्धिः संपद्यते' इत्युच्यते । ततः शान्त्यतीतादिकलानां दीपनप्रकारः, सूत्रे ग्रन्थिकल्पनप्रकारः, सूत्रसंरक्षणविधिश्च, प्रतिपाद्यन्ते । ततः पञ्चगव्यप्राशनचरुप्राशनदन्तकाष्ठसेवनविधयोऽभिधीयन्ते । अत्र दन्तकाष्ठपातेन शुभाशुभपरिज्ञानप्रकारः सूच्यते । ततः शिष्यस्वापविधिः प्रोच्यते । ततो गुरुर्दन्तकाष्ठपातसूचितप्रतिकूलोपशान्तये विधेयं प्रायश्चित्तं कृत्वा, स्वयमपि पञ्चगव्यचरुप्राशनं दन्तधावनं च निर्वर्त्य प्रयतः स्वपेदित्युच्यते । एवं निर्वाणदीक्षायामधिवासविधौ क्रियाकलापः प्रादर्शि ।

ततो द्वितीयेऽह्नि प्रातः कृतनित्यक्रियो गुरुः शिष्यान्निशास्वप्नान्पृष्ट्वा शुभस्वप्ने सति पूर्ववच्छिष्यप्रवेशादिकमाचरेत् । दुःस्वप्ने सति शान्तिं कृत्वा, ततः शिष्यप्रवेशादिकं कुर्यात् । ततः शिष्यमाहूय कुण्डसमीपे स्वदक्षिणे स्थापयित्वाधिवासितं तत्सूत्रं शिष्यदेहेऽवलम्ब्य, 'अस्य शिशोरनुग्रहं करोमि' इति भगवन्तं संप्रार्थ्य, भगवतो लब्धानुज्ञः शक्तिमाधाररूपिणीमग्नौ



[illegible]दित्युच्यते । ततः प्रथमतो निवृत्तिकलाशुद्धिक्रमो निरूप्यते । तत्र निवृत्तिकलाशुद्धौ विन्यसनीयानां तत्त्ववर्णमन्त्रभुवनपदानां निरूपणम् । तत्र कर्तव्यहोमादिकर्मणश्च प्रतिपादनम् । एवमेव प्रतिष्ठाविद्याशान्तिशान्त्यतीतकलाशुद्धिक्रमो यथाविधि निरूप्यते । ततः शिखाच्छेदविधिर्वर्ण्यते । ततः शिवसंयोजनविधिः, सर्वज्ञत्वादिषड्गुणापादनविधिश्च कथ्येते । ततो निर्वाणदीक्षायामधिकारिणः प्रदर्श्यन्ते । अन्ते 'अन्त्यजानां न हौत्री दीक्षा कर्तव्या । चाक्षुषी दीक्षैव विधेया' इत्युच्यते । एवं त्रयोविंशपटलार्थसंग्रहः ।

चतुर्विंशे पटले आचार्याभिषेकविधिरुच्यते । तत्र प्रथमं येन कर्मणाचार्यत्वं संपद्यते, तादृशोऽभिषेकविधिरभिधीयते इति प्रतिज्ञा । तत आर्यावर्तदेशोद्भवः सर्वलक्षणलक्षितः श्रीमान् देशिको भवितुमर्हतीत्युक्त्वार्यावर्तदेशलक्षणमभिधीयते । तत्र 'सदाचारसंपन्ना विप्राः, तपोधना योगिनश्च यत्र वसन्ति, यत्र च वेदा देवाश्च समुल्लसन्ति, स एव आर्यावर्तः, न विन्ध्यपर्वतसमुद्रमध्यस्थो देश आर्यावर्तः' इत्यभिधीयते । ततः ककाराष्टकनिर्मुक्तो देश आर्यावर्त इत्युक्त्वा ककारादिकानामष्टानां देशानां परिगणनम् । ततो विप्रादयश्चतुर्वर्णाः स्वस्वकर्मण्येव योग्याः । आदिशैवकुलोत्पन्न एव स्थापनादिकर्मसु श्रेष्ठ इत्युक्त्वा स्थापनादिकर्माणि निर्दिश्यन्ते । विप्रादिचतुर्वर्णानां कुत्र कुत्र कर्मण्यधिकार इति निरूपणम् । तत आचार्याभिषेकविषये वर्जनीयानामधिकारिणां निरूपणम् । तत आचार्याभिषेकविधिरभिधीयते । तत्राङ्कुरार्पणपूर्वकमहनि शुभे लग्नेऽभिषेकं कुर्यादिति कालो विधीयते । ततो वेदिकाद्वययुक्तमण्डपविधानप्रकारः, तत्र शिवपूजनं, होमविधिः, लुप्तक्रियान्वितशिष्यविषये दीक्षासंस्कारकरणम्, अन्तर्बलिबहिर्बलिकरणमित्यादयः क्रियाविशेषाः कर्तव्यत्वेन सूच्यन्ते । ततः शुद्धिविषये उपयोक्तव्यानां द्रव्याणां निरूपणम् । ततो मण्डपे कुम्भस्थापनप्रकार उच्यते । अत्र कुम्भलक्षणकथनपूर्वकं नव वा पञ्च वा घटाः स्थापनीयाः । अथवैको वा घटः स्थाप्य इत्युच्यते । कुम्भेषु पूजनीया देवताः पूजाप्रकारश्च कथ्यन्ते । दक्षवेद्यां कुम्भस्थापनं कर्तव्यमित्युच्यते । सौम्यवेद्यां शिष्यं न्यसेदित्युक्तम् । ततोऽभिषेकप्रकारः सूच्यते । ततोऽभिषिक्तस्य शिष्यस्य भद्रपीठे पूर्वास्यतया निवेशनं, गन्धपुष्पाद्यैः पूजनम्, आरात्रिकदानप्रकार इत्यादयः क्रियाविशेषाः कथ्यन्ते । तत आचार्येण शिष्यस्योष्णीषादिदानप्रकारस्तथा राजचिह्नानां छत्रचामरादीनां दानप्रकारश्च वर्ण्यते । ततो गुरुणा 'देशिक अद्यप्रभृति दीक्षाव्याख्यानादिकं यथाविधि कुरु' इत्याज्ञादानप्रकारस्तथा अयं त्वत्प्रसादेनाविघ्नेनाधिकारं करोत्विति देवदेवाय विज्ञापनप्रकारश्च वर्ण्यते । ततस्तत्र कर्तव्यस्य होमविधेः प्रतिपादनम् । आचार्येण शिष्याय स्वाधिकारसमर्पणम् । प्रायश्चित्तहोमविधिरित्यादयोऽभिषेकानन्तरकरणीयाः क्रियाविशेषाः प्रतिपाद्यन्ते । ततोऽनेनैव प्रकारेण साधकाभिषेकोऽपि विधेयः । किंतु तत्र साध्याणुनालवैर्वैरभिषेचनं कर्तव्यमिति साधकाभिषेकविधिरतीव संक्षेपेण प्रादर्शि । ततः पुत्रक–समयि–माहेश्वर–परिचारकाणां लक्षणकथनम् । तत्र 'परिचारका लिङ्गार्चने न योग्याः, किमुत दीक्षादिकर्मणि' इत्युच्यते । यद्यपि शिवद्विजकुलोत्पन्ना माहेश्वराः सृष्ट्यादौ शिवेन दीक्षिताः, तथापि मदर्चनाय तेषां शुद्ध्यर्थं दीक्षा पुनः कर्तव्येत्युच्यते । ततो भुक्तिविषये भौतिको ब्रह्मचारी वा गृहस्थानां देशिको भवेत् । मुक्तिविषये नैष्ठिकेषु नैष्ठिको देशिको भवेत् । ततो 'गृहस्थगुरुः, सान्तानिकगुरुः, मुण्डी, व्रती, व्रतार्पकः, आदिशैवाः' इत्येतेषां लक्षणं प्रतिपाद्यते । ततः सर्वव्रतानामुत्तमस्याचार्यव्रतस्य निरूपणम् । तत आचार्यसाधकपुत्रकसमयिभिर्नित्यं लिङ्गार्चनं कर्तव्यमित्युच्यते । ततो नित्यनैमित्तककर्मणोर्लक्षणं कथ्यते । ततो नित्यनैमित्तिककर्मणोरधिकारिनिरूपणम् । अत्र आचार्यः साधकश्च सर्वकर्मणि प्रशस्तावित्युच्यते । ततो 'लक्षाध्यायी' इति व्यपदिश्यमानस्य गुरोर्लक्षणकथनम् । ततः चतुष्पादयुक्ताः कामिकाद्या आगमाः संहिता इति संहितालक्षणकथनम् । ततः 'शैवं, पाशुपतं, सोमसिद्धान्तकं, लाकुलम्' इति शैवं चतुर्विधं भवति । एतच्चतुर्विधं महेशचतुर्वक्त्रोद्भवम् । एतच्चतुर्षु पूर्वं पूर्वं गुणोत्कृष्टम् । एतच्चतुर्विधं वामदक्षिणसिद्धान्तभेदेन प्रत्येकं त्रिविधं भवेत् । तेषु सिद्धान्तः श्रेष्ठस्तत्रापि शैवसिद्धान्तः सर्वेभ्य उत्तमोत्तमो भवतीत्युच्यते । ततः सिद्धान्त–अतिमार्ग–अध्यात्म–वैदिक–लौकिकाख्यानां पञ्चानां परस्परमुच्चनीचभावः, तेषां वक्तारः, तेषामवतारक्रमः, तेषां स्वरूपं च प्रतिपाद्यन्ते । अत्र

लौकिक-वैदिक-अध्यात्म-अतिमार्ग-सिद्धान्तानां क्रमेण ब्रह्मविष्णुरुद्रेश्वरसदाशिवाख्याः पञ्च कारणेश्वरा वक्तार इत्युच्यते। ततो वामं सर्वेभ्योऽधमं, वामाद् दक्षिणमुत्तमं, दक्षिणात् कौलं श्रेष्ठं, कौलाद् महाकौलं श्रेष्ठं, महाकौलात् पूर्वाम्नायं श्रेष्ठं, पूर्वाम्नायात् सिद्धान्त उत्तमो भवतीति सिद्धान्तस्योत्कृष्टता प्रतिपाद्यते। अत्र सिद्धान्तात्परं ज्ञानं नेति शास्त्रनिश्चय इत्युच्यते। ततः सिद्धान्तो वेदसारः, सिद्धान्तविहिताचारो वैदिकाचारः' इत्युक्त्वा वैदिककर्मशैवकर्मणोराचरणविषये व्यवस्थानिरूपणम्। ततः कामिकादिवातुलान्तानामष्टाविंशत्यागमानां शिवाङ्गत्वप्रतिपादनम्। तत्र पूर्वकामिके तन्त्रावतारपटले 'कामिकं पादयुग्मम्' इत्युक्तम्। अत्र तु कामिकमूर्ध्वमकुटमित्युच्यते। अस्मिन्विषये विरोधपरिहारो वक्तव्य इति मुनीनां प्रार्थना। तत्र सृष्टिसंहारभेदेन भोगमोक्षसिद्ध्यर्थं ज्ञानदेहो ध्यातृभेदेन द्विधा वर्णितस्ततो न विरोध इतीश्वरेण समाधानकथनम्। ततो मनुष्यैरार्षकं वाक्यं, मुनिभिर्दैविकं वाक्यं, तथा देवैर्ब्रह्मणो वाक्यं, ब्रह्मणा विष्णुवाक्यं, विष्णुना शिववाक्यं च बाधितुं न शक्यत इत्युच्यते। ततः कामिकादिवातुलान्तानामष्टाविंशत्यागमानामीशादिपञ्चवक्त्रसमुद्भवत्वप्रतिपादनम्। सोपभेदमष्टाविंशतितन्त्रं यो वेत्ति गुरुः, स गुरुः शिव एव भवेदित्युच्यते। ततो विशिष्टगुरुणारब्धे कार्ये हीनगुरोर्नाधिकारः। हीनारब्धे तु विशिष्टस्याधिकारोऽस्तीत्युच्यते। विशिष्टगुरोर्मरणादौ गुर्वन्तरनिवेशनं युक्तम्। विशिष्टे विद्यमाने हठादन्यगुरोर्निवेशने महती हानिः संभवेत्। तेन राजराष्ट्रयोर्नाशस्य कर्तुः कारयितुश्च महान्दोषो भवेदित्युच्यते। लोकप्रख्यातविद्याय गुरवे दत्तमण्वपि द्रव्यं राज्ञो यशः सौख्यं च बहुधा कुरुते। तद्दानमुत्तमोत्तमं भवति। येन गुरुद्रव्यमाहृतं, स पापी नराधमो विज्ञेयः। स सर्वलोकबहिष्कृतो भवेदित्युच्यते। एवं चतुर्विंशपटलार्थसंग्रहः।

पञ्चविंशे पटले गोत्रनिर्णयविधिरभिधीयते। तत्रादौ गोत्राणि सहस्राण्ययुतान्यर्बुदानि च विद्यन्ते। तत्र महतां गोत्राणां संख्योनपञ्चाशदेव भवतीत्युच्यते। ततः कौशिक-काश्यप-भारद्वाज-गौतम-अत्रि-वसिष्ठ-अगस्त्य-जमदग्नि-भार्गव-अङ्गिरसो मनुश्चेत्येकादश मुनयो मुख्यत्वेन परिगण्यन्ते। ततो मुनयः शिवसृष्टिसमोपेतास्तद्विवर्जिता इति द्विविधा भवन्ति। तत्र शिवसृष्टिसमोपेताः पञ्चवक्त्रेषु दीक्षिताः। कौशिकाद्या मुनयः सर्वे सर्वत्र दीक्षिता एव। एषां गोत्रं न दीक्षया सिद्धं किं तु जातिसिद्धमित्युच्यते। ततः क्षत्रियाणां वैश्यानां च गोत्रमाचार्यजं वा मुनिप्रयुक्तं वा भवेदिति विकल्पेनोच्यते। शूद्रस्य तु गोत्रं नैवेति गोत्रविधौ मतमित्यभिधीयते। ततो जातिसिद्धं गोत्रं विवाहविषये विचक्षणैः परिहार्यमित्युक्तम्। ततो गोत्रविषये 'प्रधाना मुनयश्चादौ कथ्यन्ते' इत्युक्त्वा एकोनपञ्चाशन्मुनिनामानि परिगण्यन्ते। तत एतेषां परिगणितमुनीनां गणाः प्रवराश्च यथाक्रमं प्रतिपाद्यन्ते। तत्र परिगणनावसरे निर्दिष्टनाम्नां गणप्रवरविवरणावसरे निर्दिष्टनाम्नां च केषुचित्स्थलेषु व्यत्यासो दृश्यते। तत्रोदाहरणार्थं किंचित्प्रदर्श्यते। 'रौद्राः' इति परिगणितनाम्नो विवरणस्थले 'रौक्षाः' इति व्यत्यासेन निर्देशो विद्यते। तत्र 'रौक्षाः' साधुरिति भाति। एवं 'मुद्गलाः, कपिताः' इति परिगणनस्थले निर्दिष्टयोर्विवरणस्थले 'मुद्गलाः कपयः' इति निर्देशो विद्यते। तत्रापि पूर्वमपि 'मुद्गलाः कपयः' इत्येव युक्ताविति भाति। एवं 'भार्गवाः' इति परिगणनस्थले निर्दिष्टस्य 'गौतमाः' इति विवरणस्थले निर्देशविषये निश्चयसाधकं प्रमाणं न दृश्यते। ततः क्षत्रियाणां वैश्यानां च गोत्रप्रवरवर्णनं दृश्यते। अत्र क्षत्रियवैश्यानामाचार्यप्रवरो वेति विकल्पश्च दृश्यते। विषयोऽयं पटलारम्भेऽपि सूचितः। ततः समानगोत्रप्रवरान्ज्ञात्वा संबन्धमाचरेत्। समानगोत्रप्रवरां कन्यां न कदापि वृणुयात्। प्रमादत उढा चेद्भगिनीवन्मातृवच्च तां परिरक्षयेत्। विवाहदोषशान्त्यर्थं चान्द्रायणं व्रतं चरेत्। ततस्तया सह प्रमादेन संयोगादिविषये विधेयस्य प्रायश्चित्तविधेर्निरूपणम्। तदुद्भूताः पुत्राः सर्वे न द्विजा इत्युच्यते। तत्पुत्रपौत्रसंयोगेऽपि विधेयाः प्रायश्चित्तविषयाः कथ्यन्ते। एवं पञ्चविंशपटलार्थसंग्रहः।



षड्विंशतितमे पटले शताभिषेकविधिरुच्यते। तत्र प्रथमं चन्द्रसहस्रावलोकिनां दीक्षितानामकालमृत्युनाशकमायुरारोग्यवर्धनं पुत्रपौत्रधनधान्यवर्धनं शताभिषेकं वक्ष्यामीति प्रतिज्ञा। उत्तरायणकाले शुक्लपक्षे सुतिथौ शुभवारे शुभलग्नयुक्ते दिनेऽभिषेकः कर्तव्य इति कालो निरूप्यते। ततो मण्डपे कूटे प्रपायां वा शुद्धदेशेऽभिषेकं कुर्यादित्युक्त्वा मण्डपादिविधानप्रकारकथनम्। ततो विप्रादिचतुर्वर्णोद्भवा अनुलोमोद्भवास्तत्तज्जातिसमुद्भूताः स्त्रियः, विशेषतो भूपतयः सामन्ता राजानोऽमात्या राजपुरोहिता इत्येतेषां स्त्रियश्च शताभिषेकयोग्या इति कथ्यन्ते। सर्वलक्षणलक्षितः पञ्चाङ्गभूषणोपेतः शिवविप्रो देशिकोऽभिषेकमाचरेदित्युच्यते। अभिषेकदिनात्पूर्वरात्रे यजमानस्य तत्पत्न्याश्च कौतुकबन्धनं कर्तव्यमित्युच्यते। तत्र नृपतिविषये प्रधानपत्न्यो बह्व्यो यदि भवन्ति, तासां सर्वासामपि कौतुकबन्धनं विधेयमिति सूच्यते। तद्रात्रौ पयः पीत्वा कम्बलादिकल्पितायां शय्यायां यजमान एकाकी दक्षिणमस्तकः स्वपेदित्युच्यते। ततः संस्कृते मण्डपे सूत्रपातकथनपूर्वकं मण्डलविधानप्रकार उच्यते। ततो मण्डलमध्ये कुम्भस्थापनाय स्थण्डिलकल्पनाप्रकारः, शिवकुम्भवर्धन्योर्बाह्यकलशानां च प्रमाणकथनं, तेषु सूत्रवेष्टनप्रकार इत्येते विषयाः प्रोच्यन्ते। ततः शिवकुम्भादिपूरणे नादेयाम्भः प्रशस्तमित्युक्त्वा तत्र योजनीयानि गन्धद्रव्याणि निरूप्यन्ते। ततोऽष्टोत्तरशतकलशस्थापनप्रकारस्तत्र देवतान्यासप्रकारो द्रव्यन्यासप्रकारस्तेषां पूजाविधिश्च कथ्यन्ते। तत्र मध्ये कुम्भे सर्वाङ्गसंयुतं शिवं वर्धन्यां मनोन्मनीं च पूजयेत्। यदि यजमानो बहुपत्नीकस्तदा बह्व्यो वर्धन्यः स्युः। तासु सर्वासु च मनोन्मनीमेव पूजयेदिति विशेषः सूचितः। एवमष्टोत्तरशतकलशानां विषये रुद्राणां नामोच्चार्य पूजयेदिति चोक्तम्। किं तु प्रथमावरणे परमेश्वरविद्येश्वराः पूज्या इति पृथक्कथितमिदम्। ततो यजमानो दीक्षितश्चेन्न पुनर्दीक्षा कर्तव्या। नो चेत्तत्काले तं दीक्षयेदिति सूच्यते। ततो मण्डले कर्तव्यो होमविधिः प्रतिपाद्यते। तत्र होमान्ते एवं क्रमेण होमं कृत्वा रात्रिशेषं व्यपोह्य गुरूत्तमोऽदीक्षितानां विषये प्रधानाग्नौ दीक्षां समाचरेदित्युक्त्वा दीक्षाप्रकारः संक्षेपेण कथ्यते। तत्र पञ्चाक्षरेणैव दीक्षा कर्तव्येति सूच्यते। ततो यजमानस्याभिषेकप्रकारो वर्ण्यते। तत्र राज्ञामभिषेके सहस्रधाराघटेन हैमेन राजतेन वा पात्रेणाभिषेचनं कर्तव्यम्। अन्येषां सर्वेषामपि शतधाराघटेन हैमेन राजतेन वा पात्रेणाभिषेचनं विधेयमित्युच्यते। ततोऽभिषेकानन्तरकरणीयविधिरभिधीयते। ततोऽभिषिक्तं भार्यया युतं सर्वालंकारसंयुक्तं भद्रासने स्थापयित्वा, धान्यानि, मधुपात्रं, सवत्सां गां च दर्शयेत्। ततो बन्धुभिः पूजितं हृष्टं गेयवाद्यसमन्वितं शिबिकादावारोप्य, ग्रामप्रदक्षिणं कारयित्वा, गृहद्वारे फलकोपरि स्थापयित्वा, तत्पादौ क्षीरैर्जलैश्च प्रक्षाल्य, रजनीजलधारया दीपेन च सहिताभिः स्त्रीभिस्तत्र प्रदक्षिणत्रयं कारयित्वा, पादुके आरोप्य स्वगृहं प्रवेशयेदित्यादिक्रियाविशेषाः शताभिषेकविधौ प्रतिपादिताः। ततोऽभिषेकविषयेऽष्टोत्तरशतकलशस्थापनपुरःसरं क्रियमाणोऽयमभिषेकक्रमः श्रेष्ठः। एकोनपञ्चाशत्कलशैरथवा पञ्चविंशतिकलशैर्नवभिः पञ्चभिरेकेन वाभिषेकं कुर्यादिति पक्षान्तराणि च सूच्यन्ते। ततो गुरोर्मूर्तिपानां जापिनां स्तोतॄणां भक्तानां च दक्षिणादानप्रकारोऽभिधीयते। ततः शताभिषेकफलानि प्रतिपाद्यन्ते। एवं षड्विंशपटलार्थसंग्रहः।

सप्तविंशतितमे पटले दीक्षितानामन्त्येष्टिविधिं वक्ष्यामीति प्रतिज्ञा। ततो दीक्षितेषु विप्रादिचतुर्वर्णा अनुलोमजाश्च सन्ति। तत्रापि आचार्यसाधकपुत्रकसमयिन इति चतुर्विधा वर्तन्ते। एतेषां सर्वेषामन्त्येष्टिर्दीक्षितैः कर्तव्या। तत्राचार्यसाधकपुत्रकाणामध्वशुद्धिसमन्वितान्त्येष्टिरितरेषामध्वशुद्धिविवर्जितेति व्यवस्था निरूप्यते। पुनश्च मृतेष्वाचार्यसाधकपुत्रकेषु येऽप्रमादिन आचारवर्जिता अकृतप्रायश्चित्ताः, तेषां तत्त्वशुद्धिसहितान्त्येष्टिः कर्तव्या। इतरेषां विषये तत्त्वशुद्धिं विहायान्त्येष्टिराचरणीया। एवं सद्य उत्क्रान्तिं कृतवतां योगिनां विषयेऽपि तत्त्वशोधनं न कर्तव्यमिति व्यवस्था क्रियते। ततोऽन्त्येष्टिविधिः प्रतिपाद्यते। तत्र भस्मना स्नानकरणम्। ततो देशिकेन 'दीक्षितोऽयं शिवाज्ञापरिपालकोऽचिरात्सपिण्डीकरणोत्तरं शिवत्वं नेयः' इति पूजापुरःसरं देवे विज्ञापनं कर्तव्यमित्युक्तिः। उत्क्रान्तिसमये कर्णोपान्ते देशिकेनेतरेण वा शिवमन्त्रादिपठनं कार्यमित्युक्तिः। विपन्नस्य स्नानालंकारादिकरणप्रकारनिरूपणम्। दीक्षितानां शिवशासनधारिणामन्येषां च यथायोग्यं ताम्बूलसहितरात्रिचूर्णदान-

प्रकार इत्यादिविषयाः प्रतिपाद्यन्ते । ततो विपन्नस्य श्मशानानयनाय आसन्दिकाकरणप्रकारः कथ्यते । शिवयोगिविषयेऽत्र शिबिका कर्तव्येत्युच्यते । आसन्दिकामारोप्य विपन्नस्य श्मशानानयनप्रकारो वर्ण्यते । तत्र तुल्यजातीयैरपसव्योपवीतकैर्द्वाभ्यां चतुर्भिर्वा वाहयित्वैशानीं दिशं नयेदित्युच्यते । विपन्नवाहकानां नाकालमरणं संभवेदिति कथ्यते । विपन्नमनुगम्य स्नात्वा निर्वापवारिदानेन परत्रेह चेप्सितं सुखमाप्नोति । किं तूत्तमेन हीनवर्णो व्रतोज्झितो नानुगन्तव्यः । प्रमादादनुगमने प्रायश्चित्तं कुर्यादित्युक्त्वा प्रायश्चित्तकरणप्रकारो निरूप्यते । असहायस्य शिवयोगिनो गतासोः संस्कारकर्तुररिष्टनाश इति फलमुच्यते । ततः समीपस्थमुदकस्थानं प्राप्य, तत्र कूटं प्रपां वा विधाय, तन्मध्ये कुण्डं स्थण्डिलं च विधिवत् कृत्वा, कुण्डदक्षिणभागे चिताखातकरणप्रकारोऽभिधीयते । ततो देशिकेन चितावास्तुपूजायाः पूर्वकरणीयो विधिः, चितावास्तुपूजाविधिश्च प्रतिपाद्येते । ततो वर्धन्यां पाशुपतास्त्रमिष्ट्वा, दशास्त्रपूजा कर्तव्येत्युच्यते । ततस्तत्र विधेयः शिवपूजाविधिरग्निकार्यविधिश्च संक्षेपेण प्रतिपाद्येते । ततश्चितावास्तुपूजाविधौ प्रकारान्तरवर्णनं दृश्यते । ततो याज्ञिकैः काष्ठैश्चन्दनागरुसंमिश्रैः शवशय्यास्तरणप्रकारः कथ्यते । अनन्तरं मृतकदीक्षाकरणप्रकारोऽभिधीयते । तत्र निवृत्त्यादिकलाशोधनप्रकारो वर्ण्यते । ततः शवस्य शय्यारोपणं, दहनविधिश्च प्रतिपाद्येते । ततो दहनानन्तरकरणीयविधिः प्रोच्यते । तत्रास्त्रवर्धनीप्रक्षेपः, जलाशयं गत्वा स्नानकरणं, मृतमुद्दिश्य निवापाञ्जलिदानमित्यादिक्रियाविशेषाः कथ्यन्ते । ततस्तद्दाहकस्यानुगन्तॄणां च शावशौचविधानपूर्वकं स्वमन्दिरप्रवेशविधिरभिधीयते । तत्र गृहद्वारमागत्य निम्बपत्रदंशनं कर्तव्यमिति सूच्यते । ततः प्रसङ्गात् समयदीक्षामात्रयानुगृहीतस्योत्तरदीक्षया हीनस्य निर्वाणदीक्षार्थिनो मृतस्य विषये तत्त्वशुद्ध्या सहान्त्येष्टिविधिरिष्यत इत्युच्यते । ततो जलेनाग्निना वा, शस्त्रैर्विषेण वा, गजसिंहशार्दूलैरन्यैः सत्त्वैर्वा, वृक्षादिपतनेन वा स्वहस्तताडनोच्छेदरज्जुबन्धनपातनैर्वान्यैरेवादृशैर्वा मरणं प्राप्तानां प्रायश्चित्तपूर्वकं पूर्ववदन्त्येष्टिः कर्तव्येत्युच्यते । अविद्यमानदेहानां, विकलाङ्गानां क्षयकुष्ठमसूर्यादिमहारोगयुक्तशरीरिणां च विषये कुशादिनिर्मितदेहे सर्वा अन्त्येष्टिविधौ प्रोक्ताः क्रियाः समाचरेदित्युच्यते । अत्र मसूर्यादिरोगेण विकलाङ्गानां विषये केवलेऽग्नौ मन्त्रैर्विना दहनं, निखननं, गङ्गातीर्थे क्षेपणं वा क्रियतामिति निगद्यते । एवं वह्न्यादिप्रवेशेन मृतानां विषये तैः कृतो वह्न्यादिप्रवेशः पुण्यार्थं कृतो वेति ज्ञात्वा कर्माचरणीयमिति सूच्यते । कुशादिभिर्देहनिर्माणप्रकारोऽभिधीयते । ततोऽकृतचूडानां मृतानां नराणां विषयेऽवटक्रियैव कर्तव्या । तेषां दहनं बलिरुदकक्रिया च न कर्तव्याः । एवमूनद्विवर्षप्रेतविषयेऽपि दहनक्रियोदकक्रिया च न कर्तव्येत्युच्यते । कृतचूडस्य दहनं पिण्डोदकक्रिया च भवेदित्युक्त्वा तत्र पिण्डोदककर्मणि विशेषः प्रतिपाद्यते । ततो यतिनां ज्ञानिनां चापि लवणापूरणोपेतावटक्रिया कर्तव्येत्युक्त्वावटक्रियाविधिरभिधीयते । ततो यतिनां ज्ञानिनां च विषयेऽवटक्रियानन्तरं तत्रैवालयसंयुक्तं पीठं, लिङ्गं, बेररूपं वा संस्थाप्य पूजयेदिति सूच्यते । एतेषां विषये पिण्डोदकक्रियाः श्राद्धं यदन्यदपि कर्म तच्च न कुर्यादित्युच्यते । ततोऽशन्यग्निजलाद्यैर्मृतानां दहनं कर्तव्यमित्युच्यते । ततो भर्तरि देशान्तरं गते स मृतो न वेत्यविज्ञातश्चेत् तत्पत्नी द्वादशाब्दमतीत्य वैधव्यमाचरेदिति कथ्यते । ततो मृतदहनार्थं वह्निसमाहरणप्रकारो निरूप्यते । ततस्तत्त्वशुद्धिविहीनयान्त्येष्ट्या समेतानां माहेश्वराणां विषये दहनविधिप्रकारो विधीयते । ततः प्रथमदिनादारभ्य द्वादशदिनपर्यन्तं मृतमुद्दिश्य कर्तव्यस्तर्पणविधिर्भोजनविधिश्च प्रतिपाद्यते । ततो दाहान्ते मृतमुद्दिश्य नग्नप्रच्छादनार्थं कुटुम्बिने दीक्षिताय वस्त्रखण्डसंयुतं दानं दद्यादिति सूच्यते । तर्पणान्ते नद्यादौ वा गृहेऽपि वा बलिं दद्यादिति बलिविधिः सूच्यते । एवं नैष्ठिकस्य प्रत्यहं तर्पणं बलिं च न कुर्यात् । किं तु दाहान्ते तदर्थं तर्पणं कृत्वा शिवं पूजयेदिति च सूच्यते । ततो मृतमुद्दिश्य बन्धुभिः शोको नैव कर्तव्यः । नैव रोदनं च कार्यमिति सहेतुकं प्रतिपाद्यते । ततोऽस्थिसंचयनविधिरुच्यते । तत्र द्वितीयेऽह्नि शेषाङ्गदहनं कुर्याद्वा न वेति विकल्पो दृश्यते । तृतीयेऽप्यथवाह्नि संचयनं कुर्यादित्युच्यते । संचयनं विना गङ्गादौ क्षेपणाय नूतनमृन्मयपात्रेऽस्थिसंग्रहणं वा कृत्वा ग्रामाद्बहिर्निक्षिप्य षण्मासे वाब्दपूर्तौ वा तदूर्ध्वं वा गङ्गादिषु क्षिपेदिति तद्विधिः संग्रहेण प्रतिपाद्यते । तत आशौचविधिरधिकार्यनुसारेण विस्तरतः कथ्यते । एवं सप्तविंशपटलार्थसंग्रहः ।



अष्टाविंशतितमे पटले पितृयज्ञविधिः कथ्यते । तत्र प्रथमं लोकमार्गानुयायिनां गृहस्थानामवश्यं कर्तव्यः पितृयज्ञविधिः प्रतिपाद्यत इत्युच्यते । ततो गृहेऽङ्गणे बाह्यदेशे वा पितृगृहं प्रकल्प्य तत्र पीठविद्युक्तरीत्या सत्रिमेखलं पीठं, चतुरस्रखातमात्रेणावटं च कृत्वा, पीठमध्ये यथाविधि कूर्चं विन्यस्य, तत्र मृतस्यासनदानमूर्त्यावाहनादिकरणपुरः–सरमान्नोपहितैः स्नातैर्नवमृद्भाण्डे संपादितं गुडखण्डाज्यसंयुक्तं सोपदंशमन्नं ताम्बूलसहितं नित्यं कालद्वयेऽपि निवेदयेदथैककाले वा निवेदयेदित्युच्यते । अन्ननिवेदनविधिः समन्त्रकं प्रतिपाद्यते । कालद्वयेऽन्ननिवेदनमह्न्येव दातव्यमिति सूच्यते । ... बलिं दद्यादन्यत्रान्नं प्रकल्पयेदिति च विकल्पः सूच्यते । ततः पीठं विनावटं केवलं कृत्वा तत्र शरावे पाषाणमिष्टिकां वा निधाय तत्र पूर्वोदितं कूर्चं विन्यस्यैतत्कर्म कुर्यात् । पिण्डत्रयं तु वा देयमिति पक्षान्तरमभिधीयते । एतत्कर्म सप्ताहं नवाहं दशाहं वा समाचरेदित्युच्यते । ततो (दशमेऽहनि) तत्स्थानाद् मृदमुद्धृत्य पुष्पसमन्वितं पिण्डमिष्टिकायुक्तं तत्कूर्चं, तथैव पाषाणं पीठिकां वाद्योषसहितं वाद्योषेन विना वा तीर्थमध्यमे निक्षिपेदित्युच्यते । एतत्सर्वं कर्म नद्यादिके पुण्यस्थाने कर्तव्यमिति च सूच्यते । तत एतद्विधानं विप्रादीनां सामान्येनोक्तम् । अत्र विप्रविषये दशपिण्डाः, क्षत्रियविषये द्वादशपिण्डाः, वैश्यविषये पञ्चदशपिण्डाः, शूद्रविषये त्रिंशत्पिण्डाश्च देया इति विशेषोऽवगन्तव्य इति सूच्यते । एतेषां पिण्डोदकक्रिया यावदाशौचं कर्तव्येति च सूच्यते । ततः पिण्डदानविषये प्रथमे दिने पिण्डमेकं, द्वितीये दिने चतुरः पिण्डांस्तृतीये दिने पञ्चपिण्डांश्च दद्यादिति दिनत्रयपिण्डदानविधिरुच्यते । अन्ते दशाहे समतिक्रान्ते यदैकोद्दिष्टं क्रियते, तदा पिण्डमेकं दद्यात् । पिण्डप्रदानपर्यन्तमाशौचं स्यादिति च सूच्यते । एवमष्टाविंशतितमपटलार्थसंग्रहः ।

एकोनत्रिंशत्तमे पटले शैवश्राद्धविधिरुच्यते । तत्र प्रथमं दीक्षितानां श्राद्धविधिर्लेशादभिधीयत इति प्रतिज्ञा । ततः सामान्यतः श्राद्धं 'नित्यं, नैमित्तिकं, काम्यं, वृद्धिश्राद्धं, पार्वणम्' इति पञ्चविधमित्युक्त्वा तानि सलक्षणं प्रतिपाद्यन्ते । ततः 'पित्रर्थं श्रद्धया दत्तं भोजनं श्राद्धम्' इति श्राद्धशब्दार्थः कथ्यते । तत एकोद्दिष्ट–वर्षश्राद्ध–नवश्राद्ध-षोडशश्राद्धानां कालक्षणादिकं संक्षेपेण प्रतिपाद्यते । ततो मृतमुद्दिश्य पूर्वोक्तैकोद्दिष्टादिश्राद्धानामकरणे मृतस्य पिशाचत्वप्राप्तिरित्युच्यते । मृतो मृतदिनादारभ्य दशाहेषु प्रेतीभूतो गृहद्वारे भवननिचये आकाशे च तिष्ठति । सपिण्डीकरणादूर्ध्वं शिवलोकं गच्छतीत्यभिधीयते । ततः सोदकुम्भसपिण्डीकरणयोः कर्मणोः कर्तव्यः कालः कर्तव्यक्रमश्च निरूप्यते । तत एकोद्दिष्टक्रियान्ते वैश्यैः पक्षश्राद्धं कर्तव्यम् । शूद्रैः पाक्षिकं मासिकं च श्राद्धमेकोद्दिष्टक्रियान्ते कर्तव्यम् । अन्यत्सर्वं ब्राह्मणैः सह त्रिवर्णिनां समानं स्यादिति सूच्यते । ततः श्राद्धकर्मणि योग्याः काला निरूप्यन्ते । तत्र शस्त्राग्निभृगुपाताम्बुप्रवेशविधिना मृतानां विषये चतुर्दश्यां तत्तृप्तये श्राद्धं कुर्यादिति सूच्यते । राहुदर्शने रात्रावपि श्राद्धं करणीयमित्युच्यते । अत्राधिकार्यनुसारेण श्राद्धे वर्जनीयाः काला अपि सूच्यन्ते । अत्र मलमासः पितृदेवेभ्यः क्रियमाणेषु सर्वकर्मसु त्याज्य इत्युच्यते । कन्यां गते सवितरि पितरः (श्राद्धान्नभोजनाय) सुतान्यान्ति । वृश्चिकसंप्राप्तौ निराशाः पितरः सुदारुणं शापं दत्त्वा स्वभवनं यान्तीत्युच्यते । पितॄनुद्दिश्य श्राद्धमकुर्वाणः पङ्के गौरिव सीदतीत्युच्यते । ततो दैविकं श्राद्धं पूर्वाह्णे पैतृकं श्राद्धमपराह्णे च कुर्यात् । एकोद्दिष्टं मध्याह्ने वृद्धिनिमित्तकं श्राद्धं प्रातश्च कर्तव्यमित्युच्यते । तत आमश्राद्धकालस्तदधिकारी च प्रतिपाद्येते । ततः श्राद्धविषये निमन्त्रणयोग्यानां निरूपणविषये कल्पोऽनुकल्प इति पक्षद्वयं विधीयते । अत्र दैविककर्मणि ब्राह्मणं न परीक्षेत । पित्र्ये कर्मणि परीक्षेतेत्युच्यते । सात्त्विकराजसतामसरूपेण दानत्रयं प्रतिपाद्यते । व्रतस्थमपि दौहित्रं श्राद्धे प्रयत्नतो भोजयेदिति सूच्यते । ततः श्राद्धकर्तुः श्राद्धभोक्तुश्च नियमा वर्जनीया विषयाश्च प्रतिपाद्यन्ते । अत्र श्राद्धे शौचं क्रोधोऽत्वरा चैतत्त्रितयं प्रशस्तं भवति । तथा कुतपकालः सकुशाः तिलाश्च पवित्रा भवन्तीति श्राद्धे प्रशस्तानां निरूपणम् । एवं कोद्रवलवणजम्बूफलकूश्माण्डालाबुवार्ताकमाहिषक्षीरादीनि वर्जयेदिति वर्ज्यानां निरूपणम् । एवं श्राद्धे ग्राह्याग्राह्यविषयाणां प्रतिपादनम् । ततो निमन्त्रणविषये श्रेष्ठा निरूप्यन्ते । सति संभवे पित्रर्थं देशिकत्रयं देवविषये साधकद्वितयं च निमन्त्रयेदित्युच्यते । दीक्षितानां विषये पित्रर्थमीशसदाशिवशान्ता

इति त्रयः पूज्याः । विश्वेदेवार्थं रुद्रोऽनन्तश्चेति द्वौ पूज्यावित्युच्यते । रुद्रांशानां विषये पित्रर्थं स्कन्दचण्डगणेशा इति त्रयः पूज्याः । विश्वेदेवार्थं नन्दिमहाकालौ पूजनीयावित्युच्यते । पञ्चाभावे तत्र द्व्यकल्पनेति सूच्यते । ततो भोजनार्थं ब्राह्मणवरणविधिः प्रतिपाद्यते । अत्र श्राद्धदिनात्पूर्वेद्युरेव ब्राह्मणान्निमन्त्रयेदित्युच्यते । ततः पादशौचाय मण्डलकल्पनविधिरभिधीयते । अनन्तरं पित्रर्थं देवार्थं चार्घ्यकल्पनप्रकारो विधीयते । ततो द्रव्यशोधनविधिरुच्यते । ततः सामान्येन श्राद्धविधिः प्रतिपाद्यते । तत्र प्रथमं पादप्रक्षालनविधिः कथ्यते । तत आचमनकरणानन्तरं तान् सुधौतेष्वासनेषूपवेशयेत् । ततः 'श्राद्धं करिष्येऽहम्' इति तान् प्रार्थयेत् । कुरुष्वेति तदनुज्ञातः, तेभ्यो दर्भासनं दद्यात् । तत आवाहनादि कृत्वा, रक्षार्थं यवान् विकिरेदित्युच्यते । ततोऽर्घ्यदानविधिः प्रतिपाद्यते । ततो गन्धपुष्पधूपदीपोपचारकरणविधिरभिधीयते । ततः पवित्रं वस्त्रं प्रावरणोपेतमङ्गुलीयकं चादराद् दद्यादित्युच्यते । तत आवाहनादिकं प्रोक्तं क्रियाजातं सर्वं विश्वेदेवविषये उपवीतिना क्रमेण कर्तव्यमिति सूचयित्वा, पित्रर्थमेतत् क्रियाजातं कथ कर्तव्यमिति यथाविधि प्रतिपाद्यते । ततः भोजनपात्रसंपादनादिकं कथ्यते । ततः 'सर्वपाकविशुद्ध्यर्थं शिवानले होमं करिष्येऽहम्' इति तान् पृच्छेत् । कुरुष्वेत्यनुज्ञातो होमं कुर्यादित्युक्त्वा, तत्र विधेयो होमविधिः प्रतिपाद्यते । हुतशेषं पित्रर्थं पिण्डार्थं च प्रदद्यान्न विश्वेदेवविषय इति सूच्यते । ततो निमन्त्रितब्राह्मणभोजनविधिरुच्यते । तत्रापोशनार्थमाद्येनेशानमन्त्रेण पाणिपङ्कजे जलं प्रदाय यथासुखं भुञ्जीध्वमित्युक्ते तेऽपि वाग्यता भुञ्जीरन्नित्युच्यते । तत्कालेऽतिथिमागतं यथाशक्ति भोजयेत्, न विचारयेत् । देवो देवी गुहो विष्णुः साक्षाच्छरीरवान् धर्मश्चातिथिरूपेण चरन्ति । तान् विचारयेदिति च सूच्यते । श्राद्धकर्ता ईशानमन्त्रं जपन्नातृप्तेरुदगाननस्तिष्ठेदित्युच्यते । भोजनान्तेऽल्पमन्नमादाय 'तृप्ताःस्थ' इति पृष्ट्वा, 'तृप्ताःस्मः' इति तैः कीर्तिते तदन्नं भूमौ प्रक्षिपेदित्युच्यते । तत उच्छिष्टसंनिधौ विधेयः पिण्डविधिः प्रतिपाद्यते । ततो भोक्तॄन् गन्धपुष्पाद्यैः संपूज्य प्रणिपत्य क्षमध्वमित्युक्त्वा तान् क्षमापयेत् । ततस्तेभ्य आचमनं दद्यात् । ततस्तेभ्यः सताम्बूलं दक्षिणादानप्रकारो निरूप्यते । तत्र तृप्तये गृहोपकरणं गोभूदास्यादिकं च देयमिति सूच्यते । ततः श्राद्धकर्त्रा प्रष्टव्यानि वचनानि तदुत्तररूपेण भोक्तृभिर्वक्तव्यानि च यथावत् प्रतिपाद्यन्ते । अत्र 'अन्नशेषैः किं क्रियतामिति' श्राद्धकारिणा पृष्टे 'इष्टैः सहोपभोक्तव्यमिति भोक्तारो ब्रूयुः' इत्युच्यते । श्राद्धकर्ता पितृपूर्वं भोक्तॄननुव्रजेदिति कथ्यते । ततः पिण्डान्विप्रेभ्यो गोभ्यो वा प्रदद्यात् । अथवाग्नौ जले वा प्रक्षिपेदित्युच्यते । अत्र मध्यपिण्डं कुलपत्नी यदि समश्नीयात्तस्या लक्षणान्वितो धीरो यशस्वी पुत्रो जायेतेत्युच्यते । ततो वृद्धिश्राद्ध–नित्यश्राद्ध–नवश्राद्ध–एकोद्दिष्टश्राद्ध–सपिण्डीकरणश्राद्धानां विधिरतीव संक्षेपेण प्रतिपाद्यते । ततः श्राद्धं कुर्वतः सर्वकामावाप्तिर्भवति । श्राद्धकर्ता नैव सीदतीत्युच्यते । ततो विपन्नमुद्दिश्य श्राद्धकरणेऽधिकारिणो निरूप्यन्ते । तत्र पुत्राभावेऽनुपनीतोऽदीक्षितोऽपि सोदरः श्राद्धकर्मणि योग्य इत्युच्यते । कृतचूडः पिण्डदाने तथोदकक्रियायां च योग्यो भवति । स मन्त्रोच्चारणं विना स्वधाकारं प्रयुञ्जीतेत्युच्यते । तत एकवस्त्रो न भुञ्जीत, न कुर्याद् देवतार्चनमित्यादिनियमा विधीयन्ते । ततः श्राद्धकाले हव्यकव्ये द्रष्टुमनर्हाणां चण्डालादीनां निरूपणम् । ततः कुतपकालनिरूपणम् । ततो नवविधकुतपानां प्रतिपादनम् । उद्वाहात्परं नारी स्वगोत्रात् भ्रंशति । तस्याः स्वामिगोत्रेण पिण्डोदकक्रियाः कर्तव्या इत्युच्यते । आसुरादिविवाहविषये विशेषः कश्चित्कर्तव्य इत्युक्त्वा स विशेषः प्रतिपाद्यते । एवं एकोनत्रिंशत्तितमपटलार्थसंग्रहः ।

त्रिंशत्तितमे पटले प्रायश्चित्तविधिर्निगद्यते । तत्र प्रथमं प्रायश्चित्तकर्मणः स्वरूपं वर्ण्यते । तत्र चोदनालक्षणो धर्म इति धर्मस्वरूपमुच्यते । चोदना च विधिर्निषेध इति द्विविधा मता । तस्यां चोदनायां यथावदनुष्ठितायां धर्मसंग्रहो भवेत् । वैपरीत्ये त्वधर्मः स्यात् । अधर्माच्च पापं महद् भवेत् । पापेन नरकदुःखभोगमने प्राप्ते यदाचरितं कर्म कर्तारमूर्ध्वं प्रापयति तत् कर्म प्रायश्चित्तमित्यागमे प्रोच्यत इति प्रायश्चित्तकर्मणः स्वरूपं प्रत्यपादि । किं च 'प्रायः' इति शब्देन दोषः प्रकीर्त्यते । 'चित्' इति शब्देनास्मिन्नागमे आत्माभिधीयते । तकारेण तरणमुच्यते । तथा च येन कर्मणा सदोषस्यात्मनोऽधःपततस्तरणमूर्ध्वगमनं संभवति तादृशं कर्म प्रायश्चित्तमिति शब्दार्थविवरणं क्रियते । यस्मिन्कर्मण्यनुष्ठिते विधिर्निषेधो



न नास्ति तस्मिन्विषये पुण्यं पापं वा नेति शास्त्रार्थनिर्णय इति चोच्यते । ततः कर्मणामानन्त्याद् ग्रन्थविस्तरदोषतश्च विविच्य विशेषेण प्रायश्चित्तकर्म वक्तुं न शक्यम् । अतः सनातनं प्रायश्चित्तकर्म लेशान्निगद्यत इत्युक्त्वा 'स्नानं, जपः, शिवध्यानं, प्राणायामः, प्रदक्षिणं, लिङ्गबेरागमादीनां स्वगुरोर्देशिकस्य शिवज्ञानरतानां च दर्शनं, तन्निरीक्षणं, तेषां नमस्कारादिकरणं, शिवशास्त्रनिषेवणं, शिवाग्निगुरुपूजा, दीक्षितानां भोजनं, पुण्यतीर्थावगाहः, पञ्चगव्यप्राशनं, शिवाम्भः, अस्त्रोदकं, दीक्षा, पुण्यक्षेत्राधिवासनम् उपवासः, चरुभुक्तिः, पात्रशेषाशनं, शान्तिः, शान्तिहोमः, दिशाहोमः, संहिताहोमः, मूर्तिहोमः, घृतक्षीरस्नानादिकम्, एकाहाद्युत्सवः, शीतकुम्भः, विशेषार्चनम्' इत्यादिकं सनातनप्रायश्चित्तकर्मत्वेन समुद्दिष्टमिति तावत् कर्माणि निर्दिश्य, परिगणितेष्वेतेषु कर्मसु केषांचन कर्मणां विभज्य लक्षणं लेशात् प्रतिपाद्यत इति प्रतिज्ञा क्रियते । ततः पञ्चगोत्रसंभूतः शिवद्विजकुलोद्भवः सोष्णीषः सोत्तरीयो नवाम्बरसमावृतः पञ्चाङ्गभूषणोपेतो देशिको निष्कृतिं कुर्यादिति प्रायश्चित्तकर्मकरणेऽधिकारी निरूप्यते । ततोऽद्भुतविषये दिनपक्षर्क्षलग्नादिप्रेक्षणं विना सद्यः प्रायश्चित्तकर्म यदि क्रियते तदा श्रेष्ठं, सप्तदिनात्परं कृते मध्यमं, पक्षाहानन्तरं कृतेऽधमं, तस्मान्मासावसाने कृते हीनं भवति । ततो मासोर्ध्वं नैव कर्तव्यमिति कथ्यते । लिङ्गपीठविमानादिविषये प्रायश्चित्ते समुत्पन्ने आदौ मध्येऽन्ते वा संधानार्थं कर्ता देशिकः स्थानिको वा यदि वित्ताभावान्मनःक्षोभाद्रागद्वेषादिहेतुभिः पापकर्माभिघाताद्वा क्रियां प्रत्यौदासीन्यं कुर्युस्ते शिवद्वेषिणो नृपभञ्जाय जाता राष्ट्रक्षोभकारिणो भवन्ति । ते शिवभक्तैर्वीतरागैस्तपस्विभिरनुशास्याः । एवं देवस्वहारिणोऽपि शासनार्हा भवन्ति । सश्रद्धं ये निष्कृतिं कुर्वन्ति, ते नरोत्तमा राज्ञो हितकराः पुण्यकर्माणो राष्ट्रपोषकाश्च भवेयुः । तस्माद्यत्नेन प्रायश्चित्तं समाचरेदिति भण्यते । ततः पूर्वनिर्दिष्टसनातनप्रायश्चित्तकर्मसु मध्ये स्नानजपकर्मणी प्रतिपाद्येते । प्रदक्षिणाख्यं कर्म च सप्रभेदं फलप्रदर्शनपूर्वकं विस्तरशो निगद्यते । शिवाम्भसोऽस्त्राम्भसश्च संपादनप्रकारोऽभिधीयते । तत उपवासविधिर्विस्तरेण सोपभेदं प्रकीर्त्यते । अनन्तरं शान्तिकर्म यथाविधि निरूप्यते । तत्रान्ते शान्तिरेकत्रिपञ्चसप्ताहनवाहद्विसप्तदिनपक्षत्रिसप्तदिनसप्तविंशतिदिनैरविच्छिन्नतयानुष्ठेयत्वेन नवविधा भवतीति सूच्यते । नवविधानां कर्तव्यताप्रकारश्च सूचितः । ततः शान्तिहोमविधिर्वर्ण्यते । तत्र शान्तिहोमो द्विविध उद्दिष्टस्तत्र श्रेष्ठः पूर्वं निगद्यत इत्युक्त्वा श्रेष्ठस्य शान्तिकर्मणः कर्तव्यताप्रकारो निरूप्यते । अत्र मण्डपे नवकुम्भस्थापनं कृत्वा तत्र पाशुपतास्त्रसंपूजनं होमकरणं कुम्भस्थपानीयैरभितः प्रोक्षणं चेति क्रियाजातमभिधाय शान्त्युक्तदिनसंख्यया कुम्भस्थापनं विना होमो वा विधेय इति सूच्यते । द्विविध इति प्रतिज्ञाते शान्तिहोमे श्रेष्ठ एव प्रतिपादितोऽन्यो न प्रोक्तः । ततो दिशाहोमप्रतिपादनं दृश्यते । तत्र दिशाहोमो द्विविधस्तत्रैकः प्रायश्चित्तार्थं कर्तव्योऽपरः स्नपनाद्यङ्गभूत इत्युक्त्वोभयोरपि विधानं विस्तरेणाभिधीयते । अत्र शिवास्त्रप्रत्यङ्गिरास्त्रयोर्ध्यानप्रकारो विशिष्य प्रतिपाद्यते । ततः संहिताहोमो निगद्यते । तत्रायं होमः सर्वदोषनिकृन्तन इत्युक्त्वा तत्कर्तव्यताप्रकारो वर्ण्यते । ततो मूर्तिहोमप्रतिपादनं दृश्यते । तत्र प्रथमं प्रायश्चित्तार्थं विधेयो मूर्तिहोमो यथाविधि निरूप्यते । ततोऽन्योऽपि मूर्तिहोमस्य विशेषोऽत्र कथ्यत इत्युक्त्वा पूर्णाशार्चनहोमयुक्तोऽष्टकुण्डपञ्चकुण्डैककुण्डेषु कर्तव्यः श्रेष्ठादिभेदेन त्रैविध्यमापन्नो मूर्तिहोमोऽभिधीयते । अत्रैव मूर्तिहोमः संप्रोक्षणप्रतिष्ठादौ निष्कृत्यै न कर्तव्य इति सूच्यते । एवं पूर्वं सनातनप्रायश्चित्तकर्मत्वेन परिगणितेषु स्नानादिमूर्तिहोमान्तानि कानिचित्कर्माणि प्रतिपादितानि । घृतस्नानादिकर्मणां पूर्वमेव प्रोक्तत्वान्न पुनः कथ्यन्त इति सूच्यते । तत्र घृतस्नानविधिः क्षीराभिषेकविधिश्च नवमपटले, क्षीरस्नानाद्यनेकस्नानविधिर्विशेषपूजा च स्नपनपटले चतुर्थे प्रत्यपादिषत । एकाहाद्युत्सवविधिः षष्ठपटले महोत्सवविधौ निरूपितः । शीतकुम्भविधिः पञ्चदशपटले प्रोक्तः । एवं सनातनप्रायश्चित्तकर्मणां पूर्वं प्रतिज्ञातानां केषांचन कर्मणां सूचनं च दृश्यते ।

ततो नित्यविधौ संभवार्हान्नित्यपूजालोपादिविषयान्निर्दिश्य, तत्र आपद्यमानानामनिष्टानां सूचनं कृत्वा, तन्निवृत्तये विधेयानि प्रायश्चित्तकर्माणि निरूप्यन्ते । अत्र मध्ये मध्ये नैमित्तिके काम्ये च विधौ संभवार्हान्याद्यादिद्रव्यहीनरूपान्

विषयान्निर्दिश्य तत्र जायमानानामनिष्टानां सूचनं विधाय तेषामपि विषये दोषनिवृत्तये कर्तव्यानि प्रायश्चित्तकर्माण्यभिधीयन्ते। ततोऽष्टबन्धादिविश्लेषे निष्कृतिक्रम उच्यत इत्युक्त्वा नैमित्तिकविधौ संभाव्यमानान् दोषांस्तथा यदृच्छया संभवार्हान्दोषांश्च निर्दिश्य तेषु दोषेषु निष्पन्नेषु जायमानानामनिष्टानां सूचनपूर्वकं तन्निवृत्त्यर्थं विधेयानि प्रायश्चित्तकर्माणि प्रतिपाद्यन्ते। ततो देशं कालं वयः शक्तिं जातिं भक्तिं च सुविचार्य प्रायश्चित्तविषये क्रियाक्रमः प्रदातव्य इत्युच्यते। बालानामबलानां वृद्धानामातुराणां च पादांशतः प्रायश्चित्तं प्रदातव्यमिति सूच्यते। ततो देश आदिश्यते येन स देशिक इति कथ्यते। देशाश्च बहवः शास्त्रे कथ्यन्ते। तत्र मुक्तिस्थानं परं मतम्। भोगस्थानं देहस्तथा स्थानान्तराणि भवन्तीति निर्दिश्य देशिकेन प्रत्यवाये जाते विधेयानि प्रायश्चित्तकर्माणि विस्तरतः प्रतिपाद्यन्ते। तत उत्सवविषये संभवार्हान्दोषान्निर्दिश्य तेषु निष्पन्नेषु जायमानानामनिष्टानां सूचनपुरःसरं तत्र कर्तव्यानि प्रायश्चित्तकर्माणि विस्तरेण निरूप्यन्ते। अत्रान्ते एकदेवालयस्थितं कर्मैकेनाचार्येणैव कर्तव्यम्। अन्येन कृतं चेदाचार्यसंकरो भवेत्। स च दोषो राजानं राष्ट्रं च नाशयेदित्युक्तम्। एतद्विषये श्रोतॄणां मुनिपुङ्गवानाम् 'जलाद्याहरणं, गन्धपुष्पधूपादिकल्पनं, दीपनैवेद्यसंकल्पनं, सकलाराधनं, परिवारार्चनादिकं, नित्योत्सवगानादिकं, स्नपनाद्यङ्गकल्पनं तत्काले मूललिङ्गादिपूजनं नित्यहोमाचरणमित्यादिकमनेकनरनिर्वर्त्यं कर्मजातं कथमेकः कुर्यात्' इत्याक्षेपप्रतिपादनम्। तत्र शिवेन नित्ये नैमित्तिके काम्ये च विधौ यत्कर्मैकालये संभवति तदेकाचार्येणैव निर्वर्तनीयमिति पूर्वमुक्तम्। यद्यपि तद्गुरुभिरेव कर्तव्यं भवति। तथापि देशिकपुत्रपौत्रैस्तथा तद्वान्धवैस्तद्दीक्षितैस्तदादेशपालकैर्नैरादिशैवकुलोत्पन्नैर्विप्रैः क्षत्रियविट्शूद्रैरनुलोमजैर्गायकनर्तकादिभिस्तदाज्ञापालिकाभी रुद्रकन्यारुद्रदासीभिश्चानुष्ठितं कर्मापि देशिकानुष्ठितं भवति। यथा राज्ञा नियुक्तैः सामन्तप्रमुखैः कृतं राजकार्यं राजकृतत्वेन संमतं तथैवात्रापीष्यत इति समाधानं क्रियते। एवं त्रिंशतितमपटलार्थसंग्रहः।

एकत्रिंशतितमे पटले अद्भुतशान्तिरभिधीयते। तत्र प्रथममद्भुतानां विषये सर्वारिष्टनिवारिणीं शान्तिं वक्ष्यामीति प्रतिज्ञा। ततो रजन्यां भानुदर्शने, दर्शेऽभ्युदिते चन्द्रे, भूमिकम्पे, प्रासादमण्डपादिभ्रमणे, नदीतटाककूपादिक्षोभे, प्रतिमारोदने, प्रतिमायाः स्वेदोद्भवे, शोणितवर्षे, मधुक्षीराज्यवृष्ट्यादौ, मृचैलाश्मपांसुपादिवर्षे, लिङ्गबेरद्रुमादिभ्यः शोणितादेः समुद्भवे, अकस्माद् धामपतने, स्तूप्याद्यवयवच्छेदे, नासिकाद्यङ्गवैकल्ये, धाममध्यस्थदेवानां भग्नादिसंभवे, मण्डपादिपाते, लिङ्गादिसंयुतधाम्नः स्थानान्तरप्राप्तौ, वृक्षे स्थानान्तरं प्राप्ते, वृक्षे तदन्यवृक्षकुसुमोद्भवे तथा तदन्यफलसंभवे, लिङ्गे बेरे पीठे वोष्णादिसंभवे, नरमृगपशुपक्षिसरीसृपाणां स्वजात्यन्यसंतत्युत्पत्तौ, बहुशीर्षहस्ताङ्घ्रिनासादेहादिसंयुतानां तथा स्ववर्णेतरवर्णादिभ्रूविकारादिसंयुतानां स्पष्टवर्णरहितानां चाश्वादीनामुत्पत्तौ, पर्वतानां युद्धे, लिङ्गे बेरे पीठे वा स्वेदोद्भवे, लिङ्ग-बेर-विमान-मण्डप-गोपुरादिषु तथा परिवारालय-साल-आस्थानमण्डप-सभासु अशनिपाते, नृपगृह-चैत्यवृक्षाश्वत्थवृक्षेषु महाशनिपाते, करिण्या मदसंभवे, महावातप्रकोपे, वह्न्यावकस्माद्धूमसमुद्भवे, लिङ्गबेरासनयोर्धूमदर्शने, लिङ्गे पीठे बेरादौ वर्णान्तरसंभवे, भेर्यादीनां स्वयं घोषसंभवे, प्रतिसूर्यदर्शने, प्रतिचन्द्रदर्शने, रात्राविन्द्रधनुषो दर्शने, दिवा तारकादर्शने, महनक्षत्रपतने, अग्निनक्षत्रपतने, चन्द्रार्कमण्डले पक्षदिनोर्ध्वं परिवेष्टिते, दिशां बहिदाहे, लिङ्गादावर्चितपुष्पादीनामन्यवर्णोत्पत्तौ, अकस्माच्चैत्यवृक्षपतने, अकस्माच्छलभादिसंभवे, नरमृगपशुपक्षिसरीसृपाणामकस्मादुन्मत्ततासंभवे, अकस्माद् गजाश्वमरणसंभवे, अकस्मादतिवृष्टिसंभवे, अकस्माद् राज्ञः प्रधानमहिष्यश्वगजानां तथा प्रधानगुरुपुरोहितयोश्च मरणे समुद्भूते, प्रासादमण्डपादौ प्राकारे गोपुरे परिवारालयोर्ध्वे, नृपभवनोपरि गृहेषु मालिकादौ वा श्वारोहे तस्य रोदने च जाते, एतेषु मार्जारादीनां रोदने, एतेषु क्रोशशृगालरोहे, अश्वालयेऽग्निसंभवे, लिङ्गे पीठे बेरादौ च खद्योतारोहणे, लिङ्गमूले पीठे बेरे गर्भगृहे परिवारे वा प्रचुरमाक्षिकसमुद्भूते, स्वयमेव कवाटोद्घाटने पिधाने च जाते, सूर्येऽस्तं गते सूर्योदयात्पूर्वं वा व्योम्नि नानारूपाणां श्वेतरक्तादिवर्णानां दीर्घपुच्छानां नक्षत्रसंनिभानां केतूनां संचारे इत्येवंरूपेष्वद्भुतेषु दृष्टेषु जायमानान्यनिष्टानि प्रदर्श्य तन्निवृत्तये विधेयानां प्रायश्चित्तकर्मणां पृथक् पृथक् प्रतिपादनं दृश्यते। एवमेकत्रिंशतितमपटलार्थसंग्रहः।



द्वात्रिंशतितमे पटले अनुकर्मविधिरभिधीयते। तत्र प्रथमं सर्वेषां च सनातनमनुकर्मविधिं वक्ष्यामीति प्रतिज्ञा। ततः प्रासादे पतिते, भिन्ने, वक्रतां गते, जीर्णे, प्रासादविषये पतनादिहेतुना दिग्भ्रमे संजाते, अवयवानां हीने, मानोन्मानादिहीने च कर्तव्योऽनुकर्मविधिः प्रतिपाद्यते। तत्र मानोन्मानादिह्रासविषये उत्कृष्टद्रव्यैरथवा पूर्वं यैर्द्रव्यैः प्रासादाङ्गानि निर्मितानि तैर्द्रव्यैर्वा तान्यङ्गानि मानयुक्तानि कुर्यादित्युच्यते। ततः प्रासादेऽधिष्ठानाद्यङ्गविषये कर्तव्योऽनुकर्मविधिः प्रतिपाद्यते। ततः स्थावरजङ्गमादिलिङ्गविषये करणीयोऽनुकर्मविधिर्निरूप्यते। ततो मानवधाम्नि, नागरादिविमानेषु, भवनविषये, आद्येष्टकागर्भन्यासविषये चाचरणीयोऽनुकर्मविधिः सूच्यते। ततः शिवलिङ्गविषये सुस्थितं दुःस्थितं वापि लिङ्गं न चालयेदित्युक्त्वा सुस्थितदुःस्थितयोर्लिङ्गयोः स्वरूपमुच्यते। ततो जीर्णोद्धारे कृते मौलिकं फलं भवेत्। जीर्णादिलिङ्गं पूजितमपूजितमपि सर्वान्निहन्ति। अतो यथाशास्त्रं सुखाय जीर्णाद्यं समुद्धरेदित्युक्त्वा त्याज्यानि जीर्णादीनि षोडश लिङ्गानि निरूप्यन्ते। अथ जीर्णतादिदोषसंयुक्तपीठ-ब्रह्मशिला-वृषास्त्याज्या इति कथ्यते। ततो विषमस्थलस्थितानि लिङ्गानि, तथा चलितचालितपतितपातितानि लिङ्गानि, अशास्त्रस्थापितानि शैवादन्यैर्मन्त्रक्रियान्तरैः स्थापितानि लिङ्गानि, परित्यक्तशिलायोगं लिङ्गं च नैव सम्यक्स्थापितत्वेन गण्यन्ते। अतस्तान्यभग्नानि चेत् तथैव विधिवत्स्थापनीयानीत्युच्यते। ततोऽसुरैर्मुनिभिर्देवैस्तत्त्वविद्भिश्च प्रतिष्ठितं जीर्णं वाप्यथवा भग्नं लिङ्गं विधिनापि न चालयेदित्युच्यते। ततो नृपतस्करवह्निभ्यो भयादन्यत्र लिङ्गं रक्षणाय धारयेत्। अन्येन ह्रियमाणं हृतं च यद्भवेल्लिङ्गं तत्र न दोषोऽस्ति। लक्षार्धजपैः शुचिर्भवेत्। एतेषु लिङ्गेषु विषये चाधारहिते स्थलान्तरे स्थापनं कर्तव्यमिति स्थापनप्रकारः सूच्यते। ततो बेरेऽप्येतद्विधानं समानमित्युक्त्वा बेरविषयकानुकर्मविधिः प्रतिपाद्यते। तत्र बेरे जीर्णतादिदोषैर्दुष्टेऽन्यद्बेरं योजयेदिति कथ्यते। ततः शिलामये, पक्वमृण्मये, दार्वे, रत्नजे च बेरे पक्षमासभ्रूरेखादिहीनेऽङ्गहीने च तद्बेराणि त्याज्यानीत्युच्यन्ते। लोहजे पाकरहितमृण्मयबेरे च हस्तनासाङ्घ्रिकर्णदन्तादिभिर्हीने भूषणहीने च तत्तद्द्रव्यैर्दार्ढ्यं नयेत्। उत्तमाङ्गविहीने तु त्यक्त्वान्यनवं बेरं स्थापयेत्। पादबाहुहीने तु तत् त्याज्यमथवा तदङ्गैःसंधानं समाचरेदिति कथ्यते। ततः शरीराङ्गेषु अङ्गं, प्रत्यङ्गम्, उपाङ्गमिति त्रिधा स्मृतमित्युक्त्वा, तेषां लक्षणं प्रदर्श्य, तेषु हीनेषु विधेयोऽनुकर्मविधिर्निरूप्यते। ततः शैलं पक्वमृण्मयं च बेरं दोषदुष्टमम्भसि निक्षिपेत्। दोषदुष्टं रत्नजं बेरं त्याज्यमथवान्यत्र स्थापनाय ग्राह्यम्। दोषदुष्टं दारुबेरं शिवाग्नौ निक्षिपेत्। अथवा भूमौ खनित्वा निक्षिपेत्। जले वा प्रक्षिपेत्। दोषयुक्तं द्रवीकृतं लोहबेरं बेरान्तरकरणे योजयेत्। तत्प्रभां पीठिकां वापि तत्र वान्यत्र योजयेदित्युच्यते। (दोषदुष्टबेरसम्बन्धिन्यः) पीठिका ब्रह्मशिलास्तथा तदीयवृषश्च सर्वत्र योज्यास्त्याज्या वेति विकल्पोऽभिधीयते। दोषयुक्तशैलपीठस्योद्धारं कृत्वा शैलपीठमन्ययोजयेत्। शैलपीठाभावे चेष्टकाभिस्तथा पीठं सुयोजयेत्। पश्चाच्छैलबेरं समायोज्यम्। पीठाकृतिः पूर्ववद्भवेत्। चतुरश्रे वृत्तं वृत्ते वा चतुरश्रकं न कुर्यादिति पीठविषयेऽनुकर्मविधिरुच्यते। ततो मण्डपे परिवारे परिवारालयेऽन्तर्मण्डलसालादौ च धामवत् (प्रासादोक्तविधिवत्) अनुकर्मविधिं कल्पयेदिति सूच्यते। अनुकर्मविधौ यथाशास्त्रं सप्रमाणे विहितालंकृतिसहितविषये वास्तोर्वृद्धिक्षयकरणं नृपतेर्विपत्करमित्युच्यते। अप्रमाणविषये वृद्धिकरणे गुणो दोषश्च वर्ण्यते। गोपुरविषयेऽनुकर्मविधिः प्रासादोक्तवदाचरेदिति सूच्यते। एवं ग्रामादीनां शालादीनां गृहादीनां तथा गृहमालिकयोर्विषयेऽनुष्ठेयोऽनुकर्मविधिः सूच्यते। अतो चोक्तानां सर्वेषामपि विषये चोद्धारविधिरुच्यत इत्युक्त्वा तद्विधिर्यथावन्निरूप्यते। ततोऽज्ञैन तथा दैवज्ञैः शिल्पिभिस्तथा शिवदीक्षाविवर्जितैः शिवलिङ्गादि प्रतिष्ठितं चेत् तस्य भूयोऽपि पूर्वोक्तवत्संस्कारं देशिकः कुर्यात्। एवं शैवसिद्धान्तमार्गस्थादन्यैः पाशुपतादिभिः स्थापितं लिङ्गमपि पुनः संस्कुर्यात्। ततस्तल्लिङ्गं पूजयेदित्युच्यते। ततः शैवसिद्धान्तमार्गस्थेभ्योऽन्ये पाशुपतादयो निरूप्यन्ते। तत्र पाशुपताः, सोमसिद्धान्तकाः, लाकुला इति त्रिविधाः। ते च प्रत्येकं वामदक्षिणसिद्धान्तभेदेन त्रिविधा इति नवविधा भवन्तीति कथ्यते। ततो गारुडाः, भैरवाः, वामतन्त्रव्यवस्थिताः, भूततन्त्रव्यवस्थिता इति चतुर्विधाः शैवा विद्यन्ते। तेऽपि पूर्ववद् वामदक्षिणसिद्धान्तभेदेन प्रत्येकं त्रिविधा भवन्ति। एतैः स्थापितं लिङ्गमादिशैवः समर्चयेदित्युच्यते। ततोऽपरं (वक्ष्यमाणरौद्रभेदान्तर्गतयामलाङ्कितं) यामलतन्त्रं विद्यते, यदिह मिश्रमित्यभिधीयते। तदपि वामदक्षिणसिद्धान्तभेदेन

त्रिविधं भवति। तत्र वामं यामलं पारशिवादिकं, दक्षिणं यामलं भैरवादिकं, सिद्धान्ते यामलं शैवमादिशैवादिकं भवतीति कथ्यते। ततः सिद्धान्ताद् व्यतिरिक्तं सर्वं रौद्रमित्युदीरितम्। तच्च वामदक्षिणमिश्रादिभेदेन बहुभेदवदित्युक्त्वा रौद्राणि निर्दिश्यन्ते। तत्र पूर्वप्रदर्शितपाशुपतसोमसिद्धान्तलाकुलतन्त्राणि गारुडभैरववामतन्त्रभूततन्त्राणि यामलं च निगद्यन्ते। तथा वैदिकलौकिकाध्यात्मातिमार्गाख्यानि, कापालपाञ्चरात्रबौद्धार्हतबृहस्पतिमतसांख्ययोगवैखानसवेदान्तमीमांसापुराणेतिहासषडङ्गसौत्राख्यानि, धर्मशास्त्रं वास्तुशास्त्रं चत्वारो वेदाश्च परिगण्यन्ते। तत एतत्सर्वं रौद्रं सिद्धान्तं तु सौम्यं भवतीत्युच्यते। ततो रौद्रैः स्थापित विष्ण्वादिप्रतिमादिकं सर्वं शैवत्वेन समापाद्य शैवः, तत्सर्वं समर्चयेदित्युच्यते। तत आदिशैवेन स्थापितं पूजितं लिङ्गाद्यं रौद्रैर्यदि पूज्यते, तदा तद्राष्ट्रराजग्रामाणां तत्रस्थजनानां च नाशः स्यात्। एवं पूर्वं रौद्रैः स्थापितं, ततः संस्कारपूर्वकमादिशैवेन पूजितं यदि रौद्रैः पुनरपि पूज्यते, तदा सेनासहितसेनापतिमन्त्र्यमात्यानां विप्रक्षत्रियवैश्यशूद्राणामन्येषां जनानां च नाशो भवेत्। तस्माद् राजा प्रयत्नेन तान्वारयेदित्युच्यते। ततो रौद्रैः स्थापितस्य पश्चात्संस्कारपूर्वकमादिशैवेन पूजने राज्ञो विजय आयुर्वृद्धिश्च जायेतेति निरूप्यते। ततो रौद्रैः स्थापिताभिचारकलिङ्गादिषु वैरिभिर्न्यस्तानामभिचारमन्त्राणामुद्धारणविधिर्यथावत्प्रतिपाद्यते। ततः स्वायम्भुवदैविकबाणार्षगाणपेषु लिङ्गेषु छिन्नेषु भिन्नेषु स्फुटितेषु च विधेया शान्तिरभिधीयते। अन्यैतेषु लिङ्गेषु सर्वैरङ्गैर्विशीर्णेषु सत्सु पुनर्नूतनानि लिङ्गानि संपाद्य स्थापयेदिति सूच्यते। ततः प्रासादविस्तारोत्सेधयोस्तथा स्थले, स्तम्भाद्यङ्गेषु, ग्रामखेटपुरादिषु, शालेषु, अर्चासु, लिङ्गमानके, पीठकल्पने, द्वाराद्यङ्गेषु, ब्रह्मसूत्रके चैतेषु मानहीने दोषत्वेनागणनीयस्य क्षन्तव्यमानस्य निरूपणं दृश्यते। एवं द्वात्रिंशतितमपटलार्थसंग्रहः।

त्रयस्त्रिंशतितमे पटले काम्ययोगविधानविधिरुच्यते। तत्र प्रथमं मन्त्रैः काम्यसिद्धिः संभवति। मन्त्राश्च बहवः सन्ति। सर्वे मन्त्राश्चेष्टफलप्रदाने समर्थाः स्युः। तेष्वेकोऽघोरास्त्ररत्यन्तदीप्त इत्युक्त्वाघोरमन्त्रमूर्तिस्वरूपवर्णनं क्रियते। स्वसेनारक्षकः परसेनाभयंकरो वैरिप्रयुक्तकर्मघ्नः सर्वव्याधिनिवारकः सर्वदोषविनाशे समर्थो भक्तवत्सल इत्यघोरमूर्तिप्रभाववर्णनं दृश्यते। स चासिताङ्गादिभिरष्टभिरावृत इत्युक्त्वा तेषामष्टानां स्वरूपं निरूप्यते। ते च चतुर्भुजास्त्रिनेत्रा इत्युच्यते। ततो मृत्युञ्जयमन्त्रः प्रतिपाद्यते। तत्र मृत्युंजयमन्त्र एवामृतेश इति भण्यते। ततो मृत्युंजयमन्त्रमूर्तिस्वरूपं वर्ण्यते। तत्र मृत्युंजयमूर्तेश्चतुर्भुजत्वं षड्भुजत्वं च निरूप्यते। प्राणादिरक्षणेऽनेन मन्त्रेण सदृशो नास्तीति कथ्यते। ततो मृत्युंजयमन्त्रजपस्य तद्धोमस्य च फलं प्रदर्श्यते। ततो मृत्युंजयमन्त्रोपासकस्य नाचिरेणैव मृत्युः संभवति। तं साधकं कालः प्रदक्षिणं कृत्वा स्तुत्वा संपूज्य च गच्छति। नात्र संदेह इति कथ्यते। किंच स साधको दृशा वाचा चरणेन करेण च नदीजनपदोद्यानपुरादीनि पुनाति। भीतं प्राणिनं स्वात्मानं स्वाश्रयं च पुनातीति मृत्युंजयमन्त्रमहिमा वर्ण्यते। ततोऽघोरास्त्रमूर्तिध्यानं प्रकारद्वयेन निरूप्यते। प्रथममष्टभुजत्वेन द्वितीयं चतुर्भुजत्वेन च वर्ण्यते। ततोऽघोरास्त्रमन्त्रवर्णनं दृश्यते। ततोऽघोरास्त्रमन्त्रं परचक्रप्रमथने, महाव्याधिप्रकोपने, शान्तिके, पौष्टिके, वश्ये, प्रायश्चित्ते च विचिन्तयेदित्युच्यते। मन्त्रेणानेन ज्वरविषादयो ग्रहदोषाश्च नश्यन्ति। परैः प्रयुक्तमभिचारादि कर्म, मन्त्रौषधादिकं, यन्त्राणि सर्वाण्यपि पावके शलभा इव नश्यन्तीत्युच्यते। ततः पाशुपतास्त्रं शिवास्त्रं क्षुरिकास्त्रं चानेनैव प्रकारेण ध्यात्वा संपूजयेदित्युक्त्वा पूजनप्रकारः संक्षेपेण प्रतिपाद्यते। तत्र शिवास्त्रस्थाने प्रत्यङ्गिरामन्त्रं तथा क्षुरिकास्त्रस्थाने संग्रामविजयमन्त्रं वा पूजयेदिति विकल्पविधिश्च सूच्यते। एवं योऽभ्यर्चयेत् साधकः, स शिवसदृशो भवेत्। अस्य साधकस्यासाध्यं कर्म त्रिभुवनेऽपि नास्तीत्युच्यते। ततो दक्षिणामूर्तिमन्त्रोद्धारोऽभिधीयते। तत्र च प्रथमं मन्त्रेणानेन जयोत्पादने वाक्सिद्धिर्जायते। अन्यानि सर्वाण्यपि फलान्यनेन मन्त्रेण सिध्यन्तीत्युच्यते। ततो दक्षिणामूर्तिमन्त्रस्वरूपं प्रतिपाद्यते। ततो दक्षिणामूर्तिध्यानमुच्यते। अत्र दक्षिणामूर्तिर्मुनिसंघैः समावृतो महावृषभसंयुक्तश्चतुर्बाहुर्नयनत्रयसंयुत इति वर्ण्यते। ततः संग्रामविजयमन्त्रस्वरूपं निरूप्यते। साधक एतन्मन्त्रप्रभावेण त्रैलोक्यविजयी भवेत्। मन्त्रोऽयं मन्त्रराजत्वेन प्रशंस्यते। ततः सूर्यमूर्तिध्यानं वर्ण्यते। ततः सूर्यस्य गर्भावरण-



दीप्तादिशक्त्यावरणग्रहावरणलोकपालावरणपूजा संक्षेपेण कथ्यते। तत्र कामाचाररतो वापि सदा भास्करं भावयेदिति सूच्यते। ततः प्रत्यङ्गिरामन्त्रोद्धार उच्यत इति प्रक्रम्य, 'एष प्रत्यङ्गिरामन्त्रः सर्वभक्तिप्रदः, सर्वव्याधिविध्वंसकः ज्वरापस्मारमारीणां नाशकः, शापनाशकः, शत्रुकृत्यादिसंभूतरोगानीकविनाशकः, चतुरङ्गबलोपेतशत्रुक्षयकरः, स्वसेनारक्षकः, सर्वकर्मसु समर्थ इति प्रत्यङ्गिरामन्त्रमहिमा वर्ण्यते। ततः प्रत्यङ्गिरामन्त्रस्वरूपं प्रतिपाद्यते। अत्र प्रत्यङ्गिरेयं शतवर्णस्वरूपिणीति कथ्यते। ततः प्रत्यङ्गिराध्यानं कथ्यते। अत्र प्रत्यङ्गिरा चतुर्बाहुत्वेन वर्ण्यते। साधक एकाग्रमनाः प्रत्यङ्गिरादेवीं ध्यायन् सर्वशत्रून्विनाशयेत्। सर्वरोगान् ध्वंसयेत्। परमन्त्रान्निवारयेदिति मन्त्रध्यानफलानि निगद्यन्ते। ततो विद्याधरत्वकामाय, यक्षिणीसिद्ध्यै, तुष्ट्यै, स्तम्भनाय, मोहनाय, उत्सादनाय, भेदनाय, राजयक्ष्मादिरोगशान्त्यै, उदररोगशान्त्यै, अक्षिरोगशान्त्यै, विषमज्वरनाशनाय, सर्वोपद्रवनाशाय, वातपित्तश्लेष्मशान्त्यै च कर्तव्या होमा विधीयन्ते। एवं त्रयस्त्रिंशतितमपटलार्थसंग्रहः।

चतुस्त्रिंशतितमे पटले संप्रोक्षणविधिः कथ्यते। तत्र प्रथमं सर्वदोषनिकृन्तनं संप्रोक्षणविधिं वक्ष्यामीति प्रतिज्ञा। ततः संप्रोक्षणम् 'आवर्तम्, अनावर्तं, पुनरावर्तनम्, अन्तरितकमिति चतुर्विधं भवतीत्युक्त्वा तेषां लक्षणं तत्कर्तव्यताप्रकारश्चातीव संक्षेपेण प्रतिपाद्येते। तत्र यात्राहोमयुगावर्तमन्यानि तद्विहीनानि। तथावर्ते लिङ्गस्थापनोक्तप्रकारेण मासपक्षनक्षत्रादिकालसर्वाङ्गसम्यगन्वीक्ष्य क्रियारम्भः कर्तव्यः। अनावर्तादीन्यन्यानि कालापेक्षां विनानुष्ठेयानीत्यादिविषया उच्यन्ते। एवं चतुस्त्रिंशतितमपटलार्थसंग्रहः।

पञ्चत्रिंशतितमे पटले पीठप्रतिष्ठाविधिर्निगद्यते। तत्र प्रथमं लक्षणपुरःसरं पीठसंस्थापनं वक्ष्यामीति प्रतिज्ञा। ततो लिङ्गायामविशालं विष्ण्वंशसमतुङ्गं पूजांशोदयमान्तनिर्गमनान्वितं छायादोषविवर्जितं सर्वार्थसाधकं पीठमिति लिङ्गविषये पीठसामान्यलक्षणमभिधीयते। ततो लिङ्गमानेनाङ्गुलमानेन हस्तमानेन च पीठविस्तृतिः प्रतिपाद्यते। अत्र लिङ्गायामाधिकः पीठविस्तारो नेष्यत इत्युच्यते। ततो मानुषस्वायम्भुवादिलिङ्गचललिङ्गेषु विषये सामान्यं किंचिद्विधानमुच्यते। लोहजरत्नलिङ्गबाणलिङ्गविषये चतुरश्रं वर्तुलं वा पीठरूपं संमतमित्यभिधीयते। ततो बेराणां पीठकल्पनविषये विस्तारोत्सेधयोर्मानं निरूप्यते। तत्र स्थानकासीनबेरयोर्विषये पीठेषु पद्मकल्पने पद्मतुङ्गविस्तारयोर्मानं निरूप्यते। तयोर्ध्वपद्माधःपद्मकल्पनप्रकारश्च कथ्यते। तत अनेकबेराणामेकपीठकल्पनं यदि क्रियते तदा तत्पीठं शोभायुक्तं कुर्यादित्युच्यते। बेराणां विषये पीठाकृतिः वृत्ता, आयतवृत्ता, अर्धचन्द्राकृतिः, पद्माकृतिर्वा कल्पनीया। आसीनबेरविषये त्वर्धचन्द्राकृतिर्विधेयेत्युच्यते। ततो लिङ्गसम्बन्धिपीठानां तुङ्गविषयेऽलंकारः कथ्यत इत्युक्त्वा भद्रपीठ - पद्मपीठ - श्रीकरपीठ - शाम्भवपीठ - विजयपीठ - उमापीठ - संपत्करपीठ-नन्दिकावृत्तपीठ - स्वस्तिकपीठ - पूर्णचन्द्रपीठ - स्थण्डिलपीठ - स्वायंभुवपीठानां कल्पनप्रकारो निरूप्यते। ततः पीठाङ्गनामविधानादीनां योजनाप्रकारोऽभिधीयते। तत्र घृतवारि वृत्तं वा चतुरश्रं वा विधेयमिति सूच्यते। ततः सकलनिष्कलपीठेषु सर्वेषु विषये मानविषये वृद्धिहानिकल्पनप्रकारोऽपि सूच्यते। ततो निष्कलपीठे नालकल्पनप्रकारस्तन्मानादि च प्रतिपाद्येते। सकलानां पीठं सनालमनालं वा तथा घृतवारिसहितं तद्विहीनं वा कल्पयेदित्युच्यते। ततः प्रभालक्षणं, तस्याः पीठे योजनप्रकारश्च कथ्येते। ततः पिण्डिकायामुमादेवी लिङ्गे सदाशिवश्च निवसतः। तयोर्योगो यत्र क्रियते सैव प्रतिष्ठेति भण्यते। स च योग आद्यः पश्चाद्भवश्चेति द्विविधो भवति। तत्राद्यो लिङ्गस्थापनकर्मण्येव कथितः। द्वितीयोऽधुना प्रतिपाद्यत इत्युक्त्वा पीठस्थापनविधिप्रकारो निरूप्यते। तत्र प्रथमं मानवलिङ्गविषये पीठे जीर्णतादिदोषसंभवे यदि पीठान्तरस्थापनं क्रियते, तदा पूर्वं यादृशाकारं पीठमासीत्तदाकृतियुक्तमेव पीठं स्थापनीयम्। अन्याकारतया कल्पने दोषः स्यात्। एवं दैविकार्षकबाणस्वायम्भुवलिङ्गविषये सर्वत्र वृत्तपीठं वा पूर्वाकृतियुक्तं वा स्थापनीयमिति कथ्यते। तच्च पीठं पूर्वं यद्द्रव्येण निर्मितं तद्द्रव्येणैव वा तदुत्कृष्टद्रव्येण वा कर्तव्यमित्युच्यते। ततो लिङ्गस्थापनोक्तमार्गेण सर्वाः क्रियाः कारयेत्। विशेषस्त्वत्र कथ्यत इति सूच्यते। ततः प्रागुक्तवर्त्म-

नाङ्कुरार्पणकर्म कृत्वा वेदिकास्नानमण्डपकुण्डसहितं मण्डपं निष्पादयेत् । ततो विशेषयजनं कृत्वा परमेश्वरं स्तुत्वा मुहुर्मुहुर्नत्वा विज्ञाप्य लब्धानुज्ञः क्रियामारभेदित्युच्यते । ततो लिङ्गाग्रे स्थण्डिलं कृत्वा तन्मध्ये शिवकुम्भं वर्धनीं तयोः परितोऽष्टकुम्भान् सूत्रादिभिः संयुतान्संस्थाप्य गन्धपुष्पाद्यैरर्चयेदित्युक्त्वा तत्र विधेयः पूजाविधिः प्रतिपाद्यते । ततस्तथैव तत्र कर्तव्यो होमविधिश्च कथ्यते । ततो लिङ्गाग्रे पूजितान्कुम्भानन्यत्र स्थण्डिले स्थापयित्वा प्रत्यहं नित्यपूजां कुर्यादित्युच्यते । ततो हैमटङ्केन जीर्णतादिदोषदुष्टं पीठमस्त्रमन्त्रमुच्चरन्विच्छिद्य तदुद्भूतसुधादिकमगाधेऽम्भसि निक्षिपेत् । ततस्तत्र प्रत्यहं शान्तिहोमो विधेय इत्युच्यते । ततो लिङ्गस्य शाणाभिघर्षणपूर्वकं कषायोदकगोमूत्रगोशकृद्भिः शुद्धिं कृत्वा तत् पञ्चमृत्पञ्चगव्यतः स्नापयित्वा वस्त्रचन्दनपुष्पाद्यैः पूजयेदित्युच्यते। ततोऽन्यस्मिन्मण्डपे मध्ये स्थण्डिलं कल्पयित्वा तस्मिन् पिण्डिकां स्थापयित्वा तत्र भगाङ्कं लक्ष्म लक्षयेत् । ततो मृत्युञ्जयमन्त्रमुच्चरन्मध्वाज्याभ्यां तत्र संतर्पणं, तथा मध्वाज्यसमन्वितताम्रकांस्यजपात्रसंदर्शनं, धान्यराशिसवत्सगोकन्यानां संदर्शनं च समन्त्रं प्रदर्श्यते । ततः पीठस्य संशुद्धिपुरःसरं वस्त्रगन्धादिनाऽभ्यर्चनं, ग्रामप्रदक्षिणपूर्वकं जलतीरं नीत्वा जलाधिवासकरणप्रकारश्च प्रतिपाद्यते । ततो यागमण्डपमासाद्य, गुरुस्तन्मण्डपं शिल्पिविसर्जनपूर्वकं ब्राह्मणभोजनगोमयालेपनपुण्याहवाचनवास्तुहोमविधानैः संस्कृत्य तोरणवितानध्वजदर्भमुक्तापुष्पमालाभिरलंकृत्य सर्वलक्षणसंपन्नं कारयित्वा, द्वाराण्यस्त्रमन्त्रेण संप्रोक्ष्य द्वारद्वारपपूजनं च विधाय, मण्डपं प्रविश्यात्मानं सकलीकृत्यान्तर्यजनं विधाय गृहीतज्ञानखड्गहस्तः कृतास्त्रपूजनः कुम्भास्त्राधिपानां पूजां कृत्वा कृतकुण्डाग्निसंस्कारो जलेऽधिवासितां पिण्डिकां मण्डपमानीय स्नानमण्डपे मृत्कषायोदकाद्यैः पञ्चामृतैः कुशगन्धजलैश्च संस्नाप्य, वस्त्रयुग्मेन समाच्छाद्य, तत्काले तद्बलेऽपि वा कौतुकबन्धनं कृत्वा, मण्डपे विधिवत् स्थण्डिलं प्रकल्प्य तत्र चर्माद्यैः शयनं विधाय, तत्रासनं संकल्प्य, पिण्डिकां विन्यसेदिति पिण्डिकायाः शयनाधिवासविधिः प्रतिपाद्यते । ततः सूत्रवस्त्रपरिच्छन्नं कूर्चफलपल्लवैरन्वितं नवरत्नहेमपङ्कजसमन्वितं करकं विन्यस्य तन्मध्ये सासनां देवीं गन्धपुष्पाद्यैः समर्चयेत् । तं करकं परितः सूत्रवस्त्राद्युक्ताः सहेमाः फलपल्लवोपेता वामाद्यष्टशक्त्यधिष्ठिता अष्ट वर्धनीः स्थापयेदित्युक्त्वा तत्र मूर्तिमूर्तीश्वरीन्यासप्रकारस्तथा तत्त्वतत्त्वेश्वरीन्यासप्रकारस्तदर्चनप्रकारश्च वर्ण्यन्ते । ततस्तत्र विधेयो होमविधिरन्तर्बलिबहिर्बलिप्रक्षेपविधिश्च निरूप्यते । ततः प्रभाते गुरुर्मूर्तिपैः सहितः शुचिः कृतनित्यक्रियः सामान्यार्घ्यकरो द्वारद्वारपार्चनं कृत्वा, गन्धादिभिर्नैवेद्यान्तैः पिण्डिकां वर्धनीं च संपूज्य, पूर्णाहुत्यन्तं होमविधिं च समाप्य, पिण्डिकां सर्वातोद्यसमायुक्तं नृत्तगानसमन्वितं ग्रामप्रदक्षिणपूर्वकं गर्भगेहे निवेशयेत् । ततो लिङ्गस्थापनोक्तविधिना पिण्डिकां लिङ्गे निवेशयेदित्युच्यते । ततो बाणलिङ्गस्य पिण्डिकास्थापनविषये विशेषविधिः प्रतिपाद्यते । ततः पीठस्य गर्ते रत्नानि सुवर्णं वा निक्षिप्य प्राग्वत्सर्वं समाचरेदिति रत्नन्यासविधिः कथ्यते । ततोऽष्टबन्धं त्रिबन्धं वा संयोज्य पुण्याहप्रोक्षणं शान्तिकुम्भतोयाभिषेचनं च कुर्यात् । ततः पीठे आसनाणुं विन्यसेत् । ततः पूर्वं लिङ्गाग्रे स्थापितशिवकुम्भवर्धन्यौ, ततो यागमण्डपे वामादिशक्त्यधिष्ठितवर्धनीभिर्युक्तां देव्यधिष्ठितां वर्धनीं च देवाग्रे स्थापयित्वा जीवन्यासं विधायाभिषेचनं कुर्यात् । गन्धाद्यैः समर्चयेत् । ततो 'यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी । तावदत्र त्वया देवि सांनिध्यं कुरु सर्वदा' इति संप्रार्थयेत् । ततो लिङ्गस्थापनोक्तदक्षिणार्धं देशिकादिभ्यो दद्यात् । ततो दिनचतुष्टयं दिनत्रयं दिनद्वयमेकदिनं वा होमेन समन्विता विशेषपूजा कर्तव्या । चतुर्थदिने प्रथमदिने वा चण्डपूजां कुर्यात् । बाणादौ चण्डपूजा नेष्यतेऽथवा परिभाव्यतामित्युच्यते । पीठसंस्थापनस्य फलं लिङ्गप्रतिष्ठाफलसमानमिति कथ्यते । एवं पञ्चत्रिंशत्तमपटलार्थसंग्रहः ।

षट्त्रिंशत्तमे पटले बाणलिङ्गप्रतिष्ठाविधिरुच्यते । 'तत्र प्रथमं बाणासुरप्रार्थनया तस्मै पूजार्थं महेश्वरेण चतुर्दशकोटिलिङ्गानि प्रदत्तानि । स च तानि संपूज्य कालान्ते नेपालेऽन्यत्र नदीमध्ये पर्वतादिषु न्यक्षिपदिति बाणलिङ्गप्रादुर्भावो वर्ण्यते । बाणलिङ्गविषये पादाङ्गुलविवृद्ध्या माषमात्रादिहस्तान्तमौत्सये मानं कल्पनीयम् । मानं विना यथेष्टं वा गृह्यतामिति विकल्पश्चोक्तः । विस्तारनाहविषये मानं नेष्टमिति मानविधिरभिधीयते । किं च रेखाबिन्दुकलङ्कादिरहितं तदुक्तं वा बाणलिङ्गं



[illegible]मित्युच्यते । सर्वेषामपि लिङ्गानां बाणलिङ्गं विशिष्यत इत्यप्युच्यते । ग्रामादिसर्ववास्तूनां बाह्ये बाह्यान्तरेऽपि वा [illegible] विमानं कल्पयेदित्युच्यते । ततः शिलामृल्लोहरत्नदार्वाद्यैर्बाणलिङ्गस्य पीठं कुर्यात । तच्च पीठमेकवर्णं सर्वकामार्थ[illegible] कल्पनीयमित्युक्त्वा तत्पीठस्यातमानप्रकारो निरूप्यते । ततः सरित्प्रवाहस्थे पर्वतादिसमुद्भूतं बाणलिङ्गसमाकृति [illegible] लिङ्गमुपलभ्यते तदपि सर्वसुखावहमित्यभिधीयते । रत्नजलोहजपार्थिवलिङ्गेषु विषये पीठं स्वयोनि अन्ययोनिकं वा स्यात् [illegible] पीठं श्रेष्ठमिति कथ्यते । ततः पूर्वप्रदर्शितानां सर्वेषामपि लिङ्गानां प्रतिष्ठायां निगद्यत इति प्रतिज्ञा दृश्यते । ततः [illegible]प्रतिष्ठायां श्रेष्ठः कालः समुदाहृतः । तथैव चललिङ्गप्रतिष्ठायां प्रतिमादिप्रतिष्ठायां च मध्यमः काल इष्यते । बाणादिलिङ्गेऽधमः [illegible] । अत्र विषये मुमुक्षोर्विषये विशेषः सूच्यते । ततो वज्रबन्धं विधाय बाणलिङ्गस्थापनमारभेदित्युक्त्वा तल्लिङ्गस्थापन[illegible] संक्षेपेण प्रतिपाद्यते । तत्रान्ते यदनुक्तं भवेदत्र तल्लिङ्गस्थापनोक्तवत्कुर्यात् । चतुर्थदिनहोमश्चण्डेशयजनं चात्र नेष्यत इति सूच्यते । ततो जीर्णतादिदोषदुष्टं बाणलिङ्गं विधिनापि न चालयेत् । स्वर्णमुद्राद्यैः सुदृढं कृत्वा शान्तिं समाचरेदित्युक्त्वा [illegible]विषये जीर्णोद्धारविधौ करणीयः क्रियाकलापो निरूप्यते । ततो बन्धविश्लेषकम्पे, स्थलकम्पे, सुधाकर्मविहीनक[illegible] करणीय इत्युक्त्वा तत्तत्कर्मानुसारेण विधेयो विशेषविधिः प्रदर्श्यते । प्रासादे पतिते भिन्ने स्वायम्भुवादिलिङ्ग[illegible] सामान्यमित्युच्यते । तत्र स्वायम्भुवादिलिङ्गानां विषये मन्त्रसंकरो नेष्ट इत्युच्यते । रत्नजे स्वर्णादिलोहजे [illegible] चलेऽप्यचले च लिङ्गविषये स्थापनं बाणलिङ्गस्थापनवत्कर्तव्यमिति सूच्यते । ततोऽन्ते चललिङ्गमङ्गं प्राधानिकमिति द्विविधं भवति । तत्र चित्रादिप्रतिमादीनां पूजार्थं तदग्रके पूजितं लिङ्गमङ्गमिति कथ्यते । तदन्यत्प्राधानिकं भवति । अङ्गिनः पूजा[illegible] यथा शास्त्रचोदिता नित्योत्सवादिसंयुक्ता तथा तस्य पुनःक्रिया भवेत् । अन्यत्र नित्योत्सवादिकं शुद्धनृत्तं च [illegible] प्राधान्यत्वेन समुद्दिष्टम् । एतद्विधानमङ्गार्थपूजायां विशिष्यत इति सूचितम् । एवं षट्त्रिंशत्तमपटलार्थसंग्रहः ।

सप्तत्रिंशत्तमे पटले काम्यलिङ्गप्रतिष्ठाविधिरभिधीयते । तत्र लक्षणपूर्वकं काम्यलिङ्गप्रतिष्ठां वक्ष्यामीति प्रतिज्ञा । ततः काम्यानि च सिद्धित्वेनेष्यन्ते । सिद्धयश्च बहुधा दृश्यन्ते । तासु सिद्धिषु च कन्यस-मध्यम-ज्येष्ठ-श्रेष्ठत्वेन चत्वारो भेदाः सन्ति । एतेषु चतुर्विधेषु च प्रत्येकमुत्तमादिभेदेन त्रैविध्यं वर्तते । एतेषां सिद्धिभेदानां फलं दृष्टादृष्टं परापरमिति द्विविधं भवतीत्युच्यते । पूर्वोक्तसिद्धिभेदानां फलयोश्च स्वरूपं संक्षेपेण प्रतिपाद्यते । तत्र भूपतीशत्वं कन्यसः सिद्धिभेदः । बलसिद्धयो [illegible]सिद्धिभेदत्वेन मताः । खेचरत्वं ज्येष्ठसिद्धिभेदत्वेन संमतम् । देवसमानता श्रेष्ठसिद्धिभेदत्वेनेष्यते । देवसमानतरूपः सिद्धिभेदो विधेशत्वरुद्रत्वब्रह्मत्वविष्णुत्वादिभेदेनानेकधा भवति । एवमणिमादिसिद्धयश्चक्रवर्तित्वं च सिद्धीनां श्रेष्ठत्वेन कथ्यन्ते । [illegible] गुलिकाञ्जनपातालखड्गघण्टादिकमध्यमम्, अपमृत्युञ्जयआढ्यत्ववश्याकर्षणमधममिति प्रोच्यते । मायाकार्ये यदनेन देहेनोपभुज्यते तद् दृष्टं, यद् देहान्तरेणोपभुज्यते तददृष्टमित्युच्यते । एवं मायाकार्ये परत्र यदमरेशादिरुद्रस्थाने सुखं तदपरं, [illegible]दिपदस्थाने सुखं तत्परमिति फलस्वरूपं निरूप्यते । ततः 'सिद्धिर्मुक्तिश्च लिङ्गाश्रयणं विना न संभवति । [illegible] वसवो रुद्रा मुनयश्च विधिवल्लिङ्गमाराध्येष्टतमं फलं प्राप्ताः । तस्माद् मर्त्यैः साधकोऽपि च युक्तलिङ्गं समाश्रित्य [illegible] सिद्धिं साधयेत् । स्वयं कर्तुमशक्तानां हिताय वा देशिकः सिद्धिं साधयेत् देशिको लिङ्गार्थं शिलादिद्रव्यं [illegible] कर्मानुरूपतो लिङ्गमुत्पादयेत् । तानि च द्रव्याणि शिलामृल्लोहरत्नशृङ्गिकवस्तूनि बहूनि भवन्ति । तानि द्रव्याण्यशेषतः [illegible]न्ते' इत्युक्त्वा शिलादिद्रव्याणि निरूप्यन्ते । द्रव्याणि च विप्रादिजात्यनुसारेण फलानुसारेण षट्कर्मानुरूपतश्च [illegible]न्ते । द्रव्यनिरूपणानन्तरं काम्यलिङ्गानां लक्षणं विधीयत इत्युक्त्वा प्रथमं लिङ्गानां विषये मानं निरूप्यते । अत्र [illegible]मानेन अङ्गुलमानेन हस्तमानेन च लिङ्गविधानप्रकारो निरूप्यते । ततो लिङ्गानां लक्षणं प्रतिपाद्यते । अत्र [illegible]दिदशायुधमस्तकानां लिङ्गानां तथा सिद्धिलिङ्ग–सहस्रलिङ्ग–अष्टोत्तरशतलिङ्ग–धारालिङ्गानां लक्षणं निरूप्यते । ततः

शिरोवर्तनप्रकारो विधीयत इत्युक्त्वा पुण्डरीक–विशाल–श्रीवत्स–शत्रुमर्दन–कुक्कुटाण्ड–त्रपुषाकृति–छत्रशीर्षाख्यानां शिरसां वर्तनप्रकारोऽभिधीयते । ततो लिङ्गेषु लक्षणोद्धारविधिरुच्यते । अत्र मूर्ध्नि वज्राद्यायुधलाञ्छनविधानप्रकार उच्यते । शिरोवर्तनलक्षणोद्धारविधिप्रतिपादने तत्तत्फलान्यपि सूच्यन्ते । मणिमुक्ताप्रवाललिङ्गेषु, बाणलिङ्गे, लोहजलिङ्गे च स्वतेजोलक्षणमेव लक्षणं भवति । तत्तदेषां विषये लक्षणोद्धारो नेष्यत इत्युच्यते । ततः पीठपिण्डिकयोर्लक्षणं निरूप्यते । तत्र 'ऐन्द्रम्, आग्नेयकं, याम्यं, राक्षसं, वारुणं, वायव्यं, याक्षम्, ऐशान्यं, ब्राह्मं, गारुडम्' इति दशानां पीठानां नामनिर्देशपूर्वकं लक्षणं प्रतिपाद्यते । एवम् 'ऐन्द्री, आग्नेया, याम्या, राक्षसी, वारुणी, वायव्या, याक्षी, ऐशी, ब्राह्मी, वैष्णवी' इति दशानां पिण्डिकानामपि लक्षणं कथ्यते । ततोऽत्र वज्रलिङ्गे वज्री, आश्मेऽश्मसंभवा पार्थिवे पार्थिवी दारुजे दारुजा धातुजे धातुसंभवा रत्नजे रत्नजा च पिण्डिका श्रेष्ठा भवति । अथवा श्रेष्ठैर्लोहैः कर्तव्येत्युच्यते । चललिङ्गे रत्नबाललिङ्गेषु च मुद्गमात्रा यवमात्रा पिण्डिका शोभनेति सूच्यते । ततः कर्मानुरूपतः पिण्डिकामाने विशेषः कथ्यते । ततोऽव्यक्तमेवमाख्यातं व्यक्ताव्यक्तमथोच्यत इति प्रतिज्ञाय मुखलिङ्गविषये एकद्वित्रिचतुर्मुखलिङ्गानि पञ्चमुखलिङ्गं च सलक्षणं निरूप्यन्ते । ततो व्यक्ताव्यक्तमिदं प्रोक्तं व्यक्तलिङ्गमथोच्यत इत्युक्त्वा सदाशिवमूर्तिलक्षणं सम्यक्प्रतिपाद्यते । अत्रान्ते ज्ञानरूपं सदाशिवमेवंविधं ध्यायेद्वेति सूच्यते । ततः श्रीकण्ठमूर्तिलक्षणं वर्ण्यते । तत्र श्रीकण्ठमूर्तिलक्षणं दशबाहुत्वेन, षोडशहस्तत्वेन, अष्टादशहस्तत्वेन तथा विंशतिहस्तत्वेन च चतुर्धा निरूपितम् । ततः कालरुद्र - वामरुद्र - अघोररुद्र - भुजङ्गेशरुद्र - सर्वकामदाख्यदेव - त्रिशूलरुद्र - अर्धनारीश्वर दुर्धर्ष - नीलरुद्र - भीमरुद्र - सर्वशर्वरुद्र - शर्वरुद्र - भवरुद्राणां लक्षणं निगद्यते । तत एकादशरुद्राणां लक्षणमुच्यते । ततः कपालीशादिरुद्राणां लक्षणं सूच्यते । एवं व्यक्तलिङ्गस्वरूपप्रतिपादनम् । ततः पूर्वप्रदर्शितानामव्यक्तव्यक्ताव्यक्तव्यक्ताख्यानां सर्वेषामपि स्थापनं संक्षेपेण प्रतिपाद्यते । तत्र मूलमन्त्रविषये विशेषसूचनं प्रथमतः क्रियते । ततः प्रतिष्ठाकालप्रभृति कुम्भाभिषेकान्ताः क्रियाः कर्तव्या इति ता नामतो निर्दिश्यन्ते । नैव तासां प्रतिपादनं वर्तते । मुखलिङ्गविषये तदध्वाध्वमार्गेण वा सर्वकर्माण्यनुष्ठेयमित्युक्त्वा मूलमन्त्रविषये परं कश्चन विशेषः सूच्यते । ततः स्वायम्भुवादिकमभिचारादिकर्मस्वाराधनाय नोपयोक्तव्यम् । शान्तिकपौष्टिकादिकर्मस्वेवाराधनायोपयोज्यमिति सूच्यते । एवं सप्तत्रिंशत्तमपटलार्थसंग्रहः ।

अष्टत्रिंशत्तमे पटले आर्षलिङ्गप्रासादविधिरुच्यते । तत्र प्रथममार्षलिङ्गलक्षणमभिधीयते । तत्र कौशिकाद्यैर्मुनिभिः प्रतिष्ठितं मानुषेतरमार्षलिङ्गं भवति । तच्च मूलमध्यशिरोभागेषु स्थूलं वा कृशं वा भवेदित्युच्यते । तत एकतलप्रासादविधि-रार्षलिङ्गविषयेऽभिधीयते । तत्र लिङ्गपीठमानानुरोधेन गर्भगेहकल्पनप्रकारो भित्तिकल्पनप्रकारो नालगृहकल्पनप्रकारश्चाभि-धीयन्ते । लिङ्गे स्वायम्भुवेऽप्येवमेवैकतलप्रासादकल्पनं कार्यमिति सूच्यते । ततोऽत्रविषये द्वितलादिप्रासादकल्पने विशेषविधिः सूच्यते । एवमष्टत्रिंशत्तमपटलार्थसंग्रहः ।

एकोनचत्वारिंशत्तमे पटले पौरुषलिङ्गप्रासादविधिर्निगद्यते । तत्र प्रथमं भक्तियुक्तैर्मनुष्यैः स्थापितं लिङ्गं पौरुषमिति पौरुषलिङ्गलक्षणं प्रतिपादितम् । ततो जीर्णतादिदोषसंभवेन पूर्वं स्थापिते प्रासादे नष्टे तत्र तत्स्वरूपे जाते पुनः प्रासादकरणे लिङ्गवशात्प्रासादकल्पनविधिरभिधीयते । अत्रापि पूर्वपटल इव लिङ्गविष्कम्भमानानुरोधेन पीठकल्पनं पीठमानानुसारेण भित्तिकल्पनप्रकारो भित्तिमानानुगुण्येन नालगृहकल्पनप्रकारश्चाभिधीयन्ते । ततोऽवशिष्टं पूर्ववत्परिकल्पयेदित्युच्यते । ततो लिङ्गवशात् पीठ, पीठवशाद्गर्भगेहो गर्भगेहवशाच्च भित्तिनिश्चय इत्यत्र मानविषये वृद्धिह्रासकल्पनप्रकारो निरूप्यते । ततः आर्षलिङ्गविषये लिङ्गमानवशात्प्रासादकल्पने पङ्क्तिकाङ्गुलमधिष्ठानं कर्तव्यमिति सूच्यते । एवं पुराणपौरुषमानुषलिङ्गविषये च प्रासादकल्पनविषये कर्तव्यो विशेषप्रकारः सूच्यते । अन्ते विप्रादिवर्णत्रयपूजितं लिङ्गं वा पौरुषं लिङ्गं भवतीति लक्षणान्तरं सूच्यते । एवमेकोनचत्वारिंशत्तमपटलार्थसंग्रहः ।



चत्वारिंशत्तमे पटले लिङ्गवशात् प्रासादविधिः कथ्यते । तत्र स्वायम्भुव–बाण–दैविक–आर्षलिङ्गविषये तथा सिद्धविद्याधरैः स्थापितलिङ्गविषये च लिङ्गवशात् प्रासादं परिकल्पयेदित्युक्त्वा बहुप्रकारतो माननिरूपणपुरःसरं प्रासादकल्पनविधिः प्रतिपाद्यते । एवं चत्वारिंशत्तमपटलार्थसंग्रहः ।

एकचत्वारिंशत्तमे पटले सार्वदेशिकलिङ्गप्रासादविधिः कथ्यते । तत्र प्रथमं सार्वदेशिकलिङ्गादेः स्थापनमुच्यत इति प्रतिज्ञा । ततः सार्वदेशिकसंज्ञस्य प्रासादस्य, लिङ्गस्य, पीठस्य, अश्मनो वा विधिः सर्वत्र संमत इत्युच्यते । ततः सार्वदेशिकसंज्ञकानि सात्त्विके राजसे तामसे वा देशे कल्पयेत् । राजसे देशे तेषां कल्पनं विशेषाद् राज्ञां विजयकारणं सर्वकामार्थसिद्ध्यर्थं च भवति । अतो राजसदेशे कल्पनं सार्वकामिकमित्युच्यते । अन्यत्र कल्पनं कर्तुः कारयितुश्च मोक्षप्रदमिति कथ्यते । ततो नागरद्राविडवेसरसार्वदेशिकसंज्ञकानि क्रमेण कृतत्रेताद्वापरकलियुगेषु संमतानि । वराटकालिङ्गसंज्ञके कलावपि संमते भवत इत्युच्यते । ततः सार्वदेशिकसंज्ञकं विमानं श्रेयाऽर्थिभिः कार्यमित्युच्यते । ततः सार्वदेशिकविषये तत्र वंशादिदोषो नास्तीत्युच्यते । ततः सार्वदेशिकप्रासादस्य लक्षणं प्रतिपाद्यते । तत्र सार्वदेशिकधाम्नो मानादिनिरूपणं विशेषत आयादिविधिश्च प्रदर्श्यते । ततो गर्भगृहादिकल्पनप्रकारो निरूप्यते । ततः सार्वदेशिकलिङ्गानां लक्षणं प्रासादगर्भ-गृहद्वारस्तम्भादिमानानुसारेण लिङ्गमानकल्पनप्रकारश्च वर्ण्यते । ततः समखण्ड–वर्धमान–शैवाधिक्य–त्रैराशिक–स्वस्तिक–सहस्र–धारालिङ्गानि नामतो निर्दिश्यन्ते । तानि निर्दिष्टक्रमेण सलक्षणं सोपभेदं च प्रतिपाद्यन्ते । तत्र सहस्रलिङ्ग-धारालिङ्गयोर्लक्षणं पूर्वोक्तवदत्रापि ग्राह्यमिति कथ्यते । एवं मुखलिङ्गेऽपि पूर्वोक्तविधिनात्रापि कर्तव्यमिति सूच्यते । ततो लिङ्गानां शिरोवर्तनं पूर्वोक्तविधिना कुर्यादिति सूच्यते । एवं लक्षणोद्धारप्रकारोऽपि शिवलिङ्गप्रतिष्ठोक्तविधिना कर्तव्य इति निगद्यते । ततः पीठलक्षणं प्रतिपाद्यते । तत्र लिङ्गविष्कम्भमानेन गर्भगेहमानेन च पीठविस्तारप्रकारो निरूप्यते । एवं पीठोत्सेधप्रकारोऽपि संक्षेपेण प्रतिपाद्यते । ततः पीठस्थापनोक्तरीत्या तदलंकारः कर्तव्य इति सूच्यते । ततः कूर्मशिलाब्रह्म-शिलयोर्लक्षणप्रतिपादनं दृश्यते । ततो लिङ्गपीठिकयोर्यथा छायादोषो न स्यात्तथा कल्पनीयमिति तत्र विशेषः कथ्यते । ततः स्वायम्भुवबाणगाणपार्षलिङ्गेषु लक्षणं नेष्यत इत्युक्त्वा तद्विषयकविशेषान्तरप्रतिपादनं दृश्यते । अन्ते सार्वदेशिकलिङ्गानां प्रतिष्ठा पूर्वोक्तविधिना कर्तव्येति सूच्यते । एवमेकचत्वारिंशत्तमपटलार्थसंग्रहः ।

द्विचत्वारिंशत्तमे पटले अङ्गलिङ्गप्रतिष्ठाविधिः प्रतिपाद्यते । तत्र प्रथमं मण्टपाः परिवाराः प्राकारा गोपुरा वा यस्य लिङ्गस्य विद्यन्ते, तत्प्रधानं लिङ्गमित्युच्यते । यत् पञ्चप्राकारमध्ये परिवारैर्विना प्रधानाविरोधेन विद्यते, तदङ्गलिङ्गमिति कथ्यत इति प्रधानाङ्गलिङ्गयोर्लक्षणमुक्तम् । अङ्गलिङ्गविषये पश्चिमोत्तरपूर्वाशासु मूलधामोनमानकं विमानादिकं विधाय तत्राङ्गलिङ्गं संस्थापयेत् । अङ्गलिङ्गस्थापनयोग्यस्थाने प्रतिमां वा स्थापयेदित्युच्यते । ततो मूलधाम्नः प्राकारत्रयबाह्ये यदि देवाः स्थाप्यन्ते, तदा परिवारादिकं तत्र लेशतः स्थापयित्वा पूजनीयम् । तत्र नित्योत्सवादिकं न कल्पयेदिति कथ्यते । ततोऽङ्गलिङ्गादिकं मुख्यशिवमार्गेणैव स्थापनीयम् । न पाशुपतेन महाव्रतिना वा स्थापयितव्यम् । नापि बौद्धार्हतकापालपाञ्चरात्रादिकैरन्यैर्दर्शनान्त-रस्थैर्वा स्थापनीयम् । प्रमादात्स्थापितेऽपि तत् क्षणाच्छेव संगच्छेदिति कथ्यते । ततोऽङ्गलिङ्गविषये विमानविधिः प्रतिपाद्यते । तत्र सार्वदेशिकप्रासादः कर्तव्यः । लिङ्गमपि सार्वदेशिकमेवेष्टमित्युच्यते । अत्र पृथक् कर्षणादिकं स्थापनविषये कर्तव्यं वा न वेति विकल्प उच्यते । आद्येष्टकादिकं कर्म तावदत्र कर्तव्यमेव । मूर्धेष्टकादिकं कर्म, प्रतिष्ठा, जीर्णोद्धारादिकं सर्वमपि पूर्वोक्तविधिना यथा चोदितं तथा कर्तव्यमित्युच्यते । मूलस्य पवित्रारोहणादिके क्रियागणेऽङ्गलिङ्गादेः पवित्रारोहणं तत्काले कर्तव्यं वा न वेति विकल्प उच्यते । ततः पृथग्वा यथाशास्त्रं करणीयमिति पक्षान्तरं च सूच्यते । ततोऽङ्गलिङ्गप्रतिष्ठाकर्ता पुत्रपौत्रादिसंपन्नः संलब्धकामो देहान्ते शिवेन सह मोदत इति फलश्रुतिः प्रदर्श्यते । एवं द्विचत्वारिंशत्तमपटलार्थसंग्रहः ।

त्रिचत्वारिंशत्तमे पटले सदाशिवस्थापनविधिः कथ्यते । तत्र प्रथमं लक्षणपुरःसरं सदाशिवस्थापनं वक्ष्यामीति प्रतिज्ञा । ततः पूर्वोक्तैः शिलादिभिर्द्रव्यैः प्रतिमां कुर्यादित्युच्यते । ततः सदाशिवमूर्तिलक्षणं प्रतिपाद्यते । तत्र दक्षिणहस्तैः पञ्चभिरभयवरदशक्तित्रिशूलखट्वाङ्गान्, वामहस्तैः पञ्चभिर्भुजङ्गाक्षमालाडमरुनीलोत्पलबीजपूरांश्च वहन् पञ्चास्यसमन्वितस्त्रिलोचनः सुप्रसन्नो जटाचूडः श्वेतवर्णो बद्धपद्मासनो ज्ञानचन्द्रकलायुक्तः षोडशवर्षसमानो मनोन्मन्या सहितः सदाशिवः कार्य इत्युच्यते । अत्र अर्चनाध्यायसंसिद्धध्यानान्तरप्रोक्तरूपयुतो वा सदाशिवो भवेदिति सूच्यते । ततः प्रतिष्ठाविधिः प्रतिपाद्यते । तत्र पूर्ववद्वारर्थं शोभने काले समीक्ष्याङ्कुरार्पणं कृत्वा तदन्ते रत्नन्यासनेत्रोन्मीलनबेरशुद्धीः कृत्वा, ग्रामप्रदक्षिणपूर्वकं प्रतिमां जलतीरं समानीय तत्र जलाधिवासमाचरेत् । ततः शयनाधिवासाय वेदिकाकुण्डसहितमण्डपं विधाय शिल्पिविसर्जनब्राह्मण-भोजनपुण्याहप्रोक्षणवास्तुहोमकरणपूर्वकं सुपरिग्रहं कुर्यात् । ततो वेद्यूर्ध्वे स्थण्डिलं कृत्वा तत्र पूर्ववच्छय्याकल्पनं समाचरेत् । ततः प्रतिमां जलादुद्धृत्य मण्डपं समानीय शुद्धिं कृत्वा कौतुकबन्धनं विधाय देवं प्राक्शिरस्कमूर्ध्ववक्त्रं शय्यायां शाययेत् । देवस्य शिरःप्रदेशे सदाशिवकुम्भं विन्यस्य तत्र तं संपूजयेत् । तत्कुम्भसंस्तरे वर्धनीं विन्यस्य तत्र मनोन्मनीं पूजयेत् । परितोऽष्टौ घटान्निक्षिप्य तेषु विद्येशान् पूजयेत् । ततः कुम्भेषु तत्त्वमूर्त्यादिविन्यासं समाचरेत् । ततः कुण्डं वह्निं च संस्कृत्य होमं समाचरेदित्युक्त्वा होमद्रव्यनिरूपणपूर्वकं होमविधिः संक्षेपेण प्रतिपाद्यते । ततो द्वितीयदिने देशिकः शुचिः सन् पूर्ववत्कुम्भानग्निं च संपूज्य, यजमानेनाचार्यादीनां दक्षिणां दापयित्वा, प्रतिमामुद्धृत्य शुभमुहूर्ते संप्राप्ते सदाशिवकुम्भाद् बीजं समादाय सदाशिवहृदि विन्यसेत् । वर्धन्या बीजमादाय तस्य पीठे विन्यसेत् । सहजा यदि सा देवी स्यात्तदा तस्या हृदि विन्यसेत् । अन्येभ्यः कुम्भेभ्यो बीजमादाय पीठस्य परितो विन्यसेत् । तत्तद्घटोदकैस्तत्तद्देशेऽभिषेचयेत् । ततः स्नपनं भूरि नैवेद्यं विशेषपूजामुत्सवं च समाचरेत् । देव्याश्च स्नपनं विधाय कल्याणं कारयेत् । अनुक्तमत्र सामान्यस्थापनोक्तवत् कर्तव्यमिति प्रतिष्ठाविधिक्रियाक्रमोऽतीव संक्षेपेण तत्तत्क्रियाप्रतिपादनं विना निर्दिश्यते । ततो नित्यार्चनादिकं सर्वं पाद्मवदेव समाचरेदिति सूच्यते । एवं यः सदाशिवप्रतिष्ठां कुरुते, स इहैव भोगान्भुक्त्वान्ते शिवं यायादिति फलश्रुतिश्च निरूप्यते । एष त्रिचत्वारिंशत्तमपटलार्थसंग्रहः ।

चतुश्चत्वारिंशत्तमे पटले देवीस्थापनविधिरुच्यते । तत्र प्रथमं देव्याः संस्थापनं तल्लक्षणपुरःसरं वक्ष्यामीति प्रतिज्ञा । ततः प्रतिमां शिलादिद्रव्यैः कुर्यादित्युच्यते । ततो ग्रामादौ शिवहर्म्ये च देवीस्थापनोचितस्थानानि निर्दिश्यन्ते । ततो देव्या धामनिर्माणविधिरभिधीयते । तत्र वलभ्याकारं शालाकारं सभाकारं प्रासादाकारं वा देव्या धाम कर्तव्यमित्युच्यते । धाम्नि गर्भगेहभित्त्योः कल्पनप्रकारस्तथा द्वितलादिप्रासादविषयेऽलिन्दानां भित्तीनां विधानप्रकारश्च वर्ण्यते । ततो धाम्नि दिग्देवता-कल्पनप्रकारो निरूप्यते । ततो देव्या वाहनं सिंहो वृषभो वा भवेदित्युच्यते । अत्र प्रासादप्रतिष्ठायां प्रासादभित्तिदेवानामशे-षाणामपि प्रतिष्ठा कर्तव्येति सूच्यते । ततो देव्या धाम्नि प्राकारान् परिवारान्मण्डपादींश्च कल्पयेदित्युक्त्वा परिवारविषये बहुप्रकारा निरूप्यन्ते । तत्र देव्या निर्माल्यधारिण्या नाम 'अशनी' इति निर्दिष्टम् । महापीठे विशेषेण सर्वा अप्सरसः स्युरिति सूच्यते । ततो देवलक्षणं प्रतिपाद्यते । तत्र देव्या मानं शिवलिङ्गानुरूपतः कल्पनीयमित्युक्त्वा तन्मानविधिः प्रतिपाद्यते । अत्र देवी स्वयंप्रधाना चेत् स्वधामप्रमाणेनाथवाङ्गुलमानेन वा विधेयेत्युच्यते । अत्र गृहार्चाविषये मानान्तरं सूच्यते । ततो देव्या लक्षणप्रतिपादने बहुप्रकारा वर्ण्यन्ते । तत्र एकवक्त्रा चतुर्भुजा त्रिनेत्रा, एकवक्त्रा द्विभुजा द्विनेत्रा, एकवक्त्रा षड्भुजा, पञ्चवक्त्रा दशभुजेति चतुर्विधाः प्रतिमाः संयुक्तं प्रदर्श्यन्ते । ततो देवी देवेन सहिता केवला वा भवेदिति च सूच्यते । देवी देवोत्सङ्गासनाथवा देवालिङ्गनतत्परा देवोरुसंस्थिता स्थानकासनसंयुता वा भवेदित्युच्यते । ततो देवीकल्पनविषये सूत्रपातविधिरभि-धीयते तत उत्सवाङ्गदेवीनां विषये मानकल्पनविधिरुच्यते । ततो देव्या 'मनोन्मनी गौरी' इति संज्ञाद्वयमिष्यते । तयोर्विषये लक्षणभेदो नेष्यते । यत्र सादाशिवी मूर्तिः कल्प्यते तत्र मनोन्मनीति देव्याः संज्ञा, नृत्तमूर्त्यादिभेदेषु देव्या गौरीति संज्ञेत्युच्यते ।



देव्याः प्रतिष्ठाविधिर्निरूप्यते । तत्र प्रथमं मनोन्मनीगौर्योर्विषये मूलमन्त्रः प्रतिपाद्यते । ततः पूर्वोक्तवत् प्रतिष्ठाकालं परीक्ष्याङ्कुरार्पणं कृत्वा, प्रतिमां मण्डपे स्थण्डिले पूर्वाभिमुखीं संस्थाप्य, तत्पीठे कर्तव्यो रत्नन्यासविधिर्नयनोन्मीलनविधिश्चातीव संक्षेपेण प्रतिपाद्येते । तत आचार्यपूजां शिल्पिपूजां च यजमानेन कारयित्वा गुरुर्मृद्वाद्यैर्बेरशोधनं कृत्वा, ग्रामप्रदक्षिणपूर्वकं प्रतिमां जलतीरं नीत्वा तत्र विधिवज्जलेऽधिवासयेदिति जलाधिवासविधिः सूच्यते । जलाधिवासविधौ प्रतिमायाः परितो नानाचिह्नितानष्ट कलशान्विन्यसेदिति कथ्यते । ततः शयनाधिवासाय मण्डपविधिः कथ्यते । ततस्तक्षकोद्वासनविप्रभुक्ति-गोमयालेपनपुण्याहप्रोक्षणवास्तुहोमवास्तुदेवतापूजनानि विधाय मण्डपे वेद्यां स्थण्डिले शयनं कल्पयेदिति क्रियाक्रमो निर्दिश्यते । ततो जलात प्रतिमां मण्डपमानीय तां पूर्ववत्संस्नाप्य गन्धपुष्पादिनाभ्यर्च्य कौतुकबन्धनं कृत्वा देवीं प्राङ्मस्तकसमन्वितां शयने शाययेदिति शयनाधिवासविधिः प्रतिपाद्यते । ततः प्रतिमां रक्तवस्त्रेण संवेष्ट्य गन्धपुष्पादिना संपूजयेत् । ततस्तस्याः शिरः-प्रदेशे प्रधानघटं प्रतिमालक्षणोक्तरूपं ध्यात्वा विन्यसेत् । गन्धादिनार्चयेत् । तं परितोऽष्टौ घटान्वामादिशक्तिभिरधिष्ठितान्न्यस्य गन्धादिना पूजयेदिति कुम्भाधिवासो वर्णितः । ततस्तत्र तत्त्वतत्त्वेश्वरमूर्तिमूर्तीश्वरन्यासप्रकारस्तत्पूजाप्रकारश्चाभिधीयते । अनन्तरं गुरुर्मूर्तिधरैः सार्धं होमकर्म समारभेदित्युक्त्वा होमविधिर्द्रव्यनिरूपणपुरःसरं समन्त्रकं प्रतिपाद्यते । अत्र होमकाले वेदाध्ययनं चतुर्दिक्षु कोणेषु मन्त्रजपश्च कर्तव्याविति सूच्यते । ततः प्रतिष्ठाविधिः कथ्यते । तत्र गुरुः प्रभाते मूर्तिपैः सह प्रागुक्तवह्निं कुम्भांश्च पूजयित्वा देवीमुत्थाप्य प्रासादं प्रवेश्य रत्नहेमादिगर्भितायां ब्रह्मशिलायां मूलमन्त्रमुच्चार्य विन्यसेत् । शुभमुहूर्ते सुलग्ने मन्त्रन्यासं समाचरेत् । तत्तत्कुम्भोदकैश्च तत्तद्देशेऽभिषेचयेत् । अन्ते स्नपनं भूरि नैवेद्यमुत्सवं च कारयेत् । ततो बहुविधैः स्तोत्रैः स्तुत्वा 'यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी । तावदत्र त्वया देवि स्थातव्यमिह मन्दिरे ।' इत्यमुं श्लोकं पठेदित्युच्यते । ततो देशिकादीनां दक्षिणां लिङ्गस्थापनोक्तप्रकारेण यजमानो दद्यात् । चतुर्थे दिने कर्मविद्देशिकः कल्याणकर्म कुर्यादिति प्रतिष्ठाविधौ क्रियाक्रमः प्रादर्शि । अत्र यदि चला प्रतिमा तदा स्नानवेद्यामेव मन्त्रन्यासाभिषेकौ कर्तव्यौ। एवं स्वयं प्रधानायाः सहजायाश्च देव्या विषये कल्याणकर्म वर्जयेदिति च सूच्यते। ततो देवीप्रतिष्ठायाः फलं विशेषतः प्रदर्श्यते। ततो देव्या नित्यार्चनादिकं निगद्यते। तत्र प्रथमं कृतनित्यक्रियस्य देशिकस्य द्वारद्वारपपूजनपुरःसरं देवीधामप्रवेशप्रकारो वर्ण्यते । तत्र द्वारपालद्वारनायिकानां लक्षणं प्रतिपाद्य देवोक्तद्वारपालान्वा कुर्यादिति सूच्यते । कवाटयोर्दक्षवामयोर्विमलं सुभद्रं च समभ्यर्च्य प्रविशेदित्युच्यते । ततो भूतशुद्धिप्रकारो वर्ण्यते। अनन्तरं पञ्चास्याया देव्याः पूजाविषयेऽष्टत्रिंशत्कलान्यासः प्रणवेन सहितः कर्तव्यः । एकास्याया देव्याः पूजाविषये शशिन्याद्येकत्रिंशत्कलान्यासं परिकल्पयेदिति सूच्यते । अनन्तरमन्तर्यागविधिरभि-धीयते । ततः स्थानशुद्धिद्रव्यशुद्धिमन्त्रशुद्धिप्रकाराः सूच्यन्ते । ततो बेरशुद्धिप्रकारः कथ्यते । अत्र लोहसुधाचित्रादिबेरविषये विशेषप्रकारो निरूप्यते। अनन्तरमासनकल्पनमूर्तिकल्पनप्रकारो वर्ण्यते। तत आवाहनादिदशसंस्कारविधानप्रकारः कथ्यते। ततो धूपदीपनैवेद्यदानविधिः सूच्यते । अनन्तरमावरणार्चनविधिरभिधीयते। अत्र गर्भावरणगणेशविद्येशलोकेशतदस्त्रावरणानि भवन्तीति पञ्चावरणपूजा सूच्यते। अत्र गर्भावरणे हृदयं वह्निदिशि शिर ईशानदिग्भागे शिखां रक्षोदिशि वायुदिशि कवचं दिक्ष्वस्त्रं च संपूजयेत् अथवा वामाद्या अष्ट शक्तयः पूर्वादितः पूज्या इत्युच्यते। ततः पुनर्धूपदीपमन्त्रगानाद्यं नैवेद्यं बलिहोमौ च कुर्यादिति क्रियाक्रमो निर्दिश्यते । ततो नित्योत्सवविधानप्रकारो निरूप्यते । तत्र नित्योत्सवार्थं प्रतिमाविधानं सलक्षणमुच्यते । ततो देव्या एककालं द्विकालं त्रिचतुष्पञ्चषट्सप्तवसुकालं वा सर्वदा पूजां कुर्यादित्युच्यते । अनन्तरं वर्षोत्सवस्नपनदमनारोहणपवित्रारोहणकृत्तिका-दीपसंवत्सरादिखेलावसन्तोत्सवमासोत्सवनवनैवेद्यविधिपूरकर्मविषयो यथावदनुष्ठेया इति सूच्यते । अत्रोत्सवे ध्वजे सिंहं वृषभं वा समालिखेत् । पूर्वफल्गुनीनक्षत्रे तीर्थकर्म कर्तव्यम् । शिवोत्सवेऽपि प्रत्यहं देव्या उत्सव इष्यते। देव्या उत्सवविषये पाशास्त्रं त्रिशूलं देव्यस्त्रं वा परिग्राह्यम् । पूर्वोक्तलक्षणान्वितोत्सवप्रतिमा च कर्तव्या । कृतकौतुकदेव्या ग्रामाद्बहिर्निर्गमो न कर्तव्य इत्यादिविषयाः सूच्यन्ते । जीर्णोद्धारादिकं प्रायश्चित्तविधिं च पूर्ववन्नयेदिति च सूच्यते । एवं देव्याः प्रतिष्ठा

बालस्थानान्विता वा न वा भवेदिति च सूच्यते। अन्ते देव्यनुग्रहतो नृपतेः सार्वभौमत्वं संभवेत्। तस्माद्देव्यग्रतो नृपतेरभिषेकं कुर्यादित्युच्यते। एवं चतुश्चत्वारिंशत्तमपटलार्थसंग्रहः।

पञ्चचत्वारिंशत्तमे पटले विघ्नेशप्रतिष्ठाविधिः प्रतिपाद्यते। तत्र प्रथमं लक्षणादिपुरःसरं विघ्नेशस्थापनं वक्ष्यामीति प्रतिज्ञा। अनन्तरं शिवधाम्नि चैत्यवृक्षादिदेशेष्वन्यत्र च विघ्नेशस्थापनयोग्यस्थाननिरूपणम्। ततो विघ्नेशालयकल्पनप्रकारनिरूपणम्। अत्र दिग्देवतामूर्तिकल्पनं बहुधा प्रतिपाद्यते। ततः परितः परिवारः कल्पनीय इत्युक्त्वा विश्वरूपाद्यष्टमूर्तीञ्शास्त्रमतो निर्दिश्यैतान्वा इन्द्राद्यधिष्ठितानि पीठान्यष्ट वा कल्पयेदिति परिवारविधिरुच्यते। द्वाराग्रे मूषिकं, तथा विकटभीमाख्यौ द्वारपौ, ऐशान्यां निर्माल्यधारिणं कुम्भोदरं च विन्यसेदित्युच्यते। ततो विघ्नेशस्य मूर्तिपा आमोदाद्या अष्ट तथा हस्तिवक्त्राद्या अष्ट च नाम्ना निर्दिश्यन्ते। ततो मूलरूपयोर्द्वारपयोर्मूषिकस्य, निर्माल्यधारिणः कुम्भोदरस्य, परिवाराणां च लक्षणं निरूप्यते। ततो बलिपीठं महापीठं च पूर्ववत्कल्पनीयमिति सूच्यते। एवं परिवारादिसहितं विघ्नेशस्यालयकल्पनप्रकारोऽभिहितः। ततः शिलादिभिर्द्रव्यैः पञ्चतालोत्तमेन विघ्नेशप्रतिमानिर्माणप्रकारः कथ्यते। तत्र गर्भगेहमानेन प्रतिमामानं निरूप्य स्तम्भमानेन द्वारमानेन, लिङ्गमानेन वा प्रतिमा क्रियतामिति सूच्यते। ततः केशादिपादपर्यन्तं कायमानं वर्ण्यते। ततो विघ्नेशमूर्तिलक्षणं प्रतिपाद्यते। तत्र विघ्नेशश्चतुर्भुजस्त्रिनेत्रोऽथवा द्विनेत्रः स्थानक आसीनो वा विधेय इत्युक्त्वा चतुर्भुजेषु न्यसनीयायुधादिवस्तु-विषये प्रकारद्वयमभिधीयते। ततो विघ्नेशः केवलो वा शक्त्यान्वितो वा भवेदित्युक्त्वा शक्तिद्वययुक्तस्यैकशक्तिकस्य च कल्पन-प्रकारोऽभिधीयते। ततो विघ्नेशप्रतिष्ठाविधिः प्रतिपाद्यते। तत्र प्रथमं केवलविघ्नेशस्य शक्त्यन्वितविघ्नेशस्य च मूलमन्त्रादिकं वर्ण्यते। ततो गणेश्वरीमुद्रायास्तथा मूलमुद्रायाश्च लक्षणं प्रतिपाद्यते। ततः पूर्वोक्तकालेऽङ्कुरार्पणपूर्वकं रत्नन्यासविधिर्नेत्रोन्मीलनविधिश्च प्रतिपाद्यते। नेत्रोन्मीलनविधौ यदि देवीयुतो विघ्नेशस्तदा देव्या अपि नेत्रोन्मीलनं कर्तव्यमिति सूच्यते। ततो बेरशुद्धिं कृत्वा ग्रामप्रदक्षिणपूर्वकं जलतीरं प्रतिमामानीय जलेऽधिवासयेत्। तदा परितो दिक्पालाधिष्ठितानष्टौ कुम्भान्विन्यसेदिति जलाधिवासविधिरुच्यते। ततो यागार्थं वेदिकाकुण्डसहितमण्डपकल्पनप्रकारोऽभिधीयते। ततः शिल्प्युद्वासनाद्विप्र-भुक्तिपुण्याहप्रोक्षणवास्तुहोमविधानभूपरिग्रहरूपाणि कर्माणि विधाय, जलाद्विघ्नेशं मण्डपमानीय, स्नानवेद्यां विन्यस्य, स्नपनं कारयित्वा, कौतुकबन्धं कृत्वा मण्डपे स्थण्डिलोर्ध्वेऽष्टजात्यादिभिः पञ्चभिर्वस्त्रैर्वा शयनं संकल्प्य तस्मिंस्तं शाययेदिति शयनाधिवासविधिः कथ्यते। ततो रक्तवासोभ्यां संवेष्ट्य विनायकशिरोदेशे वस्त्रकूर्चादिसंयुक्तं कुम्भं विन्यसेत्। परितोऽष्टौ घटांश्च विन्यसेत्। प्रधानकुम्भे गणेशं, परितो विद्यमानेष्वष्टसु कुम्भेषु हस्तिवक्त्राद्यष्टमूर्तिपानथवा, आमोदप्रमुखानष्ट मूर्तिपान्वा विन्यस्य पूर्वोक्तध्यानक्रमेण गन्धपुष्पधूपनैवेद्यान्तैः संपूजयेदिति कुम्भाधिवासविधिरभिहितः। अत्र देवीद्वययुक्तश्चेद्विघ्नेशः पार्श्वद्वये वर्धनीद्वयं तथा एकदेवीयुतश्चेदुत्तरे वर्धनीमेकां च विन्यसेदिति सूच्यते। ततस्तत्तत्तत्त्वेश्वरमूर्तिमूर्तीश्वरन्यासप्रकारस्तत्पूजाप्रकारश्च प्रतिपाद्येते। ततो गुरुर्मूर्तिधरैः सार्धं होमकर्म समाचरेदित्युक्त्वा होमविधिः संग्रहेण निगद्यते। ततः प्रभाते शुद्धो देशिको मूर्तिपैः सह कुम्भानग्निं च संतर्प्य, विघ्नराजानमुद्धृत्य, प्रासादं प्रविश्य मानुषे दैविके वापि रत्नौषध्यादिगर्भितां ब्रह्मशिलां विन्यस्य तत्र गणाधिपं संस्थापयेत्। सुमुहूर्ते सुलग्ने मन्त्रन्यासं समाचरेत्। चलविग्रहविषये स्नानवेद्यां मन्त्रन्यासं कुर्यात्। ततः कुम्भोदकैस्तत्तद्देशेऽभिषेचयेत्। तत्त्वमूर्त्यादिविन्यासं समाचरेत्। ततः स्नपनं भूरि नैवेद्यमुत्सवं च समाचरेत्। एवं प्रतिष्ठाविधिः प्रतिपाद्यते। ततोऽत्र भारतीश्रीभ्यां युक्तगणेशविषये तथैकशक्त्युक्तगणेशविषये च स्थापनविधौ कर्तव्यो विशेषविधिः कथ्यते। ततो विघ्नेशस्थापनफलप्रतिपादनं दृश्यते। ततो नित्यार्चनं संक्षेपात् प्रतिपाद्यते। तत्र कृतनित्यक्रियस्य देशिकस्य द्वारद्वारपार्चनपूर्वकं धामप्रवेशविधिः प्रथमं प्रतिपाद्यते। तत्र द्वारपार्चनविषये विकटभीमयोर्वा देवोक्तद्वारपालानां वार्चनं कुर्यादिति विकल्प उच्यते। ततो भूतशुद्धिप्रकारो वर्ण्यते। अत्र गणेशपूजाविषये एकत्रिंशदक्षरन्यासो विधेय इति सूच्यते। ततोऽन्तर्यागः कर्तव्य इति सूच्यते। ततः स्थानशुद्धिद्रव्यशुद्धिमन्त्रशुद्धिप्रकारा लेशतो



[illegible]। अनन्तरं बेरशुद्धिविधानं प्रोच्यते। पर्युषितपूजाद्रव्यं निर्माल्यधारिणे दद्यादथवा त्यजेदिति सूच्यते। अत्र [illegible]न्त्रः प्रसङ्गात्प्रतिपाद्यते। लोहजचित्रादिबेरविषये शुद्धिविधौ विशेषप्रकारोऽभिधीयते। तत आसनकल्पनमूर्ति-कल्पनविधानं निरूप्यते। तत आवाहनादिदशसंस्कारविधिप्रकारो धूपदीपनैवेद्यान्तपूजनप्रकारश्च वर्ण्येते। अत्र पूजाविधौ [illegible]नां प्रमाणं पश्चिमद्वारार्चनोक्तवदूह्यतामिति सूच्यते। तत आवरणार्चनविधिः कथ्यते। तत्र प्रथमावरणं वह्नीशरक्षो-[illegible] पूर्वादिदिक्षु च हृदयादीन्, तद्बहिः चतुर्ष्वावरणेषु क्रमेण हस्तिवक्त्राद्यष्टमूर्तिपानामोदाद्यष्टमूर्तिपानिन्द्राद्यष्टदिक्पाल-[illegible] दिक्पालास्त्राणि च पूजयेदित्युच्यते। एकेन द्वाभ्यां त्रिभिर्वावरणैः पूज्यतामिति च सूच्यते। ततः पुनर्धूपदीपमन्त्रगानादिकं [illegible] पूर्ववत्स्मेना कारयेदिति क्रियाक्रमान्निर्दिश्य नित्यहोमविधिः संक्षेपतः प्रतिपाद्यते। ततो नित्योत्सवविधिः कथ्यते। [illegible] एककालं द्विकालं वा त्रिचतुष्पञ्चकालं षट्सप्तकालं वा सर्वदा गणेशस्य नित्यपूजा कर्तव्येत्युच्यते। ततश्चतुर्थ्यामिष्टसिद्धये [illegible]समोपेतं स्नपनादिसमन्वितं विशेषपूजनं कुर्यादित्युक्त्वा, पञ्चकलश–नवकलश–पञ्चविंशतिकलश–एकोनपञ्चाशत्कलश–[illegible] विषये देवतान्यासप्रकारो निरूप्यते। तत अष्टोत्तरशतकलशस्नपनाष्टोत्तरसहस्रकलशस्नपनयोर्विषयेऽपि देवतान्यास-प्रकारोऽभिधीयते। अत्र स्नपनविषये शक्तिद्वययुक्तगणेशविषये तथैकशक्तियुक्तगणेशविषयेऽपि विशेषः प्रदर्श्यते। तत [illegible]पवित्रारोहणदीपारोपणवसन्तोत्सवमासोत्सवनवनैवेद्यकर्माणि पूर्वोक्तवत्कर्तव्यानीति सूच्यते। ततः प्रायश्चित्तं [illegible]दि चान्यत् पूर्ववत्समाचरेदित्युच्यते। तत उत्सवे ध्वजे मूषकं वृषभं वा समालिखेत्। शिवोत्सवेऽपि विघ्नेशस्योत्सवं [illegible] कुर्यादिति विकल्पः सूच्यते। गणेशोत्सवविषये चक्रास्त्रं त्रिशूलास्त्रं विघ्नेशास्त्रं वा प्रगृह्यतामिति कथ्यते। उत्सवप्रतिमा [illegible]न्विता कर्तव्या। उत्सवविषयेऽनुक्ता बलिद्रव्यहोमद्रव्यादयोऽन्ये सर्वेऽपि शिवस्योक्तवत्संपादनीया इत्यादिविषयाः सूच्यन्ते। अनन्तरं गणेशमन्त्रेण वश्योच्चाटनविद्वेषमारणकर्माणि, पौष्टिकशान्तिकर्माणि, तथा स्तम्भनादीनि च साधयेदित्युच्यते। [illegible] प्रतिष्ठा सर्वत्र बालस्थानान्विता वा न वेति विकल्प उच्यते। अन्ते शिवधामप्रकल्पनादादौ वा विघ्नेशं स्थापये-दित्युच्यते। एवं पञ्चचत्वारिंशत्तमपटलार्थसंग्रहः।

षट्चत्वारिंशत्तमे पटले नृत्तमूर्तिस्थापनविधिः प्रतिपाद्यते। तत्र लक्षणकथनपूर्वकं नृत्तमूर्तिप्रतिष्ठां वक्ष्यामीति प्रतिज्ञा। ततो नृत्तमूर्तिविषये भुजङ्गत्रासाख्यनृत्तमूर्तिलक्षणं सूत्रपातविधिपूर्वकं निगद्यते। तत्र चतुर्भुजस्त्रिनेत्रो जटामकुट-[illegible]युक्तोऽपस्मारोपरि दक्षिणपादेन स्थितो नानासर्पसमायुक्तो भुजङ्गत्रास इति कथ्यते। जटासु दक्षिणभागे कृताञ्जलिपुटा [illegible] गङ्गा तथा तद्वामभागे बालचन्द्रश्च विलसत इत्युच्यते। अपस्मारस्य गङ्गायाश्च लक्षणं प्रतिपाद्यते। गङ्गादेव्या युक्तो देवो [illegible]तो वा भवेदिति विकल्प उच्यते। ततो बालचन्द्रमानवशाद् भुजङ्गत्रासमूर्तिपार्श्वे देवी तल्लक्षणविधानतः कुर्यात्। एवं [illegible] भद्रकाली वा कल्पयेदित्युच्यते। एवं भुजङ्गत्रासाख्यनृत्तमूर्तिलक्षणं प्रतिपाद्य भुजङ्गत्रासवत्सर्वलक्षणसंपन्नो भुजङ्गललितो भवेत्। किं तु तत्र पादविषये कश्चन विशेषोऽस्तीत्युक्त्वा स विशेषः प्रदर्श्यते। ततो भुजङ्गत्रासवदेव भुजङ्गभैरवोऽपि भवेत्। किं तु तत्रापि कश्चन विशेषोऽस्तीत्युक्त्वा पादविषय एव विशेषान्तरमुच्यते। किंच भुजङ्गभैरवश्चतुर्भुजो वाष्टभुजो वा स्यादिति च सूच्यते। एवं नृत्तमूर्तिविषये भुजङ्गत्रास–भुजङ्गललित भुजङ्गभैरवेति मूर्तित्रयस्य लक्षणं न्यरूपि। ततः प्रतिष्ठाविधिरभिधीयते। [illegible] पूर्वोक्तकाले निरीक्ष्याङ्कुरार्पणं कृत्वा रत्नन्यासाक्षिमोक्षणकर्मणी सम्यगाचरेत्। ततो बेरशुद्धिं कृत्वा नगरादिप्रदक्षिणपूर्वकं [illegible] जलतीरं समानीय जलाधिवासविधिं समाचरेदित्यङ्कुरार्पणादिजलाधिवासान्ताः क्रियाः क्रमेण निर्दिश्यन्ते। ततो यागार्थं [illegible]विधिनात्र कुण्डकल्पनविधिश्च सूच्यते। ततो विप्रभुक्तिपुण्याहवाचनवास्तुहोमान्विधाय भूपरिग्रहमाचरेदित्युच्यते। [illegible] वास्तुहोमं विनापि वा भूपरिग्रहमाचरेदिति विकल्पोऽभिधीयते। ततो वेद्यूर्ध्वे पुण्याहप्रोक्षणपूर्वकं स्थण्डिलं प्रकल्प्य तत्र [illegible] प्रकल्पयेत्। ततो जलादानीतां प्रतिमां संशोध्य, कौतुकबन्धनपूर्वकं शयने शाययेदिति शयनाधिवासविधिः सूच्यते। [illegible] देवस्य शिरःप्रदेशे शिवकुम्भं विन्यसेत्। तदुत्तरे वर्धनीं स्थापयित्वा तस्यां गौरीं विन्यसेत्। अभितः कलशानष्टौ

विघ्नेशाधिष्ठितान्विन्यसेत् । गन्धपुष्पाद्यैर्नैवेद्यान्तं संपूजयेत् । तत्त्वतत्त्वेश्वरमूर्तिमूर्तीश्वरन्यासं समाचरेत् । तत उक्तकाले मूर्तिपैः साकं देशिको होमं कुर्यादित्युक्त्वा द्रव्यनिरूपणपुरःसरं होमविधिः संग्रहेण प्रतिपाद्यते । ततो रात्रिशेषं गेयनृत्तस्तोत्रवेदघोषैर्व्यपोह्य प्रातः स्नातो गुरुः समूर्तिपः प्रतिमामुद्धृत्य गन्धपुष्पाद्यैः संपूजयेत् । कुण्डेष्वग्नीन्कुम्भांश्च संपूजयेत् । ततः पूर्णाहुतिं कुर्यात् । ततो यजमान आचार्यपूजां दक्षिणादानं च यथोक्तं कुर्यात् । ततः स्थापनमारभेत् । चलप्रतिमा चेत् तां स्नानश्वभ्रे विन्यसेत् । अचलं चेत् प्रासादमध्ये स्थापयेत् । तद्विषये कुम्भानसमुद्धृत्य सर्वातोद्यसमायुक्तं हर्म्यप्रदक्षिणं कृत्वा कुम्भान् प्रतिमाग्रे विन्यसेदित्युच्यते । ततो मन्त्रन्यासप्रकारः कुम्भाभिषेकप्रकारश्च सूच्यते । ततो देवीस्थापनोक्तप्रकारेण देवीं गुरुः स्थापयेदित्युच्यते । ततो देशिकः कल्याणकर्मोत्सवं च वित्तानुसारं कारयेत् । अनुक्तमत्र सामान्यस्थापनोक्तवत्समाचरेदिति प्रतिष्ठाविधिः संक्षेपेण प्रतिपादितः । ततो यो मर्त्यो भावनायुतः प्रतिष्ठामिमां कुर्यात् स इहैव भोगान्भुक्त्वा ऐशानं पदमवाप्नुयादिति फलश्रुतिः प्रदर्श्यते । एवं षट्चत्वारिंशत्तमपटलार्थसंग्रहः ।

सप्तचत्वारिंशत्तमे पटले सोमास्कन्दस्थापनविधिः कथ्यते । तत्र लक्षणपुरःसरं स्थापनं वक्ष्यामीति प्रतिज्ञा । तत्र प्रथमं सोमलक्षणमथवा उमासहितदेवलक्षणं प्रतिपाद्यते । चतुर्भुजस्त्रिणेत्रो जटामकुटमण्डितः सर्वाभरणसंयुक्तो वरदाभयहस्तकः कृष्णापरशुसंयुक्तोर्ध्वकरद्वयः सोपवीतः प्रसन्नात्मा वामे गौर्या समन्वितः सोम इति सोमेशलक्षणं निरूप्यते । गौर्या लक्षणं देवीस्थापनोक्तप्रकारेण करणीयमिति सूच्यते । ततोऽत्रविषये सूत्रपातप्रकारो वर्ण्यते । ततः सोमास्कन्दमूर्तिलक्षणं प्रतिपाद्यते । तत्र देवदेव्योर्मध्ये स्कन्दं कुर्यादित्युक्त्वा स्कन्दलक्षणं निरूप्यते । तत्र द्विनेत्रो द्विबाहुः करण्डमकुटान्वितः सर्वाभरणभूषितो दक्षभागेककरस्थपङ्कजः प्रसारितापरकरः, द्विहस्तपङ्कजो नूपुरयुतो देव्यूरुसंस्थितो निष्पङ्कजकरो वा, आसीनो वा स्थितो वा स्कन्दः स्यादिति कथ्यते । ततः स्कन्दोमारहितो देवः सुखासन इति सुखासनमूर्तिलक्षणमभिधीयते । एवं सोमसोमास्कन्दसुखासनमूर्तीनां लक्षणं प्रतिपादितम् । ततः सोमास्कन्दमूर्तेः प्रतिष्ठाविधिर्निरूप्यते । तत्र शुभे कालेऽङ्कुरार्पणपूर्वकं देवदेव्योर्गुहे च रत्नन्यासविधिः कथ्यते । तत्तत्प्रतिष्ठाध्यायोक्तमन्त्रैः समन्वितं तत्तत्पीठेषु रत्नन्यासं कुर्यादिति सूच्यते । किंच देव्या विषये हेमाब्जं तथा स्कन्दविषये हेममयूरं वा न्यसेदिति च पक्षान्तरं निगद्यते । ततो दृशामुन्मोक्षणं बेरशुद्धिं नगरादिप्रदक्षिणं जलाधिवासं च प्राग्वत् कुर्यादिति सूच्यते । ततो यागार्थं मण्डपकल्पनं तत्र कुटिमकुण्डकल्पनप्रकारश्चाभिधीयते । ततः शिल्पिविसर्जनविप्रभोजनपुण्याहप्रोक्षणवास्तुहोमान्विधाय, मण्डपे स्थण्डिलं प्रकल्प्य तन्मध्ये शयनं कुर्यात् । ततो जलात्प्रतिमा उद्धृत्य, ता मण्डपमानीय स्नपनं कारयेत् । तासां तिसृणां प्रतिमानां कौतुकबन्धनं विधाय त्रिषु शयनेषु शाययेत् । पृथग्वस्त्रैराच्छादयेत् । ततः शिवस्य शिरोदेशे शिवकुम्भं तदुत्तरे देव्या वर्धनीं दक्षिणे स्कन्दाधिष्ठितं घटं च स्थापयित्वा लक्षणोदितरूपध्यानपुरःसरं गन्धाद्यैस्तानर्चयेत् । परितोऽष्टौ विघ्नेशाधिष्ठितान्घटान् विन्यस्यार्चयेत् । अथ तत्तन्मूर्त्यध्यायोक्तमार्गेण तत्त्वमूर्त्यादिविन्यासादिकं कुर्यात् । ततः कुण्डाग्निसंस्कारान् विधाय विधिवद्धोममाचरेदित्युक्त्वा होमविधिर्लेशतो निरूप्यते । अत्र पूर्वोक्ताः प्रतिमा विभिन्नपीठाश्चेत् पृथङ्मण्डपमाचरेदिति सूच्यते । ततो द्वितीयदिने गुरुर्देवकुम्भाग्नीन् मूर्तिपैः सह संपूज्य यजमानेन वस्त्रहेमाङ्गुलीयादिभिर्यथोक्तदक्षिणाभिश्च संपूजितो मन्त्रन्यासादिकर्म समाचरेत् । अत्र यदि सहजा देवी तस्या हृदि मन्त्रन्यासं कुर्यादिति सूच्यते । ततः कुम्भाभिषेकं च विधिवत्कुर्यात् । ततो विशेषतः कल्याणकर्म कर्तव्यमिति सूच्यते । अनुक्तमत्र यत् स्यात्तत् सामान्यस्थापनोक्तप्रकारेण निर्वर्तनीयमिति च सूच्यते । एवं प्रतिष्ठाविधिः संक्षेपेण निरूप्यते । अन्ते च प्रतिष्ठाकर्ता इह सिद्धिं प्राप्य तत्फलमनुभूय पश्चात् स शिवेनैक्यं यास्यतीति फलश्रुतिः प्रदर्श्यते । एवं सप्तचत्वारिंशत्तमपटलार्थसंग्रहः ।

अष्टचत्वारिंशत्तमे पटले चन्द्रशेखरस्थापनविधिरुच्यते । तत्र प्रथमं लक्षणपूर्वकमिन्दुशेखरप्रतिष्ठां वक्ष्यामीति प्रतिज्ञा । ततः शिलादिद्रव्यैः प्रतिमां कुर्यादित्युक्त्वा चन्द्रशेखरप्रतिमालक्षणं कायमानसूत्रपातप्रदर्शनपूर्वकं प्रतिपाद्यते । तत्र



चतुर्भुजस्त्रिनेत्रः समपादः स्थानको वरदाभयमृगटङ्कधरो जटामकुटमण्डितश्चन्द्रशेखरो भवेत् । अयं देव्या सहितो वा न वा स्यादिति चन्द्रशेखरमूर्तिलक्षणमीरितम् । मध्ये जटामकुटलक्षणमप्युच्यते । देवी च सहजा वा भिन्नपीठा देवालिङ्गनतत्परा वैभिन्नाश्रिता वा भवेदिति कथ्यते । ततः प्रतिष्ठाविधिः प्रतिपाद्यते । तत्र पूर्वनिर्दिष्टे शुभे कालेऽङ्कुरार्पणं कृत्वा रत्नन्यासनेत्रोन्मीलनबेरशुद्धिग्रामादिप्रदक्षिणजलाधिवासांश्च कुर्यादिति क्रियाक्रमो निर्दिश्यते । ततो यागार्थं वेदिकाकुण्डसहितमण्डपकल्पनविधिः प्रदर्श्यते । ततो विप्रभुक्तिपुण्याहवाचनवास्तुहोमादिमण्डपसंस्कारादिकं विधाय तत्र शयनं विधिवत्प्रकल्प्य, जलान्मण्डपमानीतप्रतिमायाः स्नपनं कृत्वा कौतुकं बन्धयित्वा शय्यारोहणं समाचरेदिति शयनाधिवासविधिः प्रदर्श्यते । ततः प्रतिमाशिरोदेशे कुम्भमेकं तदुत्तरे वर्धनीं च स्थापयित्वा लक्षणोदितरूपं स्मृत्वा तयोः पूजां कुर्यात् । तयोः परितोऽष्टौ घटान्न्यस्य तत्र विघ्नेशानभ्यर्चयेत् । प्राग्वत्तत्त्वमूर्त्यादिकं विन्यस्यार्चयेदिति कुम्भाधिवासविधिः कथ्यते । ततः प्राग्वद्धोमं समाचरेदित्युक्त्वा होमविधिर्द्रव्यनिरूपणपुरःसरमतीव संक्षेपेण निरूप्यते । ततः प्रभाते गुरुर्देवकुम्भाग्नीनादरादभ्यर्च्य प्राग्वत्संस्नापितो मन्त्रन्यासं समाचरेदित्युक्त्वा मन्त्रन्यासविधिरतीव संग्रहेण प्रतिपाद्यते । अत्र देवी यदि विभिन्नपीठा भवेत्तदा पृथङ्मण्डपं प्रतिष्ठाविषये समाचरेदिति सूच्यते । ततः प्रतिष्ठान्ते कल्याणं कारयेत् । तथा स्नपनमुत्सवं भूरि नैवेद्यं च कुर्यात् । अत्रानुक्तं कर्म सामान्यस्थापनोदितवत्कर्तव्यमिति प्रतिष्ठाविधिरतीव संक्षेपतः प्रतिपाद्यते । ततो यश्चन्द्रमौलिप्रतिष्ठां कुर्यात् स नर इह सर्वान्कामानवाप्यान्ते मोक्षमाप्नुयादिति फलश्रुतिः प्रदर्श्यते । एवमष्टचत्वारिंशत्तमपटलार्थसंग्रहः ।

एकोनपञ्चाशत्तमे पटले पुरारिस्थापनविधिरभिधीयते । तत्रादौ लक्षणकथनपुरःसरं पुरारिस्थापनं वक्ष्यामीति प्रतिज्ञा । ततः सूत्रपातप्रदर्शनपूर्वकं पुरारिमूर्तिलक्षणं वर्ण्यते । तत्र चतुर्भुजस्त्रिणेत्रो जटामकुटसंयुतः समभङ्गयुतः कृष्णापरशुसंयुक्तपरहस्तद्वयान्वितो धनुर्बाणसंयुक्तवामेतरकरान्वितः पुरारिः स्यात् । तस्य वामभागे सलक्षणां पार्वतीं कुर्यादिति देवीविषये विकल्पः सूच्यते । एवं पुरारिमूर्तिलक्षणं प्रत्यपादि । ततः पुरारिप्रतिष्ठाविधिरुच्यते । तत्र सुमुहूर्ते सुलग्नेऽङ्कुरार्पणकर्म विधाय, रत्नन्यासाक्षिमोक्षणबेरशुद्धिग्रामादिप्रदक्षिणजलाधिवासांश्च कुर्यादिति जलाधिवासविध्यन्तं क्रियाक्रमनिर्देशः क्रियते । ततः प्रतिमां जलात्समानीय तस्याः स्नपनं कौतुकबन्धनं च कुर्यादित्युच्यते । ततो यागमण्डपे कुण्डानि स्थण्डिलं च संकल्प्य, स्थण्डिले शयनं विधिवत्कारयित्वा तत्र महेश्वरं कृतकौतुकं शय्यामारोप्य, तस्य शिरोदेशे शिवकुम्भं वर्धनीं च संस्थाप्य, लक्षणोक्तरूपं ध्यात्वा, कुम्भं वर्धनीं च संपूजयेत् । तयोरभितोऽष्टघटान्विन्यस्य तेषु विघ्नेशान्गन्धाद्यैर्नैवेद्यान्तैः समर्चयेत् । ततस्तत्त्वमूर्त्यादिविन्यासं कुर्यादिति शयनाधिवासविधिः कुम्भाधिवासविधिश्च संक्षेपेण प्रतिपाद्यते । ततो होमविधिर्द्रव्यनिरूपणपूर्वकमतीव संग्रहेण निरूप्यते । ततो द्वितीयदिवसे देशिको मूर्तिपैः सार्धं देवकुम्भाग्नीन् संपूज्य संप्राप्तदक्षिणः सुमुहूर्ते प्राप्ते मन्त्रन्यासं समाचरेदित्युक्त्वा मन्त्रन्यासविधिः कथ्यते । तत्र देवी सहासना चेत् तस्या हृदि मन्त्रन्यासं कुर्यात् । विभिन्नपीठा चेत् तद्विषये पृथङ्मण्डपमाचरेदिति च सूच्यते । पश्चात् कल्याणं समाचरेत् । तदन्ते स्नपनमुत्सवं भूरिनैवेद्यं कुर्यादित्युच्यते । अत्रोत्सवभूरिनैवेद्यविषये 'कुर्याद्वा नवेति विकल्पः सूच्यते । अनुक्तमत्र सामान्यस्थापनोक्तवत् संग्राह्यमिति च सूच्यते । एवं प्रतिष्ठाविधिः संग्रहेण प्रत्यपादि । ततः पुरारिप्रतिष्ठां भक्तिपूर्वकं कुर्वन्यजमान इहानेकभोगान्भुक्त्वान्ते शिवं यायादिति फलश्रुतिर्निरूप्यते । एवमेकोनपञ्चाशत्तमपटलार्थसंग्रहः ।

पञ्चाशत्तमे पटले लिङ्गोद्भवप्रतिष्ठाविधिरुच्यते । तत्र प्रथमं लिङ्गोद्भवदेवस्य प्रतिष्ठादिकं निगद्यत इति प्रतिज्ञा । ततो लिङ्गोद्भवलक्षणं कथ्यते । तत्र गर्भगेहमानवशात्पूर्वोक्तवल्लिङ्गं प्रकल्प्य तन्मध्ये चन्द्रशेखरमूर्तिकल्पनप्रकारस्तथा लिङ्गोर्ध्वाधःप्रदेशे क्रमेण हंससूकरकल्पनप्रकारश्च वर्ण्यते । अत्र लिङ्गमध्यकल्पितचन्द्रशेखरस्य जान्वोरधोभागो नेन्द्रियगोचरो भवेदिति सूच्यते । ततो लिङ्गानुकूल्येन पार्श्वद्वये ब्रह्मविष्णू सर्वावयवसुन्दरौ नतौ स्थितौ भवेतामित्युच्यते । एतादृशा देवा

ब्रह्मविष्ण्वभिनन्दितो लिङ्गोद्भव इतीर्यते । ततो ब्रह्मविष्णुविहीनो हंससूकरमात्रयुतो वापि स्यादिति पक्षान्तरमुच्यते । ततः प्रतिष्ठाविधिरभिधीयते । तत्र पूर्ववच्छुभं कालं निरीक्ष्याङ्कुरार्पणं कृत्वा, यागार्थं कुण्डवेदिकासहितमण्डपं पूर्वोक्तवत् कल्पयेत् । ततो रत्नन्यासकर्म वर्जयित्वा नयनोन्मीलनबेरशुद्धिग्रामादिप्रदक्षिणजलाधिवासान्तानि कर्माणि कुर्यादिति क्रियाक्रमनिर्देशो दृश्यते । ततो मण्डपं संपूज्य तत्र वास्तुहोमविधिपूर्वकं भूपरिग्रहकर्म निर्वर्त्य तत्र वेद्यूर्ध्वे स्थण्डिलं प्रकल्प्य तत्र शयनं विधिवत्संपाद्य जलादानीतं देवं विधिवत्संशोध्य कौतुकबन्धनं कृत्वा शयनोपरि शाययेत् । एवं ब्रह्मविष्ण्वोश्च नयनोन्मीलनादिकं सर्वं कर्म निर्वर्त्य देवस्य दक्षिणभागे ब्रह्माणं वामभागे विष्णुं च शयने शाययेत् । ततो वस्त्रैः प्रतिमाः संवेष्ट्य गन्धाद्यैरर्चयेदिति शयनाधिवासविधिर्निरूप्यते । ततो देवब्रह्मविष्णूनां शिरोभागे प्रधानकुम्भं स्थापयेत् । शिवकुम्भस्योत्तरे वर्धनीं च विन्यसेत् । परितो विद्येशाधिष्ठितानष्ट कुम्भान्विन्यसेत् । लक्षणोदितरूपं ध्यात्वा यथाविधि संपूजयेत् । देवस्य ब्रह्मविष्ण्वोश्च तत्त्वमूर्त्यादि-विन्यासं विदध्यादिति कुम्भाधिवासविधिर्वर्ण्यते । ततो देशिको मूर्तिपैः सह होमं कुर्वीतेत्युक्त्वा होमविधिर्द्रव्यनिरूपणपूर्वकं संग्रहेण प्रतिपाद्यते । ततो रात्रिशेषं व्यपोह्य विमले प्रभाते शुद्धात्मा देशिको मूर्तिपैः सह बिम्बकुम्भाग्नीन् संपूजयेत् । तत्काले यजमानो देशिकादीनां दक्षिणां दद्यात् । ततो मुहूर्तनाडिकापूर्वे गुरुर्मन्त्रन्यासं समाचरेदित्युक्त्वा मन्त्रन्यासविधिप्रकारो वर्ण्यते । ततः कुम्भतोयाभिषेकप्रकारश्चोच्यते । तदन्ते स्नपनमुत्सवसंयुतं पूजनं च कुर्यादिति सूच्यते । ततो बिम्बानां स्थापनप्रकारम-भिधायात्रानुक्तं सामान्यस्थापनोक्तवत् कर्तव्यमिति सूच्यते । एवं लिङ्गोद्भवप्रतिष्ठां यः कुर्यात्स नर इह धनधान्यभोगांश्च भुक्त्वाऽन्ते शिवसायुज्यमाप्नुयादिति फलश्रुतिर्वर्ण्यते । एवं पञ्चाशत्तमपटलार्थसंग्रहः ।

एकपञ्चाशत्तमे पटले दक्षिणामूर्तिस्थापनविधिरुच्यते । तत्र प्रथमं व्याख्यानगेययोगेषु निष्ठस्य त्रिविधस्य दक्षिणेशस्य स्थापनं वक्ष्यत इति प्रतिज्ञा । ततो ज्ञानमुद्रासहितो व्याख्यानमूर्तिर्वीणासमन्वितो गेयमूर्तिर्द्वाभ्यां विरहितो योग-मूर्तिरिति मूर्तित्रयस्य सामान्यलक्षणं प्रदर्श्य त्रिविधस्यापि सूत्रपातपुरःसरं विशेषलक्षणं प्रतिपाद्यते । अत्र व्याख्यानयुग् ज्ञानदः, गेयी योगी च मुक्तिद इत्युच्यते । किंच व्याख्यानमूर्तिविषये कौशिककाश्यपभरद्वाजात्रिगौतमाख्यानां मुनीनां लक्षणं वर्ण्यते । एषां मुनीनामेकं द्वयं त्रयं वा पार्श्वयोर्न्यसेदित्युच्यते । ततः प्रतिष्ठाविधिः कथ्यते । पूर्ववद्वाराध्य शुभं कालं निरीक्ष्याङ्कुरार्पणं विधाय पूर्ववद्वेदिकाकुण्डसहितमण्डपं कुर्यात् । ततो रत्नन्यासाक्षिमोक्षणप्रतिमाशोधनग्रामप्रदक्षिणजलाधिवासान्ताः क्रियाः कुर्यादिति क्रियाः परं नामतो निर्दिश्यन्ते । ततो यागार्थं प्रकल्पिते मण्डपे पुण्याहप्रोक्षणब्राह्मणभोजनपुनःपुण्याहप्रोक्षणवास्तु-होमभूपरिग्रहाख्यानि कर्माणि कुर्यात् । ततो मण्डपे वेद्यूर्ध्वे स्थण्डिलं कृत्वा देवदेवस्य मुनीनां च पृथक् शयनं कल्पयेत् । ततो जलादानीतप्रतिमानां स्नानवेद्यां स्नपनं कृत्वा ताः प्रतिमाः शय्यायां वस्त्रकूर्चादिभूषिताः शाययेदिति शयनाधिवासविधिः प्रतिपाद्यते । अत्र व्याख्यानगेययोगनिष्ठानां त्रयाणामपि प्रतिष्ठायामेतद्विधानं सामान्यमित्यभिधीयते । ततस्तत्तन्मूर्तीनां तत्तन्मूर्ति-शिरोदेशे तदीयकुम्भान् वस्त्रादिभूषितान्विन्यसेत् । अभितो वसुकुम्भान् विद्येशाधिष्ठितान्विन्यसेत् । शिवकुम्भस्योत्तरे वर्धनीं विन्यसेत् । प्रतिमालक्षणोदितरूपध्यानपूर्वकं पूजयेत् । तत्त्वमूर्त्यादिविन्यासं विधिवत् कुर्यादिति कुम्भाधिवासविधिः संग्रहेण प्रतिपाद्यते । अत्र मुनीनामपि तत्त्वमूर्त्यादिविन्यासः कर्तव्य इति सूच्यते । ततोऽग्निकुण्डसंस्कारान्विधाय होमं समाचरेदित्युक्त्वा द्रव्यनिरूपणपूर्वकं होमविधिः संक्षेपेण निरूप्यते । ततो रात्रिशेषं व्यपोह्य विमले प्रभाते गुरुर्मूर्तिपैः सह स्नातः कृतमन्त्रादि-विग्रहो बिम्बानुद्धृत्य संपूज्य तथा कुम्भाग्नीनप्यर्चयेत् । ततो यजमानो देशिकादीनां पृथक् पृथग्दक्षिणां दद्यात् । देशिको बिम्बपुरतः स्थण्डिले कुम्भान्विन्यस्य मन्त्रन्यासं समाचरेदित्युक्त्वा मन्त्रन्यासविधिरुच्यते । अत्र मुनीनामपि बीजानि तेषां हृदि विन्यसेदिति सूच्यते । ततस्तत्तत्कुम्भतोयैस्तत्तद्देशेऽभिषेचयेत् । एवं तत्तत्कुम्भोदकैर्मुनीनामपि स्नपनं कुर्यात् । व्याख्यान-मूर्तिहस्तस्थपुस्तके कामिकाद्यमखिलागमं सोपभेदं विन्यसेत् । ततो देवेशं स्थापयेत् । पश्चात्तद्दक्षवामयोर्मुनींश्च स्थापयेत् । ततः स्नपनमुत्सवं भूरिनैवेद्यं कारयेत् । अनुक्तमत्र सामान्यस्थापनोक्तवत् समाचरेत् । एवं प्रतिष्ठाविधिरतीव संग्रहेण



निरूप्यते । अन्ते च दक्षिणेशप्रतिष्ठाकर्ताखिलान्भोगानिह भुक्त्वा देहान्ते परमेशानं यायान्न संशय इति फलं च निर्दिश्यते । एकपञ्चाशत्तमपटलार्थसंग्रहः ।

द्विपञ्चाशत्तमे पटले भिक्षाटनप्रतिष्ठाविधिरभिधीयते । तत्र भिक्षाटनस्य कङ्कालस्यापि लक्षणकथनपूर्वकं तयोः प्रतिष्ठां वक्ष्यामीति प्रतिज्ञा । ततः कङ्कालमूर्तेर्लक्षणमभिधीयते । पादे पादुकया युक्तं चतुर्भुजं सयज्ञसूत्रं गमनोन्मुखं देवं कुर्यात् । दक्षिणं पादं कुञ्चितं वामं सुस्थितं च कुर्यात् । पूर्वयोः करयोर्दक्षिणे प्रहारं वामे ढक्कां च कल्पयेत् । अपरयोः करयोः सव्ये कृष्णाजिह्माग्रं कुर्यात् । वामे करे पिञ्छसहितं तथा कङ्कालसहितं च कालदण्डं कल्पयेत् । पार्श्वे योषितो भूतगणानपि च कल्पयेदित्युच्यते । अत्र योषितां भूतानां चाकारलक्षणादिकं बहुधा प्रतिपाद्यते । तत एष एव कङ्कालदेवः कङ्कालदण्डवर्जितो नग्नो भिक्षाटनदेवो भवेदिति भिक्षाटनमूर्तिलक्षणमभिधीयते । तत उभयोः प्रतिष्ठाविधिः प्रतिपाद्यते । तत्र पूर्वोक्तप्रकारेण शुभं कालं संगृह्याङ्कुरार्पणकर्म विदध्यात् । ततो देवे भूते जायासु च रत्नन्यासं विधिवत्समाचरेत् । जायादीनां रत्नन्यासं विवर्जयेदिति रत्नन्यासविधिः सूच्यते । ततो नयनोन्मीलनबेरशुद्धिग्रामप्रदक्षिणपूर्वकजलाधिवासान्ताः क्रियाः कुर्यादिति क्रियानिर्देशक्रमो वर्ण्यते । ततः पूर्ववद्यागमण्डपं निर्माय तत्र कुण्डवेदिकाकल्पनं विधाय शिल्पिविसर्जनविप्रभोजनपुण्याहप्रोक्षण-वास्तुहोमान्तानि कर्माणि कुर्यादिति सूच्यते । ततस्तत्र स्थण्डिलं प्रकल्प्य विधिवच्छयनं प्रतिमानुरोधेन पृथक् पृथक् कल्पयेत् । जलात् प्रतिमा मण्डपमानीय तासां स्नपनं कौतुकबन्धनं च कृत्वा मध्ये देवं तद्दक्षे जाया वामे भूतानि च यथाविधि वस्त्रादि-भूषिततया शाययेत् । कङ्कालदण्डो यदि पृथक्तया विद्यते, तदा तद्दण्डं देवस्य शिरोदेशे शाययेदिति शयनाधिवासविधिर्वर्ण्यते । ततः कुम्भाधिवासप्रकारो निरूप्यते । तत्र शयनविषये निर्दिष्टानां प्रतिमानां कुम्भस्थापनप्रकारः कथ्यते । कुम्भार्चनविषये कश्चिद्विशेषश्च प्रतिपाद्यते । एवं तत्त्वमूर्त्यादिविषये च केचन विशेषो निरूप्यते । एवं कुम्भाधिवासविषये विशेषप्रदर्शनानन्तरं होमं समाचरेदित्युक्त्वा द्रव्यनिरूपणपूर्वकं होमविधिः संग्रहेण प्रतिपाद्यते । ततो द्वितीयदिवसे संप्राप्तदक्षिणो देशिको मूर्तिपैः सह बिम्बकुम्भाग्निपूजां सम्यक्कृत्वा बिम्बाग्रे कुम्भान्विन्यस्य मन्त्रन्यासं विदध्यादित्युक्त्वा मन्त्रन्यासप्रकारस्तथा तत्तत्कुम्भजलैरभिषेक-प्रकारश्च निरूप्येते । ततो देशिकेन्द्रः प्रतिष्ठान्ते स्नपनं महदुत्सवं भूरिनैवेद्यं च कारयेत् । अनुक्तमत्र सामान्यस्थापनोक्तव-त्कर्तव्यमित्युच्यते । एवं प्रतिष्ठाविधिः प्रतिपादितः । ततो यो मर्त्य इमां प्रतिष्ठां कुरुते स पुण्यां गतिमाप्नुयादित्युच्यते । अन्ते चास्य प्रतिष्ठा सर्वत्र बालस्थानान्विता वा न वा भवेदिति सूच्यते । एवं द्विपञ्चाशत्तमपटलार्थसंग्रहः ।

त्रिपञ्चाशत्तमे पटले बलिभर्तृप्रतिष्ठाविधिः प्रतिपाद्यते । तत्र प्रथमं बलिभर्तृप्रतिष्ठात्र वक्ष्यते । तस्य लक्षणं नित्योत्सवपटलेऽभिहितमिति सूच्यते । बलिभर्तृपदेन पाशुपतास्त्रमुच्यते । पूर्वनिर्दिष्टे शुभे कालेऽङ्कुरार्पणं विधाय रत्नन्यास-दृष्टिमोचनबेरशुद्धिग्रामादिप्रदक्षिणजलाधिवासान्तानि पूर्वोक्तवत् कर्तव्यानीत्युच्यते । ततो वेदिकाकुण्डसहितमण्डपकल्पन-विधिरभिधीयते । तत्र प्रधानकुण्डं वृत्तमिति सूच्यते । ततः शिल्पिविसर्जनब्राह्मणभोजनपुण्याहप्रोक्षणवास्तुहोमान्तानि कर्माणि कुर्यादिति क्रियाक्रमो निर्दिश्यते । ततो जलात्प्रतिमामुद्धृत्य मण्डपमानीय मृदाद्यैः बेरशुद्धिं कृत्वा गन्धादिनाभ्यर्च्य कौतुकबन्धनं कुर्यात् । ततो मण्डपे वेद्यां स्थण्डिलपूर्वकं शयनं निर्माय तत्र बिम्बं रक्तवस्त्रादिभूषितं शाययेदिति शयनाधिवासविधिरुच्यते । ततः कुम्भाधिवासविधिः प्रतिपाद्यते । तत्र सुवस्त्राढ्यं शिवकुम्भं प्रतिमाशिरोदेशे स्थापयेत् । तं परितोऽष्टौ वस्त्रादिभूषितान् कुम्भान् स्थापयेदिति कुम्भस्थापनविधिरुक्तः । ततः शिवकुम्भे पाशुपतास्त्रं पूजयेदित्युक्त्वा तन्मन्त्राः प्रतिपाद्यन्ते । ततः परितः स्थितेष्वष्टकुम्भेषु वज्राद्यायुधानष्टौ विधिवदर्चयेदित्युच्यते । ततस्तत्त्वतत्त्वेशमूर्तिमूर्तीशन्यासस्तत्पूजनं च सूच्येते । ततः शिवानलं विधिवत्संपाद्य कुण्डाग्निसंस्कारान्विधाय होमं कुर्यादिति होमविधानप्रकारो द्रव्यनिरूपणपुरःसरं प्रतिपाद्यते । ततो द्वितीयदिवसे यजमानो देशिकादीन् संपूज्य दक्षिणां तेभ्यो दद्यात् । गुरुः संप्राप्तदक्षिणो देववह्निकुम्भान् विधिवत्संपूज्य प्रतिमाग्रे

कुम्भान्विन्यस्य मन्त्रन्यासं समाचरेदिति मन्त्रन्यासविधिरतीव संक्षेपेणाभिधीयते। ततः प्रतिष्ठान्ते स्नपनमुत्सवं भूरिनैवेद्यं कारयेद्वा न वेति विकल्प उच्यते। अनुक्तमत्र सामान्यस्थापनोक्तवत्कर्तव्यमिति सूच्यते। एवं प्रतिष्ठाविधिः संक्षेपेण प्रत्यपादि। अन्ते चैवमस्त्रप्रतिष्ठां यः कुर्यात् स इह सुखं परत्र मोक्षं च संयातीत्युच्यते। एवं त्रिपञ्चाशत्तमपटलार्थसंग्रहः।

चतुःपञ्चाशत्तमे पटले शरभेशप्रतिष्ठाविधिः कथ्यते। तत्र शरभेशमूर्तिलक्षणकथनपूर्वकं तत्प्रतिष्ठां वक्ष्यामीति प्रतिज्ञा। ततः कण्ठादपरभागे पक्ष्याकारं सुवर्णाभं सिंहपादचतुष्पादयुक्तमूर्ध्वस्थैर्वेदपादैश्च संयुक्तं कण्ठोर्ध्वभागे नराकारं सिंहास्यं भीमदंष्ट्रं रक्तनेत्रत्रयान्वितं पादाभ्यामम्बरस्थाभ्यां कुक्षिस्थाभ्यां च नरसिंहं हरन्तं शरभेशं कुर्यादित्युच्यते। कृताञ्जलिपुटोपेतो निश्चेष्टितमहातनुर्नम्रदेहो नरसिंहो भवेदिति ह्रियमाणनरसिंहमूर्तेर्लक्षणमुच्यते। शिलादिभिरिष्टेन द्रव्येण शरभेशः कर्तव्य इति सूच्यते। एवं मूर्तिलक्षणमभिधाय शरभेशमन्त्रं प्रतिपाद्य पूजादिष्विष्टसिद्धये चेमं मन्त्रं शरभेशार्थे योजयेदिति सूच्यते। ततो वज्रदेहाद्या अष्ट मूर्तिपा नामतो निर्दिश्यन्ते। एते च पूजायां प्रतिष्ठादौ च क्रमेण पूर्वादिदिक्षु संस्थिता इत्युच्यते। एतेषां स्वनामाद्यक्षरेण मन्त्रोद्धारः कर्तव्य इति सूच्यते। ततः प्रतिष्ठाविधिः प्रतिपाद्यते। तत्र शुभकमेऽङ्कुरार्पणकर्म विधिना कुर्यात्। रत्नन्यासं नेत्रमोक्षणं मृदाद्यैः शोधनं ग्रामादिप्रदक्षिणं जलाधिवासनं च पृथक् प्रागुक्तप्रकारेण हरे हरौ च कुर्यादिति जलाधिवासान्ताः क्रिया निर्दिश्यन्ते। ततो यागार्थं मण्टपकल्पनप्रकारोऽभिधीयते। तत्र वेदिकाकुण्डकल्पनप्रकारः कथ्यते। ततः शिल्पिविसर्जनपुण्याहप्रोक्षणविप्रभुक्तिवदुच्छिष्टोद्वासनमार्जनपुण्याहप्रोक्षणवास्तुहोमतत्पूजाकरणादि कुर्यात्। ततो मण्टपे स्थण्डिलं प्रकल्प्य तत्र विधिवच्छयनं कल्पयेत्। ततः प्रागुक्तवज्जलात्प्रतिमां मण्डपमानीय शुद्धिं कृत्वा शरभेशनरसिंहयोरपि कौतुकबन्धनं कृत्वा शयने देवं पूर्वदिङ्मस्तकमुदक्पादं शाययेत्। अत्र यदि हरिर्भिन्नपीठो भवेत्तदा तं देवस्य वामे शाययेदिति सूच्यते। ततो रक्तवस्त्रेण संवेष्टयेदिति शयनाधिवासविधिः प्रतिपाद्यते। ततः शिवकुम्भं विष्णुकुम्भं च शिरोदेशे विन्यसेत्। परितोऽष्टौ कुम्भान् वज्रदेहाद्यधिष्ठितान्विन्यसेत्। ततः प्रागुक्तशरभेशमन्त्रस्वरूपज्ञो गुरुर्गन्धाद्यैरर्चयेत्। मूर्तिमूर्तीश्वरन्यासं च कारयेदिति कुम्भाधिवासविधिः प्रतिपाद्यते। ततो द्रव्यनिरूपणपुरस्सरं होमविधिर्निरूप्यते। ततः संप्राप्तदक्षिणस्तुष्टो गुरुर्मूर्तिपाद्यैः सह यथायोग्यं मन्त्रन्यासं समाचरेदित्युक्त्वा मन्त्रन्यासप्रकारो वर्ण्यते। ततस्तत्कुम्भोदकैः परमेश्वरं स्नापयेदिति कुम्भाभिषेकविधिः सूच्यते। ततः प्रतिष्ठान्ते स्नपनं कारयित्वा देशिको भूरिनैवेद्यमुत्सवं च कुर्यात्। एवं प्रतिष्ठाविधिः क्रियानिर्देशमात्रेण प्रतिपाद्यते। तत एवं देवं प्रतिष्ठाप्य प्रत्यहं समर्चयेत्। अर्चनं प्राग्वदेव स्यात्। किंतु शरभेशमन्त्रैरर्चनं कर्तव्यमिति सूच्यते। ततः स्नपनोत्सवकर्मादि गुरुः शरभेशार्थे विधिना समाचरेदिति प्रोच्यते। ततो देशिको शरभेशमन्त्रेण शत्रुवर्गनाशनं सर्वव्याधिनाशनं, वश्याकर्षणविद्वेषादि च कुर्यादित्युच्यते। ततोऽनुक्तमत्र सामान्यस्थापनोक्तवत् कर्तव्यमिति सूच्यते। ततो यो नरः शरभेश्वरस्थापनं भक्त्या कुरुते, स इह जन्मनि वाञ्छितान्भोगान्भुक्त्वा परत्रापि चैश्वरं पदं प्राप्नुयादित्युच्यते। एवं चतुःपञ्चाशत्तमपटलार्थसंग्रहः।

पञ्चपञ्चाशत्तमे पटले चण्डेशाद्यनुग्रहप्रतिष्ठाविधिर्निगद्यते। तत्र लक्षणपुरःसरं चण्डेशानुग्रहनन्दीशानुग्रहविष्ण्वनुग्रहमूर्तीनां प्रतिष्ठां वक्ष्यामीति प्रतिज्ञा। ततः प्रथमं चण्डेशानुग्रहमूर्तिलक्षणं प्रतिपाद्यते। तत्रोमासहितचन्द्रशेखरमूर्तेर्वामे वा दक्षिणे वापि सुखासीनं स्थितं वापि कृताञ्जलिपुटोपेतं देवेक्षणसमोपेतं चण्डेशं कुर्यात्। तत्र देवः चण्डेशस्य शिरसि मालया वेष्टयेत्। एतादृशो मूर्तिविशेषश्चण्डेशानुग्रहदेवः स्यात्। एवं चण्डेशानुग्रहमूर्तिलक्षणमभिधीयते। तत एवमेव पूर्वोक्तोमासहितचन्द्रशेखरदेवस्य वामे दक्षिणे वा त्रिनेत्रं द्विभुजं शान्तं कृताञ्जलिपुटोपेतं जटामकुटसंयुक्तमागमश्रवणोन्मुखं प्रसन्नं नन्दीश्वरं कल्पयेदेष देवो नन्दीशानुग्रहदेवः स्यादिति नन्दीशानुग्रहमूर्तिलक्षणमुपवर्णितम्। ततः पूर्वोक्तदेवस्य वामे दक्षिणे वा सचक्राञ्जलिहस्तं शङ्खाब्जापरहस्तकं विष्णुं यथोक्तलक्षणं कारयेत्। एष एव देवो विष्णोश्चक्रदः स्यादिति विष्ण्वनुग्रह-



मूर्तिलक्षणमभिहितम्। एवमेवान्यानुग्रहाभिमुखं शिवं कारयेदिति च सूच्यते। ततः प्रतिष्ठाविधिः कथ्यते। पूर्वोक्ते शुभे काले निरीक्ष्याङ्कुरार्पणं कृत्वानुग्राह्यानुग्राहकयोरुभयोरपि विषये रत्नन्यासनेत्रोन्मीलनबेरशुद्धिपुरादिप्रदक्षिणपूर्वकं जलाधिवासनान्तानि कर्माणि कुर्यादिति क्रियाक्रमनिर्देशो निरूप्यते। ततो यागमण्डपकल्पनं तत्र कुण्डानां वेदिकायाश्च कल्पनं सूच्यते। ततस्तक्षकोद्वासनविप्रभुक्तिपुण्याहप्रोक्षणवास्तुहोमादिकरणं कुर्यादित्युच्यते। ततो मण्डपे वेद्यां स्थण्डिलं विधाय तत्र शयनं विधिवत्कल्पयेदिति कथ्यते। ततो जलान्मण्डपमानीतानां प्रतिमानां पृथक् स्नपनं कौतुकबन्धनं च विधाय शय्यारोहणं कारयेदिति शयनाधिवासविधिर्वर्ण्यते। अत्र देवेनानुगृहीता विभिन्नपीठाश्चेत् तेषां देवेशपादमूले शयनं प्रकल्प्य तत्राधिवासयेदिति सूच्यते। ततः कुम्भाधिवासविधिः प्रदर्श्यते। अत्र देवोत्तमाङ्गदेशे शिवकुम्भवर्धन्योः स्थापनं कर्तव्यम्। अनुगृहीतदेवानां शिरसि तत्तदध्यायोक्तप्रकारेण तत्तन्मूर्त्यष्टकाधिष्ठितान्कुम्भान् स्थापयेदिति सूच्यते। ततो होमविधिः संक्षेपतः प्रतिपाद्यते। ततो द्वितीये दिवसे मूर्तिपैः सह गुरुर्देवकुम्भाग्नीन् संपूज्य सुमुहूर्ते संप्राप्तदक्षिणो मन्त्रन्यासं समाचरेदिति मन्त्रन्यासविधिर्निरूप्यते। ततस्तत्कुम्भोदकैस्तत्तद्देवमभिषेचयेदिति कुम्भाभिषेकविधिः सूच्यते। ततः प्रतिष्ठान्ते स्नपनं चोत्सवं भूरिनैवेद्यं कारयेदिति कथ्यते। अत्र विषये विकल्पश्च प्रदर्श्यते। देवो विभिन्नपीठाश्चेत् कल्याणं कारयेदिति सूच्यते। ततोऽन्ते एवं यः प्रतिष्ठां कुरुते स नरोऽन्ते मोक्षमवाप्नुयादिति फलश्रुतिरुच्यते। एवं पञ्चपञ्चाशत्तमपटलार्थसंग्रहः।

षट्पञ्चाशत्तमे पटले भक्तानुग्रहदेवस्थापनविधिरुच्यते। लक्षणपुरःसरं भक्तानुग्रहदेवस्य स्थापनं वक्ष्यामीति प्रतिज्ञा। ततो भक्तानुग्राहकाः सदाशिवादयो देवाः प्रागेव प्रतिपादिताः। देवदानवगन्धर्वमुनयो, मनुजादयस्तथा पिपीलिकादयो जङ्गमाः, स्थावराश्च शास्त्रेऽस्मिन्ननुग्राह्याः संमताः। एतेषामनुग्रहश्च शास्त्रदीक्षा, स्पर्शदीक्षा, चाक्षुषीदीक्षा वाचिकीदीक्षादिर्बहुधा संमतः। यो नरः शिवाधिष्ठितदेहो मरणं याति, स नरो सर्वपापबहिष्कृतः शिव एव स्यात्। एवं यो नरः कालान्तिकाले स्वेष्टलिङ्गं संस्पृशन् प्राणमोक्षं कुर्यात्सोऽपि शिव एव भवति, नात्र संशयः। एवमनुग्राहकाणामनुग्राह्याणामनुग्रहस्य च प्रतिपादनं कृतम्। ततो भक्तानामाकृतिरूपां प्रतिमामासीनां स्थितां शयितां वा शुभलक्षणां कृताञ्जलिपुटोपेतां लोहादिद्रव्यैः कुर्यात्। एवं लोहादिद्रव्यैः सदाशिवादिदेवाकृतीः तदीयपीठानि वा विदध्यात्। भक्तप्रतिमा देवप्रतिमाश्च स्थापयेदिति भक्तानुग्रहदेवलक्षणं कथ्यते। ततः प्रतिष्ठाविधिः प्रतिपाद्यते। पूर्वोक्ते शुभे कालेऽङ्कुरार्पणं कृत्वा रत्नन्यासाक्षिमोक्षणबेरशोधनग्रामप्रदक्षिणजलाधिवासान्ताः क्रियाः कुर्यादिति क्रियाक्रमो निर्दिश्यते। ततः प्रतिष्ठामण्डपं कुण्डवेदिकासहितं पूर्वोक्तविधिना समाचरेदित्युच्यते। ततस्तक्षकोद्वासनविप्रभोजनपुण्याहप्रोक्षणादिकं विधाय मण्डपे स्थण्डिलं निर्माय तत्र शयनं विधिवत्कुर्यादित्युच्यते। ततो जलात्प्रतिमां मण्डपमानीय बेरशुद्धिपूर्वकं कौतुकबन्धनं कृत्वा शय्यायां शाययेदिति शयनाधिवासविधिः संग्रहेण कथ्यते। ततः पूर्ववत् कुम्भस्थापनं कुर्यादित्युच्यते। तत्र देवस्य पादभागे भक्तकुम्भं, परितो विद्येश्वराधिष्ठितकुम्भांश्च स्थापयेदिति सूच्यते। तत्त्वमूर्त्यादिविन्यासं प्रागुक्तविधिना समाचरेदिति कुम्भाधिवासविधिरतीव संक्षेपेण स्वरूपि। ततो होमविधिर्द्रव्यनिरूपणपुरःसरं संग्रहेण प्रतिपाद्यते। ततो द्वितीयदिवसे गुरुः कृतकुम्भाग्निपूजनः संप्राप्तदक्षिणो मूर्तिपैः समन्वितो बिम्बपुरतो घटान् विन्यस्य मन्त्रन्यासं कुर्यादित्युक्त्वा मन्त्रन्यासविधिर्यथावत्प्रतिपाद्यते। ततस्तत्कुम्भस्थजलैस्तदभिषेकप्रकारश्च सूच्यते। ततः प्रतिष्ठान्ते स्नपनं नैवेद्यं च दापयेत्। तत उत्सवोऽपि कर्तव्य इत्युक्त्वा विधानमिदं सामान्येन समीरितम्। विशेषः पुरारिप्रतिष्ठोक्तवद् भक्तप्रतिष्ठोक्तविधिवच्च कर्तव्य इति सूच्यते। तत एतत्प्रतिष्ठाफलवर्णनं विशेषतः प्रोच्यते। अन्ते मृतमुद्दिश्य तत्पुत्रः पौत्रो वा प्रतिष्ठामिमां कुर्यात्। जीवन्नेव वात्मानं शिवसंज्ञितं भावयन् प्रतिष्ठामात्मनः कुर्यादिति सूच्यते। एवं षट्पञ्चाशत्तमपटलार्थसंग्रहः।

सप्तपञ्चाशत्तमे पटले कालारिकामान्तकप्रतिष्ठाविधिः कथ्यते । तत्र प्रथमं कालारिकामान्तकयोर्लक्षणकथनपूर्वकं प्रतिष्ठां वक्ष्यामीति प्रतिज्ञा । ततः कालारिमूर्तिलक्षणं सूत्रपातप्रदर्शनपूर्वकमभिधीयते । अत्र चतुर्भुजकालारिमूर्तिलक्षणमधः-पतितकालस्य लक्षणं तथा तत्र स्थितस्य मार्कण्डेयस्य लक्षणं च प्रतिपाद्यते । अत्र मार्कण्डेयेन युक्तो वा वर्जितो वा देवो भवेदिति विकल्प उच्यते । अत्र शिवलिङ्गोद्भूतकालारिदेवेन पातितं वा कालं कुर्यादिति कालारिमूर्तिविषये पक्षान्तरं सूच्यते । ततः कामान्तकमूर्तिलक्षणं निरूप्यते । अत्र योगिदक्षिणामूर्तेरग्रे तद्दृष्टिपातेन क्षणेन पतितं मन्मथं कुर्यादित्युक्त्वा तत्र मन्मथमूर्तिलक्षणं निरूप्यते । तत्र मन्मथो देवभागवसन्ताख्यमित्रद्वययुक्तो वायुक्तो वा भवेदिति विकल्प उच्यते । एवं मन्मथः पञ्चशरयुक्तोऽथवैकशरयुक्तो वा भवेदिति विकल्पोऽभिधीयते मन्मथशराणां पञ्चानां 'उन्मिनी, तापिनी, वेदिनी, द्राविणी, मारिणी' इति नामानि निर्दिश्यन्ते । ततः प्रतिष्ठाविधिः कथ्यते । तत्र पूर्वोक्तवद्वासरं शुभं निरीक्ष्याङ्कुरार्पणं विधाय पूर्ववद्यागमण्डपं नयेदिति कुण्डवेदिकासहितमण्डपविधिः संग्रहेण निरूप्यते । ततो देवे, काले कामे च पृथक् पृथग् रत्नन्यासाक्षिमोक्षणबेरशुद्धिग्रामप्रदक्षिणतोयाधिवासान्ताः क्रियाः कुर्यादिति क्रियाक्रमनिर्देशोऽभिधीयते । ततो मण्डपे वेद्यूर्ध्वे स्थण्डिलं विधाय तत्र प्रतिमानां पृथक् शयनं कल्पयेदित्युच्यते । तत्र देवस्य पाददेशे कालकामयोर्विषये शय्या कर्तव्येति सूच्यते । ततो जलान्मण्डपमानीतानां प्रतिमानां पृथक् स्नपनं कृत्वा कौतुकबन्धनं च कृत्वा पूर्ववत् पृथक् शयनारोहणं कारयेदिति शयनाधिवासविधिरुच्यते । ततः कुम्भाधिवासविधिः संक्षेपेण प्रतिपाद्यते । तत्र देवस्य शिरोदेशे ईशकुम्भं तदुत्तरे वर्धनीं च स्थापयेत् । कालस्य कुम्भं तच्छिरोदेशे तन्मनुं स्मरन्विन्यसेत् । कामस्यैतच्छिरोदेशे तन्मनुं स्मरन् घटं न्यसेत् । यदि कामो देवभागवसन्ताख्यमित्राभ्यां युक्तस्तदा कामपार्श्वयोः कल्पशय्याशायितयोस्तयोरपि कलशद्वयं विन्यसेत् । परितो विद्येश्वराधिष्ठितान् घटानस्त्रहेमाढ्यान् अष्ट च विन्यसेत् । ततो यथाविधि गन्धादिभिः कुम्भार्चनं कुर्यात् । अथ तत्त्वेश्वरादिविन्यासं कुर्यादित्युक्त्वा कालकामयोर्विषये तत्त्वमूर्त्यादिकं सूच्यते । कामविषये वसन्तः ग्रीष्मसंज्ञकः प्रावृट् शरद्, हेमन्त इति मूर्तीश्वरा निर्दिष्टाः । ततो द्रव्यनिरूपणपूर्वकं होमविधिः संक्षेपेण निरूप्यते । ततो रात्रिशेषं नीत्वा प्रभाते देशिकः सुविशुद्धात्मा मूर्तिपैः सह बिम्बकुम्भाग्नीन् संपूज्य संप्राप्तदक्षिणः सुमुहूर्ते सुलग्ने कुम्भान् बिम्बपुरतो विन्यस्य मन्त्रन्यासं कुर्यादिति मन्त्रन्यासविधिः प्रतिपाद्यते । ततोऽनुक्तमत्र सामान्यस्थापनोक्तवदाचरेदिति सूच्यते । अन्ते च एवं यो मर्त्यः प्रतिष्ठां कुर्यात् स स्ववाञ्छितान् भोगान्भुक्त्वा देहान्ते शिवं प्राप्नुयान्न संशय इति फलश्रुतिर्दृश्यते । एवं सप्तपञ्चाशत्तमपटलार्थसंग्रहः ।

अष्टपञ्चाशत्तमे पटले कल्याणमूर्तिप्रतिष्ठाविधिरुच्यते । तत्र प्रथमं लक्षणकथनपूर्वकं कल्याणमूर्तेः प्रतिष्ठां वक्ष्यामीति प्रतिज्ञा । ततो देवस्य लक्षणं सूत्रपातपुरःसरं प्रतिपाद्यते । पश्चाद् देवानुरोधेन गौरी कर्तव्येत्युक्त्वा तस्या मानं कथ्यते । ततस्तद्देव्यपरभागस्था सर्वलक्षणैः समन्विता श्रीदेवी भवितव्येत्युक्त्वा तस्या लक्षणं मानं च सूच्यते । ततः सूत्रपातप्रदर्शनपूर्वकं देवमानानुरोधेन विष्णोर्लक्षणं प्रतिपाद्यते । ततो विष्णोरुक्तप्रमाणेन ब्रह्माणमपि कारयेदित्युक्त्वा ससूत्रपातं ब्रह्मणो लक्षणं निरूप्यते । ततोऽग्निकुण्डस्य तत्कुण्डस्थाग्नेश्च लक्षणं कथ्यते । ततः प्रतिष्ठाविधिः प्रतिपाद्यते । पूर्ववत्कालं निरीक्ष्याङ्कुरार्पणकर्म पूर्वोक्तवत् कुर्यात् । ततो देवस्य सव्ये ब्रह्माणमुत्तरे विष्णुं, गौर्या दक्षिणे लक्ष्मीं च विन्यस्य, देवे विष्णौ च नवरत्नं न्यसेत् । शिष्टानां ब्रह्मगौरीश्रीदेवीनां विषये कनकं विन्यसेदिति रत्नन्यासविधिः सूच्यते । ततस्तत्तदध्यायोक्तमार्गेण तेषां दृङ्मोक्षणं कुर्यादिति दृङ्मोक्षणविधिः सूच्यते । ततो बेरशुद्धिं पुरग्रामादिप्रदक्षिणं कृत्वा तोयेऽधिवासयेदिति जलाधिवासविधिः कथ्यते । तत्र मध्ये देवं तद्दक्षवामयोर्ब्रह्मविष्णू, ब्रह्मपार्श्वयोर्देवीं श्रियं च विन्यसेदिति जलाधिवासकाले मूर्तीनां विन्यासप्रकारो निरूप्यते । ततो देवस्य देव्याश्च यागमण्डपद्वयकल्पनप्रकारस्तत्र कुण्डवेदिकाकल्पनप्रकारश्चाभिधीयेते । ततो मण्डपद्वयेऽपि शिल्पिविसर्जनं विप्रभोजनं पुण्याहप्रोक्षणं वास्तुहोमं च यथाविधि कृत्वा संस्कृते तस्मिन्नुभयमण्डपेऽपि स्थण्डिलं संपाद्य तत्र विधिवच्छयनं कल्पयेत् । ततो जलान्मण्डपमानीतानां देवब्रह्मविष्णुगौरीश्रीदेवीनां स्नपनेन



शुद्धिं कृत्वा पृथक् कौतुकबन्धनं च विधाय देवं देवमण्डपकल्पिते शयने शाययेत् । ततस्तत्र देवस्य वामे दक्षिणे च विष्णुं ब्रह्माणं च भिन्नशय्यायां शाययेत् । देव्यास्तु मण्डपे शयनं संकल्प्य देवीं शाययित्वा तस्या दक्षिणे श्रियमुत्तरे वह्निं च शाययेदिति प्रतिमानां शयनाधिवासविधिरभिधीयते । अत्र वह्नेर्जलाधिवासविधौ विनियोगो न कथ्यते । शयनाधिवासविधौ कुम्भाधिवासविधौ च विनियोगो दृश्यते । रक्तवाससा देवं देवीं च वेष्टयेत् । पीतेन वाससा विष्णुं कृष्णेन वाससा श्रियं शुक्लेन वाससा पितामहं च वेष्टयेदिति सूच्यते । किं च प्रतिमण्डपमाचार्यास्तथा प्रतिदेवं गुरवश्च संगृहीतव्याः क्रियानिर्वर्तनायेति च सूच्यते । ततः कुम्भाधिवासविधिर्निरूप्यते । तत्र देवोत्तमाङ्गदेशे शिवकुम्भं वर्धनीं च विन्यसेत् । तथा ब्रह्मविष्ण्वोः शिरोदेशे घटद्वयं विन्यसेत् । परितो विद्येशाधिष्ठितानष्टौ घटांश्च विन्यसेत् । एवं देवीश्रीपावकानां च शिरोदेशे घटत्रयं न्यसेत् । परितो वामाद्यष्टशक्त्यधिष्ठितानष्टकुम्भांश्च स्थापयेत् । तत्तल्लक्षणोदिताकारध्यानपुरःसरं देवान् पृथक् पृथग् गन्धादिभिरुपचारैः संपूजयेत् । तत्त्वमूर्त्यादिविन्यासं देवविषये पूर्ववत् कुर्यात् । अन्येषां तत्तदध्यायप्रोक्तवत्तत्त्वादिविन्यासं विदध्यादिति कुम्भाधिवासविधिः प्रदर्श्यते । ततः कुण्डाग्निसंस्कृतिं कृत्वा होमः प्रकर्तव्य इत्युक्त्वा होमविधिर्द्रव्यनिरूपणपूर्वकं संग्रहेण निरूप्यते । अत्र पूर्णाहुत्यन्ते देशिकोत्तमः स्वगृहे तत्प्रदेशे बाधासशान्तये स्वपेदिति सूच्यते । प्रभाते कृतनित्यक्रियः कर्ता मूर्तिपाद्यैः समन्वितं गुरुं वस्त्रहेमाङ्गुलीयाद्यैः संपूज्य पञ्चनिष्कादिसंमितां दक्षिणां दद्यादित्युच्यते । ततो मन्त्रन्यासविधिः प्रतिपाद्यते । ततः संपूज्य स्नपनं कुर्यादर्चनोक्तवदर्चयेच्च । अन्ते नैवेद्यं दत्त्वा प्रतिष्ठोत्सवमाचरेदिति क्रियाक्रमोऽतीव संक्षेपेणाभिधीयते । ततः स्वतन्त्रे देवालयेऽस्मिन्विषये कश्चिद्विशेषोऽस्तीत्युक्त्वा स विशेषः प्रदर्श्यते । अन्ते यो मर्त्य एवं प्रतिष्ठां कुर्यात्स वाञ्छितं फलमवाप्नुयादित्युच्यते । एवमष्टपञ्चाशत्तमपटलार्थसंग्रहः ।

एकोनषष्टितमे पटले कल्याणकर्मविधिर्निगद्यते । तत्र प्रथमं सनातने सर्वदेवेऽपि विषये कल्याणकर्म वक्ष्यत इति प्रतिज्ञा । ततः कल्याणकर्माङ्गः कालो निरूप्यते । ततः कल्याणविधिः प्रतिपाद्यते । तत्र प्रपायां मण्डपे वेष्टदेशे गोमयलेपिते स्थण्डिलं संकल्प्य तत्र सितवस्त्रोत्तरीयं भूषणाद्यैर्भूषितं गेयपञ्चमहाशब्दैः छत्रचामरदर्पणैरनेकधूपसद्दीपैश्च सह शिबिकायां समारोप्य समानीतं देवेशं प्राङ्मुखं स्थापयेत् । तस्य पुरतः सिकतादिभिः स्थण्डिलं कृत्वा देवस्थण्डिलयोर्मध्ये वह्निमूर्तिं स्थापयेत् । वह्नेर्वामभागे सौम्यास्यमजं तथा दक्षिणाननं विष्णुं तत्सव्यभागे वस्त्रादिभूषितं स्थापयेत् । ततो गुरुर्देवस्य पाद्याचमनं दुकूलाच्छादनोत्तरीयार्थं वस्त्रद्वयं दद्यात् । ततःस्थण्डिलेऽग्निं विनिक्षिप्य पञ्चसंस्कारानाचरेत् । ततो होमं कृत्वा पूर्णाहुत्यन्ते सर्वाभरणभूषितां गौरीं देवस्य सव्यभागे संस्थाप्य पाद्याचमनार्घ्यं दत्त्वा देव्या मङ्गलसूत्रं दद्यात् । आच्छादनार्थं वस्त्रयुग्मं च देव्यै दापयेदिति मङ्गलसूत्रदानविधिः प्रतिपाद्यते । अत्र होमविधिर्मङ्गलसूत्रदानविधिश्च समन्त्रकं संग्रहेण निरूप्यते । ततो देव्याः पार्श्वे लक्ष्मीं विन्यस्य गुरुर्देवदेव्योः कौतुकबन्धनं कुर्यादिति कौतुकबन्धनविधिः सूच्यते । ततो धृतपञ्चाङ्गभूषणेन समधीतशिवागमेन गुरुणादिष्टोऽपर एतादृशो गुरुर्निजदेहं विष्णुवद्ध्यात्वा करकेण स्वकराभ्यां शिवस्यापरे करे हृन्मन्त्रेणोदकं दद्यादित्युदकदानविधिर्निरूप्यते । ततो द्वयोर्देवदेव्योर्भक्ष्यं दद्यादित्युच्यते । ततो देवाय मधुपर्कदानविधिस्ताम्बूलदानविधिश्च कथ्यते । ततो गौर्या हृदि शिवहस्तन्यासः, तस्या दक्षिणकर्णे बीजमुख्यमन्त्रजपोऽश्मारोपणविधिर्लाजहोमविधिश्च निरूप्यन्ते । ततः शिवाग्नेस्तद्गुरुसनस्थ विसर्जनं कुर्यादित्युच्यते । ततश्चतुर्थदिवसे चतुर्थं कर्म कारयेदिति सूच्यते । ततो दम्पत्योः शयनविधिर्निरूप्यते । ततो बिम्बं चेदुत्सवं कुर्यात् । अचलं चेत् महासने स्थापयेदित्युक्त्वा बिम्बानां स्थापनप्रकार उच्यते । तत एवमेवान्यदेवानां विवाहकर्म समाचरेदिति सूच्यते । ततो भिन्नपीठाम्बिकानां मूललिङ्गस्य च विषये कल्याणकर्मविधाने विशेषविधिः प्रतिपाद्यते । ततः कल्याणमूर्तिप्रतिष्ठाकर्तुः फलानि विशेषतः प्रदर्श्यन्ते । तत्र प्रतिष्ठाकर्ता स्वदेहान्ते यत्स्थानं गत्वा मम भक्ता न पुनर्निवर्तन्ते, तादृशमनुत्तमं शैवं स्थानं प्राप्नुयादित्युच्यते । एवमेकोनषष्टितमपटलार्थसंग्रहः ।

षष्टितमे पटले विष्णुमार्धप्रतिष्ठाविधिः कथ्यते । तत्रादौ लक्षणकथनपूर्वकं विष्णुमार्धप्रतिष्ठां वक्ष्यामीति प्रतिज्ञा । ततः शिलादिभिर्द्रव्यैः प्रतिमां कुर्यादित्युक्त्वा प्रथममुमार्धमूर्तेरथवार्धनारीश्वरमूर्तेर्लक्षणमभिधीयते । तत्र प्रतिमाया दक्षिणभागं हरार्धत्वेन वामभागमुमार्धत्वेन च कुर्यात् । दक्षे शशधरांकितजटामकुटं वामेऽलकेन समन्वितं करण्डमकुटं च विदध्यात् । ललाटदक्षिणभागे त्वर्धनयनं कर्तव्यम् । सव्यकर्णे नक्रकुण्डलं वामकर्णे पत्रं च कल्पयेत् । सव्यहस्तयोष्टङ्काभयौ वामहस्ते उत्पलं देव्यध्याये दिताख्रं वा कुर्यात् । वामभागे लोचनं दर्पणासक्ततया भवेदित्युक्त्वा दर्पणलक्षणं प्रतिपाद्यते । दक्षिणभागे व्याघ्राजिनाम्बरमुमाभागे वामे स्तनं चित्रवस्त्रं च कल्पयेत् । सव्यपादं कुञ्चितं वामपादं सुस्थितं च कुर्यात् । दक्षिणभागे माणिक्यसंनिभं वामं मरकताभं च कुर्यादिति सूत्रपातप्रदर्शनपूर्वकमुमार्धमूर्तिलक्षणं न्यरूपि । ततः पूर्वोक्तप्रकारेण दक्षिणभागे महेशार्धं कृत्वा वामभागे विष्ण्वर्धं कुर्यात् । तत्र शङ्खकटकयुतभुजद्वयं पीताम्बरसमोपेतं च विष्ण्वर्धभागं कल्पयेदिति विष्ण्वर्धमूर्तिलक्षणं निगद्यते । ततः प्रतिष्ठाविधिः प्रतिपाद्यते । तत्र पूर्वोक्तकालं निरीक्ष्य तद्वदेवाङ्कुरार्पणं कृत्वा रत्नन्यासनयनोन्मीलनबेरशोधनपुरादिप्रदक्षिणतोयाधिवासनानि सामान्यस्थापनोक्तमार्गेणैव समाचरेदित्युच्यते । ततो मण्डपविधिः सूच्यते । तत्र कुण्डविषये विशेषः कथ्यते । ततः शिल्पिविसर्जनविप्रभोजनपुण्याहप्रोक्षणानि कृत्वा मण्डपे स्थण्डिलं प्रकल्प्य तत्र विधिवच्छयनं संकल्पयेदित्युच्यते । ततो जलादानीतप्रतिमयोः स्नपनेन शुद्धिं कृत्वा पृथगुभयोर्हस्ते कौतुकबन्धनं कुर्यादिति कौतुकबन्धनविधिः सूच्यते । ततः प्रतिमां शयने शाययेदिति शयनाधिवासविधिः संक्षेपेण कथ्यते । ततः कुम्भाधिवासविधिर्निरूप्यते । तत्र देवस्य शिरःप्रदेशे शिवकुम्भं विन्यसेत् । उमोत्तमाङ्गे वर्धनीं विन्यसेत् । विष्ण्वर्धविषये विष्णोः शिरःप्रदेशे विष्णुकुम्भं न्यसेत् । तत्तत्कायार्धभागं ध्यात्वा गुरुः पूजयेत् । परितोऽष्टघटान् विद्येशाधिष्ठितान्विन्यस्य गन्धस्रग्धूपनैवेद्यादिभिः संपूजयेत् । तत्त्वतत्त्वेश्वरन्यासं कृत्वा तद्व्याप्तिं संभावयेदिति तत्त्वतत्त्वेश्वरन्यासः सूच्यते । ततः क्ष्मादिमूर्त्यष्टकं विन्यस्य मूर्तीशानपि विन्यसेदिति मूर्तीशन्यासप्रकारं सूचयित्वा उमार्धे विष्ण्वर्धे चोभयत्रापि मूर्तीशानां विषये विशेषो निरूप्यते । ततो होमविधिः द्रव्यनिरूपणपुरःसरं संक्षेपेण प्रतिपाद्यते । ततो द्वितीये दिवसे देशिको मूर्तिपैः सह देवकुम्भाग्नीन् संपूजयेत् । यजमानो मूर्तिपान् गुरुं च वस्त्रहेमाङ्गुलीयाद्यैः संपूज्य तेभ्यो दक्षिणां दद्यादित्युच्यते । ततः शुभे मुहूर्ते संप्राप्ते गुरुर्मन्त्रन्यासं समाचरेदित्युक्त्वा मन्त्रन्यासविधिरुमार्धे विष्ण्वर्धे च पृथङ् निरूप्यते । तत उत्सवं स्नपनं भूरिनैवेद्यं कारयेद्वा नवेति विकल्पेनोच्यते । ततोऽनुक्तमत्र तद्देवस्थापनोदितं संग्राह्यमिति सूच्यते । अन्ते च भुक्तिमुक्तिदा विष्णुमार्धप्रतिष्ठा कथितेति फलश्रुतिः प्रदर्श्यते । एवं षष्टितमपटलार्थसंग्रहः ।

एकषष्टितमे पटले त्रिमूर्तिस्थापनविधिः कथ्यते । तत्र प्रथमं लक्षणपुरःसरं त्रिमूर्तिस्थापनं वक्ष्यामीति प्रतिज्ञा । ततो रक्तवर्णस्त्रिनेत्रो वरदाभयहस्तकः कृष्णापरशुसंयुक्तो जटामकुटमण्डित एकपादयुक्तः, कटिप्रदेशादूर्ध्वं दक्षिणोत्तरयोः पार्श्वयोरुभयोरपि क्रमेण ब्रह्मविष्ण्वर्धकाययुक्तो देव एकपादत्रिमूर्तिरिति एकपादत्रिमूर्तिलक्षणमभिधीयते । ततोऽत्र ब्रह्मविष्णू एकपादयुक्तौ कृताञ्जलिपुटोपेतौ वा भवेतामित्येको विकल्प उच्यते । शिवलिङ्गस्य पार्श्वयोरन्तर्गतौ वा तौ स्यातामित्यपरो विकल्पोऽभिधीयते । अथवा तौ पृथगेकविष्टरमास्थितौ स्थाप्याविर्त्येकविकल्पः कथ्यते । ततो मध्यमे पृथगालयसंस्थितं लिङ्गं तस्य सव्येऽपसव्येऽपि ब्रह्मविष्णू स्यातामित्यपरो विकल्पश्च निर्दिश्यते । तत्त्रिमूर्तयः पृथग्धामस्थिता अथवैकधामस्था संश्लिष्टधामयुक्ता वा भवेयुः । पूर्वास्याः पश्चिमास्या वा परिवारादिसंयुता भिन्नप्राकारगा वैकप्राकारसंस्थिता वा त्रिमूर्तयो भवेयुरित्युच्यते । अथवा ब्रह्मविष्ण्वोर्मध्यमे नृत्तमूर्त्यादिदेवा वा स्थापनीया इति त्रिमूर्तिलक्षणं बहुधा विकल्पेन प्रतिपाद्यते । ततः प्रतिष्ठाविधिः प्रतिपाद्यते । तत्र शिवलिङ्गप्रतिष्ठा ब्रह्मप्रतिष्ठा केशवप्रतिष्ठा च तत्तदध्यायसंसिद्धमार्गेण कर्तव्या । एकपादत्रिमूर्तेः प्रतिष्ठेदानीमुच्यत इति प्रतिज्ञा क्रियते । ततः पूर्वोक्तप्रकारेण शुभे काले निरीक्ष्य पूर्वोक्तवदङ्कुरार्पणकर्म कृत्वा रत्नन्यासं दृङ्मोक्षणं बेरशुद्धिं च पृथक् कुर्यात् । ततो ग्रामादिप्रदक्षिणं तोयाधिवासनं च कुर्यादिति क्रियाक्रमनिर्देशः क्रियते ।



[illegible] पूर्वोक्तप्रकारेण कल्पयेदित्युक्त्वा तत्र कुण्डकल्पनप्रकारोऽभिधीयते । ततो मण्डपे तक्षकोद्वासनविप्रभोजन-[illegible] विधाय तत्र स्थण्डिलं संकल्प्य तत्र शयनं च विधिवत्कल्पयेत् । ततो जलादानीतप्रतिमायाः स्नानं कृत्वा [illegible] च विधाय तां शयने शाययेदिति शयनाधिवासविधिः संग्रहेण प्रतिपाद्यते । अत्र कौतुकबन्धनं ब्रह्मविष्णुहराणां [illegible] कर्तव्यमिति सूच्यते । ततः कुम्भाधिवासविधिर्वर्ण्यते । तत्र देवस्य ब्रह्मणो विष्णोश्च शिरोदेशे घटत्रयं [illegible] । शिवकुम्भस्योत्तरे वर्धनीं च स्थापयेत् । तत्तद्रूपं ध्यात्वा गन्धादिभिर्यजेत् । तत्त्वमूर्त्यादिविन्यासं तेषां यथोदितं [illegible] कुम्भाधिवासविधिः प्रदर्शितः । ततोऽग्निकुण्डादिसंस्कारान् विधाय होमं कुर्यादिति द्रव्यनिरूपणपुरःसरं होमविधिः [illegible] प्रतिपाद्यते । ततो द्वितीये दिवसे देशिको मूर्तिपैः सह देवकुम्भाग्निपूजां विधाय यजमानेन वस्त्रहेमाद्यैः संपूजितः [illegible] विन्यपुत्रो घटान् विन्यस्य मन्त्रन्यासं कुर्यादित्युक्त्वा मन्त्रन्यासविधिर्निरूप्यते । ततस्तत्कुम्भजलैस्तत्तद्देशेऽभि-[illegible] कुम्भाभिषेकविधिः सूच्यते । ततः स्नपनम् उत्सवं भूरि नैवेद्यं च कुर्यात् । अनुक्तमत्र तत्तदध्यायचोदितं सम ग्राह्यमिति [illegible] । ततो येन नरेण त्रिमूर्तीनां प्रतिष्ठा कृता स इह लोके सुखं संप्राप्यान्ते परं शिवं यातीति फलश्रुतिर्दृश्यते । [illegible]षष्टितमपटलार्थसंग्रहः ।

द्विषष्टितमे पटले वृषारूढप्रतिष्ठाविधिरुच्यते । तत्र प्रथमं लक्षणकथनपुरःसरं वृषारूढप्रतिष्ठां वक्ष्यामीति प्रतिज्ञा । [illegible] सूत्रपातपुरःसरं वृषारूढमूर्तिलक्षणमभिधीयते । तत्र चतुर्भुजस्त्रिनेत्रो जटामकुटसंयुतः समभङ्गयुतः स्थितश्च देवो भवेत् । [illegible] परहस्तयोर्दक्षिणे वामे च क्रमेण परशुर्मृगश्च स्याताम् । पूर्वदक्षिणहस्तो वक्रदण्डयुककटकामुखः स्यात् । पूर्ववामहस्तस्य [illegible] वृषमस्तके विन्यस्तो भवेत् । स हस्तो हंसपक्षो वा अधोमुखपताको वा स्यादिति विकल्पः प्रोच्यते । देवस्य दक्षिणे [illegible] कारयेत् । देव्या वियुक्तो वा देवो भवेदिति विकल्पश्चाभिधीयते । वृषभं देवस्य पृष्ठस्थं कुर्यात् । एवं [illegible] संपाद्य स्थापनं कुर्यादित्युच्यते । ततः प्रतिष्ठाविधिरभिधीयते । अत्र पूर्वोक्ते शुभे कालेऽङ्कुरार्पणं विधाय रत्नन्यासं [illegible] च कुर्यादित्युच्यते । अत्र वृषस्यापि नेत्रोन्मीलनं कर्तव्यमिति सूच्यते । ततो बेरशुद्धिं ग्रामप्रदक्षिणं जलाधिवासनं [illegible] कुर्यादिति जलाधिवासान्ताः क्रिया निर्दिश्यन्ते । ततः पूर्ववन्मण्डपं नयेदित्युक्त्वा तत्र कुण्डकल्पनप्रकारोऽभिधीयते । [illegible] विसर्जनं विप्रभोजनं पुण्याहप्रोक्षणं च विधाय मण्डपे स्थण्डिलं निर्माय तत्र शयनं कल्पयेदित्युच्यते । ततो जलादा-[illegible] स्नपनेन शुद्धिं कृत्वा कौतुकबन्धनं कुर्यादित्युक्त्वा वृषस्यापि यथोदितं कौतुकबन्धनं कर्तव्यमिति सूच्यते। ततः प्रतिमां [illegible] दिति शयनाधिवासविधिः संक्षेपेण प्रतिपाद्यते । अत्र यदि वृषो मूर्तेर्भिन्नो भवेत् तदा देवपादमूले दक्षिणभक्तितया [illegible] शाययेदिति सूच्यते । ततः कुम्भाधिवासविधिर्निरूप्यते । तत्र शिवस्य शिरोदेशे शिवकुम्भं वर्धनीं च स्थापयेत् । [illegible] देशे वृषभकुम्भं विन्यसेत् । परितोऽष्ट विद्येशाधिष्ठितान् कुम्भान् विन्यसेत् । गन्धपुष्पादिभिर्नैवेद्यान्तैः कुम्भान् [illegible] । तत्त्वमूर्त्यादिविन्यासं देवे वृषे च कुर्यादित्युच्यते । ततोऽग्निकुण्डादिसंस्कारान्विधाय होमं कुर्यादित्युक्त्वा [illegible] पुरःसरं होमविधिः संक्षेपेणाभिधीयते । ततो द्वितीये दिवसे समूर्तिपो गुरुर्देवकुम्भाग्नीन्संपूज्य यजमानेन वस्त्र-[illegible] संप्राप्तदक्षिणो मन्त्रन्यासं समाचरेदित्युक्त्वा मन्त्रन्यासविधिरुच्यते । अत्र देवी विभिन्नपीठा चेत् तस्याः पृथक् [illegible] समाचरेदिति सूच्यते । पश्चात् कल्याणं कारयेत् । उत्सवं स्नपनं भूरि नैवेद्य कारयेद्वा न वेति विकल्पेनोच्यते । [illegible] सामान्यस्थापनोक्तवत्संग्राह्यमिति सूच्यते । तथा वृषो धनोऽधनो वा संमत इति च सूच्यते । अन्ते [illegible] प्रतिष्ठाऽनुष्ठिता, स इह यथेच्छं भोगान् भुक्त्वा शैवं पदमवाप्नुयादिति फलश्रुतिर्दृश्यते । एवं [illegible]पटलार्थसंग्रहः ।

त्रिषष्टितमे पटले गङ्गाधरप्रतिष्ठाविधिर्निगद्यते । तत्र प्रथमं लक्षणकथनपूर्वकं प्रतिष्ठाविधिं वक्ष्यामीति प्रतिज्ञा । [illegible] चतुर्भुजस्त्रिनेत्रो जटामकुटमण्डितः स्थितः प्रसन्नास्यो देवो भवेत् । तस्य परहस्तयोः कृष्णापरशू, पूर्वदक्षिणहस्तेऽभयं

पूर्ववामहस्ते कटकामुखं च कल्पयेत् । कटकामुखहस्तेन गङ्गासमन्वितां जटामेकां धृत्वा संस्थितो देवो भवेत् । देवस्य वामभागे सलक्षणां देवीं कुर्यात् । दक्षिणभागे द्विबाहुं द्विनेत्रं छन्मस्तककृताञ्जलिं विलम्बितजटान्वितं वल्कलाम्बरसमन्वितं भगीरथं कल्पयेत् । एवंभूतो देवो गङ्गाधरो भवेदिति सूत्रपातप्रदर्शनपूर्वकं गङ्गाधरमूर्तिलक्षणं कथ्यते । ततः प्रतिष्ठाविधिः प्रोच्यते । तत्र पूर्वोक्ते शुभे कालेऽङ्कुरार्पणं विधाय रत्नन्यासं नेत्रमोक्षणं च कुर्यादित्युक्त्वा गङ्गाया रत्नन्यासो न कर्तव्यः, भगीरथस्य पञ्चरत्नन्यासः कर्तव्य इति च सूच्यते । ततः प्रतिमाशोधनं पुरग्रामादिप्रदक्षिणं तोयाधिवासं च कुर्यादिति क्रियाक्रमो निर्दिश्यते । ततः पूर्वोक्तमार्गेण यागमण्डपः कर्तव्य इत्युक्त्वा तत्र कुण्डकल्पनप्रकारो वर्ण्यते । ततः शिल्पिविसर्जनं विप्रभोजनं पुण्याहप्रोक्षणं वास्तुहोमं च विधाय मण्डपे स्थण्डिलं संकल्प्य तत्र शयनं कल्पयेत् । ततो जलान्मण्डपमानीतानां बिम्बानां स्नपनं पृथक् कौतुकबन्धनं च कुर्यादित्युक्त्वा भगीरथस्य गङ्गाया देव्याश्च पृथक् कौतुकबन्धनं कुर्यादिति सूच्यते । ततः प्रतिमानां शयनारोपणं कुर्यात् । तत्र यदि भगीरथो भिन्नपीठस्थः स्यात्तदा देवस्य पाददेशे तं शाययेदित्युच्यते । एवं शयनाधिवासविधिरभिधीयते । ततः कुम्भाधिवासविधिरुच्यते । तत्र देवस्य शिरःपार्श्वे शिवकुम्भं वर्धनीं च स्थापयेत् । ततो भगीरथस्य गङ्गायाश्च शिरोदेशे घटं स्थापयेत् । परितोऽष्टौ विद्येशाधिष्ठितान् घटान् विन्यसेत् । पूर्वोक्तरूपध्यानपुरःसरं गुरूत्तमो गन्धपुष्पादिभिः सर्वान्देवान्क्रमादभ्यर्चयेत् । तत्त्वमूर्त्यादिविन्यासं देवस्य पूर्वोक्तप्रकारेण कुर्यादित्युच्यते । ततो भगीरथस्य पञ्चमूर्तीशा मकारोत्थाः सद्योजातादयोऽत्र इत्युक्त्वा भगीरथमूलमन्त्रो हृदयाद्यङ्गमन्त्राश्च प्रदर्श्यन्ते । गङ्गायास्तद्विधानोक्तमार्गेणैव तत्त्वमूर्त्यादिविन्यासं समाचरेदिति कुम्भाधिवासविधिर्निरूप्यते । ततः कुण्डाग्निसंस्कारान्कृत्वा होमं कुर्यादित्युक्त्वा द्रव्यनिरूपणपुरःसरं होमविधिः सूच्यते । तत आचार्यादीनां दक्षिणां दापयेत् । ततस्तत्तद्देवपुरतः कुम्भान्विन्यस्य मन्त्रन्यासं समाचरेदित्युक्त्वा मन्त्रन्यासविधिः प्रतिपाद्यते । तत्र गङ्गाया भगीरथस्य च मन्त्रन्यासप्रकारो निरूप्यते । सहासना देवी यदि स्यात्तदा वर्धन्या बीजमादाय तस्या हृदि विन्यसेत् । सा विभिन्नपीठा चेत् पृथक्प्रतिष्ठां समाचरेदिति सूच्यते । तत्तत्कुम्भजलैस्तत्तत्प्रदेशेऽभिषेचयेदिति कुम्भाभिषेकप्रकारः सूच्यते । ततः कल्याणं कारयेत् । तदन्ते स्नपनमुत्सवं च कारयेत् । भूरिनैवेद्यं कर्तुरिच्छावशेन कारयेदित्युच्यते । अत्रानुक्तं सामान्यस्थापनोक्तवत् संमाह्यमिति सूच्यते । तथा देवो भगीरथयुतो वा वियुक्तो वा भवेदिति च सूच्यते । अन्ते च यो गङ्गाधरप्रतिष्ठां भक्त्या कुर्यात् स इह लोके स्वबन्धुजनसंयुतः सुखमनुभूय स्वदेहपातान्ते दुर्लभं शैवं स्थानं यायादिति फलश्रुतिर्दृश्यते । एवं त्रिषष्टितमपटलार्थसंग्रहः ।

चतुःषष्टितमे पटले गुहस्थापनविधिः कथ्यते । तत्र प्रथमं लक्षणकथनपूर्वकं गुहस्य स्थापनं वक्ष्यामीति प्रतिज्ञा । ततः पुरादौ, शिवधाम्नि, पर्वतादिषु च कुमारालय इष्ट इत्युक्त्वा तदालयनिर्माणविधिर्निरूप्यते । तत्र दिग्देवताकल्पनविषये बहवो विकल्पा अभिधीयन्ते । कुमारः पूर्वास्यः पश्चिमास्यो दक्षिणोत्तरमुखस्तु वा परिवारामरैर्युक्तः स्यादिति निगद्यते । ततः परिवारा निरूप्यन्ते । तत्र प्रथमं यक्षेन्द्राद्यानष्ट नामतो निर्दिश्य तेषां लक्षणं च प्रतिपाद्यते पूर्वादीशान्तदिक्षु क्रमेण परिवारत्वेन स्थाप्या इत्युच्यते । ततः शकुन्याद्या अष्ट स्त्रीदेवता नामतो निर्दिश्यन्ते । ततः षण्मुखाद्यानष्ट नामतो निर्दिश्य तेषां लक्षणं च निरूप्यैते गुहस्य मूर्तिपा भवन्ति । एते वा पूर्वादितः परितः स्थापनीया इत्युच्यते । अथवेन्द्रादीनष्ट दिक्पालान् तदर्थमष्ट पीठानि वा स्थापयेदित्युच्यते । एवं परिवारा मूर्तिपाश्च प्रतिपादिताः । ततो गुहस्य मयूरं गजं वाग्रतो वाहनत्वेन कल्पयेदित्युच्यते । ततो विघ्नेशं क्षेत्रपं भानुं महापीठं बलिपीठं च गुहालये स्थापयेत् । सर्वोक्तान्परिवारान्वा कल्पयेदिति विकल्पश्च प्रदर्श्यते । बलिपीठदलेष्विन्द्रादीन्मध्ये महेश्वरांश्च विन्यसेदित्युच्यते । ततो जयविजयाख्यौ द्वौ द्वारपौ दक्षिणे वामे च कल्पयेदित्युक्त्वा तयोर्लक्षणं च निरूप्यते । तत ईशाने स्कन्दचण्डं शाकल्यसंज्ञकं स्थापयेदित्युक्त्वा तस्य लक्षणं च सम्यगभिधीयते । ततः शिलादिभिर्द्रव्यैः प्रतिमालक्षणोदितैर्गर्भगेहमानतो द्वारमानतः स्तम्भमानतो वा स्कन्दं कल्पयेदित्युक्त्वा पञ्चविधाः स्कन्दाः सलक्षणं प्रतिपाद्यन्ते । तत्र द्विभुजो द्विनेत्रः सव्ये पद्मधृग् लम्बितवामकरो बालरूपी



ग्रामादिषु स्थाप्य इति प्रथमः स्कन्दो निरूप्यते । ततो द्विहस्तः सशिखो यज्ञसूत्राढ्यो दण्डधृक्सव्यपाणिः कट्यर्पितापरकरः कौपीनधारी ज्ञानदः स्कन्दः पर्वतेषु वनादिषु च स्थापनीय इति द्वितीयः स्कन्दोऽभिधीयते । ततश्चतुर्भुजस्त्रिनेत्रोऽक्षशक्तिकरद्वयो वरदाभयकरद्वयः शक्तिद्वययुतोऽथवैकशक्तियुतो वा पुरे स्थाप्य इति तृतीयः स्कन्दः कथ्यते । अत्र गजा गजवल्लीति शक्त्योर्नाम निर्दिश्योभयोरपि लक्षणं च सम्यक्प्रतिपाद्यते । ततः षडाननः षड्द्वादशबाहुरष्टादशनेत्रेक्षणान्वितः षट्कण्ठस्त्वेककण्ठो वा बहुभिर्भूषणैरन्वितः शक्ति–अभय–असि–अक्षमाला–कुक्कुट–खेटकाख्यैः षड्भिरायुधैः समन्वितोऽभिवृद्धये राजधान्यां स्थापनीय इति चतुर्थः स्कन्दो निरूप्यते । ततो रक्ताम्बरधरो बालचन्द्रसमप्रभः करण्डमकुटोपेतो नेत्रत्रयसमन्वितो, दक्षिणकरेषु षट्सु शक्ति - मुसल - खड्ग - चक्र - पाशाभयान्, वामकरेषु षट्सु वज्र - कार्मुक - खेटक - मयूरध्वज - अङ्कुशवरदान् दधत्, सोपवीतः मयूरस्थः शक्तिद्वयसमायुतो ग्रामादौ स्थाप्य इति पञ्चमः स्कन्दो वर्ण्यते । एवं पञ्चविधस्कन्दमूर्तीनां लक्षणं प्रतिपाद्यते । स्कन्दस्य मूलमन्त्रः, तस्मिन्मन्त्रेऽङ्गकल्पनप्रकारः, स्कन्दगायत्रीमन्त्रः, गजागजवल्ल्योः शक्त्योर्मन्त्राश्च प्रतिपाद्यन्ते । ततः प्रतिष्ठाविधिरभिधीयते । तत्र प्रथमं पूर्वोदिते शुभे कालेऽङ्कुरार्पणं कृत्वा देवबिम्बे पञ्चरत्नानि विन्यसेत् । देव्योः नवरत्नमेव वा विन्यसेदिति रत्नन्यासविधिः सूच्यते । ततो नेत्रोन्मीलनविधिः समन्त्रकं निरूप्यते । तत्र यदि स्कन्दो देवीयुतस्तदा तस्याश्च पृथङ्नेत्रोन्मीलनं कर्तव्यमिति सूच्यते । ततः पूर्ववद् बेरशुद्धिं प्रकल्प्य ग्रामादीनां प्रदक्षिणं विधाय जले स्कन्दं कूर्चसमन्वितमधिवासयेत् । परित इन्द्राद्यधिष्ठितानष्ट कलशान्विन्यसेदिति जलाधिवासान्ताः क्रिया निरूप्यन्ते । ततो यागमण्डपविधिः प्रतिपाद्यते । ततो मण्डपे तक्षणोद्वासनविप्रभुक्तिगोमयालेपनपुण्याहप्रोक्षणवास्तुपूजावास्तुहोमान् विधाय तत्र स्थण्डिलं प्रकल्प्य तस्मिन्व्याघ्रचर्मजाद्यैर्वास्त्रैस्तु वा शयनं कल्पयेदित्युच्यते । ततो जलात् स्कन्दं मण्डपमानीय तस्य स्नपनेन शुद्धिं कृत्वा गन्धपुष्पादिनाभ्यर्च्य कौतुकं बन्धयित्वा स्कन्दं प्राक्शिरस्कं शयने शाययेत् । ततो वस्त्रैरावेष्ट्य गन्धादिभिर्विधिवत् पूजयेदिति शयनाधिवासविधिः प्रतिपाद्यते । ततः कुम्भाधिवासविधिः कथ्यते । तत्र स्कन्दशिरःप्रदेशे वस्त्रादिसंयुतं कुम्भं विन्यस्य तस्मिन्स्कन्दं पूजयेत् । यदि स्कन्दो देवीयुतस्तदा वर्धनीं विन्यस्य तस्यां देवीं पूजयेत् । परितोऽष्ट घटान्विन्यस्य तेषु गुहविद्येश्वरान्संपूजयेत् । ततस्तत्त्वमूर्त्यादिविन्यासप्रकारो निरूप्यते । तत्र धरादयो मूर्तयः, लोकपाला मूर्तीश्वरा मताः । अथवा प्रागुक्ताः षण्मुखाद्या वा मूर्तीशा इति मूर्तिमूर्तीश्वरा निरूप्यन्ते । एवं कुम्भाधिवासविधिः प्रतिपाद्यते । ततो गुरुर्मूर्तिपैर्युक्तो होमं समाचरेदित्युक्त्वा होमविधिर्द्रव्यनिर्देशपुरःसरं समन्त्रकं प्रोच्यते । होमकाले चतुर्दिक्षु वेदाध्ययनं कोणेष्वस्त्रमन्त्रजपं च कारयेदित्युच्यते । ततः प्रभाते संशुद्धो देशिको मूर्तिपैः सह देवकुम्भाग्नीन् संपूज्य प्रायश्चित्तहोमं विधाय पूर्णाहुतिं दत्त्वा धाम प्रविश्य सुमुहूर्ते सुलग्ने रत्नधान्यादिगर्भितां ब्रह्मशिलां विन्यस्य तस्यां मूलमुच्चरन् षण्मुखं द्वारस्य संमुखं स्थापयेत् । देवाग्रे घटान्विन्यस्य मन्त्रन्यासं समाचरेदित्युक्त्वा मन्त्रन्यासविधिरभिधीयते । तत्र यदि देवी स्यात् तस्यां वर्धन्या बीजमादाय विन्यसेदिति सूच्यते । ततः कुम्भाद्भिः षण्मुखमभिषेचयेदिति कुम्भाभिषेकविधिः सूच्यते । ततः प्रतिष्ठान्ते स्नपनं नैवेद्यं च कारयेत् । चलबिम्बविषये उत्सवं समाचरेत् । गुरुं मूर्तिपांश्च वस्त्रादिभिः संपूज्य तेभ्यो दक्षिणां दापयेदिति प्रतिष्ठाविधिर्निरूप्यते । अन्ते च प्रतिष्ठाकर्तुः फलानि प्रतिपाद्यन्ते । ततो नित्यार्चनविधिः प्रतिपाद्यते । तत्र कृतनित्यक्रियस्य देशिकस्य धामप्रवेशः, द्वारद्वारपपूजनं, भूतशुद्धिरन्तर्यागः, स्थानशुद्धिर्द्रव्यशुद्धिर्मन्त्रशुद्धिर्बिम्बशुद्धिरित्येताः क्रिया निरूप्यन्ते । तत आसनकल्पनप्रकारो मूर्तिकल्पनप्रकार आवाहनादिदशसंस्कारनिर्वर्तनप्रकार अभिषेकप्रकारो गन्धपुष्पधूपदीपनैवेद्याद्युपचारविधानप्रकाराश्च वर्ण्यन्ते । तत आवरणार्चनप्रकारो निरूप्यते । तत्र गर्भावरणमूर्त्यावरणदिक्पालावरणतदस्त्रावरणानि चत्वारि पूज्यत्वेन निर्दिश्यन्ते । त्रिभिर्वा द्वाभ्यामेकेन वावरणेन युक्तं गुहं पूजयेदिति विकल्पः सूच्यते । ततो भूयोऽपि धूपदीपप्रदानजपनिवेदनादि कर्तव्यमिति सूच्यते । ततो नित्याग्निकार्यविधिः प्रदर्श्यते । ततो नृत्तविधिश्च सूच्यते । एवं नित्यार्चनप्रकारः संक्षेपेण प्रदर्शितः । तत उत्सवविधिश्च लेशतः प्रतिपाद्यते । तत्रैकाहाद्युत्सवो नवाहान्तोत्सवः संवत्सरोत्सवश्च कर्तव्या इति

सूच्यन्ते । ध्वजे मयूरमालिख्य ध्वजारोहणमाचरेदित्युच्यते । अङ्कुरार्पणपूर्वं भेरीताडनपूर्वकं ध्वजारोहणपूर्वं वा उत्सवं समाचरेदित्युच्यते । शकुन्याद्या अष्ट स्त्रीदेवता नामतो निर्दिश्यन्ते । तथा सेनान्याद्याः षट्कुमाराश्च नामतो निर्दिश्यन्ते । एते शकुन्यादिकुमारान्ता उत्सवदिनानामधिपा इत्युच्यते । उत्सवे वज्ररूपमस्त्रं भवेदित्युक्त्वा तस्य लक्षणं निरूप्यते । एवं चतुःषष्टितमपटलार्थसंग्रहः ।

पञ्चषष्टितमे पटले चण्डेशस्थापनविधिः कथ्यते । तत्र प्रथमं लक्षणकथनपूर्वकं चण्डेशस्थापनं वक्ष्यत इति प्रतिज्ञा । ततश्चण्डेशस्थापने स्वतन्त्रं पराङ्गं चेति द्विविधं भवेत् । पुरादौ मध्यमे बाह्यदिक्षु चण्डेशस्य स्वतन्त्रालयः कर्तव्यः । शिवधाम्नि त्वीशाने सौम्ये वान्तर्मण्डलदेशेऽन्तर्हारायां वेष्टलाके पराङ्गालयश्चण्डेशस्य कल्पनीय इत्युच्यते । ततश्चण्डेशालय-कल्पनप्रकारस्तत्र द्विदेवतानिर्माणप्रकारश्च कथ्येते । तत्र बिम्बं पराङ्गं चेद्दक्षिणद्वारसंयुक्तं धाम भवेत् । स्वतन्त्रतया स्थापने प्रासादो दक्षपूर्वपश्चिमदिङ्मुखो भवेदित्युच्यते । स्वतन्त्रालयः प्राकारमण्डपोपेतः परितः परिवारसमायुक्तश्च स्यादित्युच्यते । रुद्रभक्तादीनष्ट नामतो निर्दिश्य, तेषां लक्षणं च प्रतिपाद्येते परिवारा इत्युच्यते । अथवेन्द्रादीनष्टलोकपालान्वा तदर्थं पीठानि वा परिवारत्वेन स्थापयेदित्युच्यते । ततश्चण्डेशालये पूर्वतो वृषभं बलिपीठादिमहापीठान्तं च पूर्ववत्कल्पयेदित्युच्यते । चण्डानुगश्चण्डमान्य इति द्वौ द्वारपौ सलक्षणं प्रतिपाद्येते । अथवा द्वारपौ नेष्टाविति विकल्पश्चोच्यते । ततश्चण्डेशालये विघ्नशक्षेत्रेशभानुभिः सह देवोक्तपरिवारान्वा कुर्यादिति परिवारविषये विकल्पान्तरं सूच्यते । ततश्चण्डेशः शिलादिभिर्द्रव्यैः प्रतिमालक्षणोक्तमानेन कर्तव्य इत्युच्यते । ततश्चण्डेशमूर्तिलक्षणं प्रतिपाद्यते । तत्र चतुर्बाहुत्वेन द्विबाहुत्वेन च चण्डेशो निरूप्यते । उभयप्रकारेऽपि बहवो भेदा वर्णिताः । अन्ते चण्डनाथो देव्या सहितो वियुक्तो वा भवेदित्युक्त्वा धर्मनीत्याख्या-यास्तस्या देव्या लक्षणं प्रतिपाद्यते । ततश्चण्डेशासनमन्त्रो मूर्तिमन्त्रो मूलमन्त्रश्च निरूप्यन्ते । ततः प्रतिष्ठाविधिरभिधीयते । तत्राङ्कुरार्पणपूर्वकं प्रतिष्ठा कर्तव्या । कालश्च पूर्ववदेवोक्तः । रत्नन्यासश्च पूर्वोक्तवद्विधेयः । सौवर्णबेरे रत्नादिविन्यासो नात्र कथ्यत इति रत्नन्यासविधिः सूच्यते । ततो नेत्रमोक्षणविधिरतीव संक्षेपेण प्रतिपाद्यते । ततो बेरशुद्धिं पुरादेः प्रदक्षिणं च समाचरेत् । इन्द्राद्यधिष्ठिताष्टघटावृतं देवं तोयेऽधिवासयेदिति जलाधिवासान्ताः क्रिया निर्दिश्यन्ते । ततो यागार्थं कुण्ड-वेदिकासहितमण्डपकल्पनप्रकारो लेशतो निरूप्यते । ततो मण्डपे शिल्पिनमुद्वास्य शिवभक्तान् भोजयेत् । पुण्याहप्रोक्षणं कृत्वा वास्तुहोमं समाचरेदित्युच्यते । ततो जलादानीय चण्डेशं प्राग्वत्स्नपनेन शुद्धिं कृत्वा कौतुकं बन्धयित्वा, मण्डपे वेद्यामण्डजाद्यै-रनुक्रमाच्छयनं संकल्प्य तत्र चण्डेशं शाययेत् । वासोभ्यां वेष्टयेदिति शयनाधिवासविधिरभिधीयते । ततः कुम्भाधिवासविधिः प्रतिपाद्यते । तत्र चण्डेशोत्तमाङ्गदेशे सूत्रकूर्चाम्बरान्वितं सहेमटङ्कं तोयाढ्यं सपल्लवं घटं विन्यसेत् । ततस्तत्र विधानाष्ट-घटान्परितः स्थापयेत् । चण्डेशो देवीयुक्तश्चेच्चण्डेशकुम्भोत्तरे वर्धनीं विन्यसेत् । पूर्वोक्तरूपध्यानपुरःसरं कुम्भान् पूजयेदित्युक्त्वा चण्डेशकुम्भपूजाप्रकारः समन्त्रकं संक्षेपेण निरूप्यते । ततः परितः स्थितेषु कुम्भेषु लोकपालान् चण्डेशमूर्त्यष्टकं वा गन्धपुष्पा-दिभिश्चेष्ट्वा तत्तन्मूर्त्यादिकं न्यसेदित्युक्त्वा तत्तन्मूर्त्यादिन्यासप्रकारो निरूप्यते । एवं कुम्भाधिवासविधिरभिहितः । ततो मूर्तिभृद्भिः सह गुरुर्होमं समाचरेदित्युक्त्वा द्रव्यनिरूपणपूर्वकं होमविधिर्निरूप्यते । ततः प्रभाते शुद्धो देशिको मूर्तिपैः सह चण्डेशं कुम्भानग्नींश्च संपूज्य प्रायश्चित्तहोमं पूर्णाहुतिं च कृत्वा यजमानेन समूर्तिपो गुरुर्वस्त्रहेमाङ्गुलीयाद्यैः संपूजितः संप्राप्त-दक्षिणो धाम्नि पूर्वमेव प्रतिष्ठितायां ब्रह्मशिलायां सुमुहूर्ते चण्डेशं प्रतिष्ठाप्य देवाग्रे स्थण्डिले विन्यस्तेभ्यः कुम्भेभ्यो मन्त्रन्यासं समाचरेत् । तत्तत्कुम्भस्थतोयैर्यथाविधि चण्डेशबिम्बमभिषेचयेत् । तदन्ते स्नपनं भूरि नैवेद्यं कुर्यात् । चलं चेद्बिम्बमुत्सवं समाचरेत् । यदि देवीयुक्तश्चण्डेशस्तदा तस्याश्च स्थापनं कुर्यादिति सूच्यते । चण्डेशप्रतिष्ठेयं बालस्थानान्विता न वा भवेदिति सूच्यते । एवं प्रतिष्ठाविधिमभिधाय प्रतिष्ठायाः फलश्रुतिर्विशिष्य प्रदर्श्यते । ततश्चण्डेशनित्यार्चनविधिः कथ्यते । तत्र देशिकः स्नानाद्यं पूर्ववत्कृत्वा सकलीकृतविग्रहः सामान्यार्घ्यं संपाद्य कृतद्वारद्वारपपूजन आलयं प्रविश्य भूतशुद्धिमन्तर्यागं च निर्वर्त्य



भूतशुद्धिं द्रव्यशुद्धिं तथा मन्त्रशुद्धिं च समाचरेदित्युक्त्वा स्थानद्रव्यमन्त्रशुद्धिविधानप्रकारो निरूप्यते । ततो बिम्बशुद्धिविधिः अभिधीयते । तत्र चण्डेशगायत्रीमन्त्रोऽभिधीयते । तत आसनकल्पनमूर्तिकल्पनावाहनादिसंस्कारविधानप्रकाराः संक्षेपेण निरूप्यन्ते । ततोऽभिषेकविधिः सूच्यते । ततो वस्त्रगन्धपुष्पधूपदीपदानप्रकारो वर्ण्यते । अथावरणार्चनविधिरभिधीयते । तत्र हृदयादिमन्त्रान् इन्द्रादीन् लोकपालान् चण्डनाथस्य परितः पूजयेदिति सूच्यते । ततो विध्युक्तं नैवेद्यं ताम्बूलसंयुतं दद्यादित्युच्यते । तत्र नैवेद्यसमर्पणे चण्डेशविषये विशेषः सूच्यते । ततो जपं निवेद्य परिवारबलिं कुर्यात् । विभवे सति होमं कुर्यादिति होमविधिः अभिधीयते । ततो नित्योत्सवविधिर्निरूप्यते । ततः प्रत्यहमादराच्चण्डेशमष्टकालेष्विष्टकालेषु संपूजयेदित्युच्यते । ततः चण्डेशस्य नैमित्तिकपूजायां विशेषविधिः प्रतिपाद्यते । अन्ते पूजाविधानमिदमात्मार्थे परार्थे च सामान्यमिति सूच्यते । ततो नित्य-पूजायाः फलानि विशिष्य प्रदर्श्यन्ते । तत इष्टसिद्ध्ये स्नपनेन समन्वितं विशेषपूजनं कुर्यादित्यभिधाय पञ्चकलशनवकलशपञ्च-विंशतिकलशपञ्चाशत्कलशशतकलशस्नपनविषये देवतान्यासविधिरुच्यते । ततो महोत्सवं दमनारोहं पवित्रारोहणं कृत्तिकादीपावलिं शिवरात्रिं मासोत्सवं नवनैवेद्यविधिं च चण्डेशविषये समाचरेदिति सूच्यते । तत्रोत्सवे ध्वजे टङ्कं वृषं वा केवलं लिखेदिति सूच्यते । एवं शिवोत्सवेऽपि चण्डनाथायोत्सवो विधेय इत्युक्त्वा ध्वजहोमबलिक्रिया विना केवलयात्रामेव समाचरेदिति च सूच्यते । तत उत्सवविषये प्रतिमाकरणप्रकारोऽपि सूच्यते । ततः प्रतिष्ठोत्सवकर्मादावनुक्तं यत्कर्म तत्सर्वं पूर्वोक्तवत् संग्राह्यम् । किं तु तत्सर्वं चण्डेशाणुसमन्वितं कर्तव्यमित्यपि सूच्यते । एवं पञ्चषष्टितमपटलार्थसंग्रहः ।

षट्षष्टितमे पटले शिवभक्तप्रतिष्ठाविधिर्निगद्यते । तत्र प्रथमं भोगमोक्षदां शिवभक्तप्रतिष्ठां वक्ष्यामीति प्रतिज्ञा । ततो ब्राह्मणक्षत्रियवैश्यशूद्राः, अन्तरालजाः, एषां स्त्रियः, गुरवः, अभिषिक्तो नृप इत्येतेषु ये शिवभक्तिसमोपेता विलसन्ति, तेषां मृतानां जीवतां वा प्रतिकृतिं प्रतिष्ठाप्य समर्चयेदित्युच्यते । ततः शैवाः पाशुपता महाव्रतधरा लकुला भैरवाद्याश्च शिवभक्ता येन मार्गेण दीक्षिता भवन्ति, तेषां तेन मार्गेण स्थापनादि विधेयम् । किं तु सर्वेषां शैवसिद्धान्तमार्गेण स्थापनं विहितमित्युच्यते । ततो बिम्बानां स्थापनविषये स्वप्रधानत्वेन पराङ्गत्वेन च स्थापनमिति द्वैविध्यमस्तीत्युच्यते । ततो ग्रामादौ नद्यादितीरे पुष्करिण्यास्तीरे वा वने वोपवने पर्वते वान्यत्र मनोरमे स्थाने वा स्वप्रधानस्यालयः कल्पनीय इत्युच्यते । ततो शिवालयेऽन्तःशालादौ मन्दिरं प्रकल्प्य तत्र परिवारसमोपेतं यत्स्थाप्यते तदपि स्वप्रधानं भवति । देवालयादौ सर्वत्र मालिका-मण्डपादिषु परिवारविहीनं यत्स्थाप्यते तत् पराङ्गं भवतीति स्वप्रधानपराङ्गयोर्लक्षणं प्रतिपाद्यते । ततो विमानमण्डपादिकल्पन-प्रकारो निरूप्यते । ततः पूर्वनिर्दिष्टशिवभक्तानां स्थापनविषये शिवलिङ्गं वा, शिवस्य प्रतिमा वा, स्कन्दनन्द्याद्याकृतिर्वा, स्वस्वप्रतिकृतिर्वा शिलाद्यैः प्रतिमालक्षणोक्तैर्वस्तुभिः शुभायादिसंयुक्तं कल्पनीया इत्युच्यते । ततो लिङ्गविषये प्रतिमाविषये च मानविधिः प्रतिमालक्षणविधिरायादिविधिश्च प्रतिपाद्यन्ते । तत्र पुरुषाणां स्त्रीणां च विषये तथा राज्ञां विषये च विशेषो निरूप्यते । ततः प्रतिष्ठाविधिः कथ्यते । तत्र प्रतिष्ठार्थं शुभे कालेऽङ्कुरार्पणं विधाय रत्नन्यासं कुर्यादिति रत्नन्यासविधिः सूच्यते । ततो नेत्रोन्मीलनविधिः समन्त्रकं निरूप्यते । ततो बेरशुद्धिं कृत्वा सर्वालंकारसंयुक्तं ग्रामादिप्रदक्षिणं विधाय, शोभायात्रापटान्वितं बिम्बं जलेऽधिवासयेदिति जलाधिवासान्ताः क्रिया निर्दिश्यन्ते । ततो यागार्थं मण्डपकल्पनप्रकारो वर्ण्यते । ततः शिल्पिविसर्जनविप्रभोजनपुण्याहप्रोक्षणादिकं कृत्वा वेद्यूर्ध्वे शालिभिः स्थण्डिलं निर्माय तत्र चर्माद्यैः पञ्चशयनं कल्पयेत् । ततो जलाद्बिम्बं स्नानवेदीं समानीय, प्राग्वच्छुद्धिं कृत्वा, वस्त्रैरावेष्ट्य, गन्धमाल्याद्यैः संभूष्य, बद्धप्रतिसरं बेरं शयनोपरि शाययेदित्युच्यते । अत्र प्राच्यामुपधानं विन्यस्य तत्र बिम्बशिरो यथा भवेत्तथा बेरं शाययेदिति सूच्यते । एवं शयनाधिवास-विधिरभिधीयते । ततः कुम्भाधिवासविधिः कथ्यते । तत्र बिम्बशिरस उत्तरे भागे प्रधानकुम्भं न्यसेत् । अभितोऽष्टौ वस्त्रहेमादिभूषितान् फलपल्लवसंयुतान्कुम्भांश्च विन्यसेत् । ततः कुम्भमध्ये मन्त्रान्विन्यसेत् । तद्विधानमिहोच्यत इत्युक्त्वा न्यसनीया मन्त्राः प्रदर्श्यन्ते । तत्रात्ममन्त्रो हंसमन्त्रो वा न्यस्तव्यः । स्त्रीणां विषये ह्रींकारो न्यसनीय इत्यादिविषया उच्यन्ते ।

ततो यदि पत्नीसहितस्य शिवभक्तस्य प्रतिष्ठा क्रियते तदा तत्र भार्यार्थं प्रधानघटस्य सौम्यभागे करकं न्यसेत् । यदि पत्नीद्वयं भवेत् तदा याम्येऽप्यपरां वर्धनीं न्यसेत् । पत्न्यो बह्व्यश्चेत् पार्श्वयोर्द्वयोर्बहवः करका न्यस्तव्या इत्युच्यते । ततः स्त्रीप्रतिष्ठासु सर्वासु वर्धन्यः स्थापनीया इत्युच्यते । ततः पुरुषविषये परिवारघटेषु पृथिव्यादीनि भूतानि मनोऽहंकारबुद्धयोऽष्टौ वसवो वा लोकपाला वा पूजनीया इत्युच्यते । स्त्रीणां विषयेऽष्टदिग्देवताः परिवारघटेषु पूज्या इत्युच्यते । ततः पुरुषाणां स्त्रीणां च विषये तत्त्वतत्त्वेश्वरन्यासप्रकारो, मूर्तिमूर्तीश्वरन्यासप्रकारो, मातृकान्यासप्रकारो जीवन्यासप्रकारश्च प्रतिपाद्यन्ते । ततो वस्त्रेणाच्छाद्य गन्धपुष्पाद्यैः पूजयेदिति कुम्भाधिवासविधिर्निगद्यते । ततः कुण्डान्तिकं गत्वा प्राग्वत्कुण्डसंस्कारान् शिवाग्न्याधानं च विधाय होमकर्म समाचरेदित्युक्त्वा होमविधिर्द्रव्यप्रदर्शनपूर्वकं विशिष्य प्रतिपाद्यते । ततो रात्रिशेष व्यपेते प्रभाते गुरुः स्नात्वा संध्यावन्दनं समाप्य कृतनित्यक्रियः संप्राप्तदक्षिणः पञ्चाङ्गभूषणोपेतस्तद्वत्संप्राप्तदक्षिणैर्मूर्तिधारकादिभिः संयुतो द्वाराद्वाराधिपानिष्ट्वा यथाक्रमं बिम्बकुम्भाग्नीन् संपूज्य शयनाद्बिम्बमुत्थाप्य युक्तितो यानमारोप्य प्रासादं नयेत् । तत्र स्थापनकाले रत्नन्यासविधानपूर्वकं बिम्बं स्थापयेत् । ततो मातृकान्यासं जीवन्यासं च समाचरेदित्युक्त्वा मातृकान्यासविधिर्जीवन्यासविधिश्च सूच्यते । ततः स्वकुम्भतोयैः परितः स्थापितकुम्भतोयैश्च स्नापयेत् । ततो वस्त्रैर्गन्धपुष्पधूपदीपनैवेद्यैरन्यैरुपचारैश्च शिवभक्तं समर्चयेदिति प्रतिमास्थापनविधिः कुम्भाभिषेकविधिश्च निरूप्यते । 'अथवा बिम्बं शयनादुत्थाप्य स्नानश्वभ्रे विन्यस्य मातृकान्यासादिकं कुर्यादिति' पक्षान्तरं च सूच्यते । ततोऽन्ते यथाविभवविस्तरमुत्सवं च कारयेदित्युच्यते । अतोऽत्र चलाचलोभयानुसारेण प्रतिष्ठाविधिरुच्यत इति भाति । ततो नित्यपूजाविधिः प्रतिपाद्यते । तत्रादिशैवकुलोत्पन्नस्य पञ्चगोत्रसंभवस्य देशिकस्य कृतशौचस्नानसंध्यावन्दनादिकस्य धामप्रवेशप्रकारः, द्वारपूजाप्रकारः, भूतशुद्धिस्थानशुद्धिद्रव्यशुद्धिमन्त्रशुद्धिबिम्बशुद्धिप्रकारः, आसनकल्पनमूर्तिकल्पनप्रकारः, जीवन्यासप्रकारः, पाद्याचमनार्घ्यदानविधिः, अभिषेकप्रकारः, वस्त्रदानप्रकार इत्येते विषया संक्षेपेण प्रतिपाद्यन्ते । ततो गन्धपुष्पधूपदीपोपचारैः सह नैवेद्यं सोपदंशं सताम्बूलं च दद्यादित्युच्यते । तत एवं नित्यपूजाविधिः संध्यात्रयेऽथवा संध्याद्वये एकसंध्यायां वा कर्तव्य इति कथ्यते । ततो अयने विषुवे संक्रान्तौ ग्रहणादिषु स्नपनं यथाविधि कर्तव्यमित्युक्त्वोत्तममध्यमाधमभेदेन स्नपनत्रयं वर्ण्यते । तत उत्सवविधिः कथ्यते । तत्र विभवे सति प्रतिमासमुत्सवं कुर्यात् । अथवा भक्तजन्मदिने कर्तुर्जन्मदिने वोत्सवं समाचरेदित्युच्यते । ततः प्रत्यब्दं विवाहेन सह संवत्सरोत्सवः कार्यः । स चोत्सवो नवाहः सप्ताहः पञ्चाहस्त्रिदिनोऽपि वा भवेत् । अथवैकदिनं वापि बलिहोमसमन्वितं ध्वजारोहणपूर्वकमुत्सवं कर्तुरिच्छया कारयेदित्युच्यते । सर्वेषां शिवभक्तानामुत्सवेषु स्वस्वजात्युक्तमङ्गलाष्टकसंयुक्तं वृषभं ध्वजे लेखयेदित्युच्यते । रात्रौ भेरीताडनं कर्तव्यम् । गन्धपुष्पादिसंयुतमिन्द्रादीनां बलिं दद्यादित्युत्सवे कर्तव्यो विशेषः प्रतिपाद्यते । अथोत्सवाचरणप्रकारः क्रमेण निरूप्यते । उत्सवारम्भात्पूर्वदिनरात्रौ यागाद्यधिवासनं कर्तव्यमित्युक्त्वा वेदिकुण्डयुक्तयागशालाविधिरुच्यते । तदर्थमुत्सवार्थं च महतीमल्पां वा भक्तप्रतिमां विधिना संपाद्य बद्धप्रतिसरां तां वेदिमध्ये शाल्यादिभिः स्थण्डिलं निर्माय तत्र स्थापयेत् । प्रतिष्ठोक्तप्रकारेण कुम्भान्स्थापयित्वा प्रत्यहं सायं प्रातर्गुरुस्तत्र देवान्संपूजयेत् । प्रतिष्ठोक्तप्रकारेण होमं समाचरेत् । सायं प्रातः क्षुद्रबिम्बान्वितं बलिं दद्यात् । तदन्ते चोत्सवं सर्वालंकारसंयुक्तं गेयनृत्तादिसयुतं कुर्यात् । परिवेषकर्म समाचरेत् । उत्सवान्तिमदिने चूर्णोत्सवं तीर्थकर्म च विधिवत्समाचरेदित्युत्सवे क्रियाक्रमोऽभिधीयते । तत उत्सवकाले प्रत्यहं मूलबेरस्य विशेषपूजा विधेया । उत्सवान्ते मूलबेरे तथोत्सवबेरे च शुद्ध्यै स्नपनं कर्तव्यमिति सूच्यते । ततोऽशक्तश्चेद्ध्वजारोहणबलिहोमाचरणं विना केवलमुत्सवं वा कुर्यादित्युच्यते । एवमुत्सवविधिः प्रदर्शितः । अन्ते शिवभक्तप्रतिष्ठाकर्तुः फलानि प्रदर्श्यन्ते । एवं षट्षष्टितमपटलार्थसंग्रहः ।



सप्तषष्टितमे पटले विद्यापीठप्रतिष्ठाविधिरुच्यते । तत्र प्रथमं विद्या संस्कृतभाषात्मिका अन्यभाषात्मिकेति द्विविधा भवतीत्युच्यते । ततो विद्यापीठस्थापनयोग्यस्थाननिरूपणं, पुस्तकमानकथनं, पुस्तकनिर्माणयोग्यभूर्जपत्रादिद्रव्यप्रतिपादनं, पुस्तकलेखनप्रकार इत्येते विषयाः कथ्यन्ते । ततः पुस्तकलेखनारम्भे पठनारम्भे च कर्तव्यः पूजाविधिर्निगद्यते । ततः प्रमादतश्च प्रणष्टस्य, अल्पज्ञानसमोपेतैराचार्यैः संशोधितस्य, व्यर्थपदपुनरुक्तिपूर्वापरविरोधस्वसिद्धान्तविरुद्धार्थप्रतिपादनादिदोषयुक्तस्य शिवज्ञानरूपस्य सिद्धान्तशास्त्रस्य संस्कारकरणं, तथा पारमेश्वरविद्यायाः शिवभक्तशिष्येभ्यः सम्यगध्यापनं, शिष्यानुकूल्यतो देशभाषाद्युपायैः शुद्धैः संस्कृतशब्दैः प्राकृतप्रभवैः शब्दैर्लौकिकशब्दैश्च सुलभेन मार्गेण पारमेश्वरविद्यायाः व्याख्यानमित्यादिकं विद्यादानं भवतीत्युक्त्वा विद्यादानफलं बहुधा विशिष्य प्रदर्श्यते । अत्र यथा संपूर्णस्य महात्मनः शिवस्यान्तो न भवति, तद्वद्विद्यादानस्य फलमप्यनन्तमित्युच्यते । शिवज्ञानप्रकाशकः शिववत्पूज्य इत्युच्यते । ततः शिवज्ञानरूपस्य शिवशास्त्रस्य पुस्तके सम्यग् लेखनं यः करोति तस्य फलानि विशिष्य प्रतिपाद्यन्ते । ततः शिवज्ञानरूपस्य शिवशास्त्रस्य श्रवणपठनचिन्तनादीनां फलानि कीर्त्यन्ते । भोजनवस्त्रदानादिभिः शिवज्ञानाभियुक्तानां रक्षितुरपि विद्यादानोक्तफलं संभवेदित्युच्यते । ततो यस्य राज्ये शिवज्ञानरूपशिवशास्त्रव्याख्यानं सम्यक् प्रचलति, स राजा राज्ञामधिपो भवेत् । यस्य राज्ये मन्त्रिस्थाने सैनापत्ये पुरोहितस्थाने सर्वेष्वन्यराज्यकार्येषु च शुद्धशैवो नियुज्यते, तद्राज्याधिपोऽपि राजश्रेष्ठो भवेदित्युच्यते । यो वा सिद्धान्ताविरोधेन वेदवेदाङ्गानां पाशुपतगारुडादितन्त्राणां चार्थनिश्चयं करोति स एव धर्मवेत्ता नेतर इत्युच्यते । यः शुद्धशैवशास्त्रविरोधेन शास्त्रार्थं निश्चिनोति स धर्मबहिष्कृत इत्युच्यते । ततः शुद्धशैवशास्त्रविदाचार्येणैव राज्ञां शान्तिकपौष्टिकादिकर्माचरणं निर्वर्तनीयमिति चोच्यते । एवं बहुप्रकारेण विद्याप्रभावो वर्ण्यते । ततो विद्यापीठप्रतिष्ठाविधिर्निरूप्यते । तत्र विद्यापीठप्रतिष्ठा प्रासादेऽथवा मण्डपे शालायां वा कर्तव्येत्युच्यते । ततो विद्यापीठकल्पनप्रकारोऽभिधीयते । तत्र विद्यापीठं चतुरश्रमायताश्रं वा भवेदित्युच्यते । विद्यापीठं निर्माय तत् पञ्चगव्येन प्रोक्षयेदित्युच्यते । ततो विद्यापीठप्रतिष्ठाविषये अधिवासकुम्भस्थापनतदर्चनप्रकारो होमविधिर्मन्त्रन्यासश्च प्रतिपाद्यते । एवं सप्तषष्टितमपटलार्थसंग्रहः ।

अष्टषष्टितमे पटले दशायुधप्रतिष्ठाविधिः कथ्यते । तत्र प्रथमं लक्षणकथनपूर्वकं प्रतिष्ठा वक्ष्यत इति प्रतिज्ञा । ततो वज्रादिदशायुधा नामतो निर्दिश्यन्ते । अत्राङ्कुशं हित्वा तत्स्थाने ध्वजं वा कल्पयेदिति विकल्पः सूच्यते । ततः प्रतिमालक्षणोक्तमानेन एकवक्त्रं द्विनेत्रं करण्डमकुटोपेतं द्विबाहुं कृताञ्जलिपुटोपेतं सर्वलक्षणसंयुक्तं मूर्तिरूपं कुर्यादित्युच्ते । ततो दशायुधेषु शक्तिगदे स्त्रीरूपिण्यौ, चक्रपद्मे नपुंसके, अन्ये पुमांस इति सूच्यते । ततो वज्राद्यायुधान्यस्त्रवर्गोक्तमार्गेण निर्माय तन्मूर्तिमूर्धनि मकुटोपर्यथवा हस्तयोरन्तरे दक्षिणकरेऽपि वा विन्यसेदिति दशायुधमूर्तिलक्षणमभिधीयते । ततः प्रतिष्ठाविधिः कथ्यते । तत्र प्रथमं रत्नन्यासं कुर्यादिति रत्नन्यासविधिः सूच्यते । ततो नेत्रोन्मलनविधिर्लेशतो निरूप्यते । ततो ग्रामप्रदक्षिणं नीत्वा जलमध्ये शाययेदिति जलाधिवासविधिः सूच्यते । ततो यागार्थं मण्डपनिर्माणविधिरुच्यते । तत्र चतुर्द्वारसमन्वितमेकवेदिकोपेतं मण्डपमेकं वा, पृथग्वेदिकोपेतं दशमण्डपं वा कुर्यादित्युक्त्वोभयत्रापि कुण्डकल्पनप्रकारो निरूप्यते । ततो मण्डपे विप्रभोजनं पुण्याहप्रोक्षणं च विधाय प्रोक्षणान्ते वास्तुहोमं कुर्यादित्युक्त्वा तत्र मण्डपानुसारेण वास्तुहोमः प्रतिमण्डपं वा कर्तव्य इति विकल्प उच्यते । ततो मण्डपे स्थण्डिलं प्रकल्प्य तत्र वस्त्रैरनेकैरेकेन वा शयनं विधाय प्रणवेनासनं कृत्वा दर्भैः पुष्पैः परिस्तरेत् । जलादानीतान्सुस्नातान् बिम्बान् कृतकौतुकान्शयने प्रदक्षिणशिरोऽन्वितं शाययेत् । वस्त्रैराच्छादयेदिति शयनाधिवासविधिरुच्यते । ततः कुम्भाधिवासविधिर्निरूप्यते । अत्र दशायुधानां प्रत्येकमेकं कुम्भं तं परितोऽष्ट घटान् संस्थाप्य स्थापयेत् । मध्यकुम्भे स्वस्ववर्णैर्मूलमन्त्रं दिक्षु ब्रह्माणि विदिक्ष्वङ्गानि च विन्यस्य पूजयेदिति कुम्भाधिवासविधिः प्रदर्शितः । ततो द्रव्यनिर्देशपूर्वकं होमविधिः समन्त्रकं संक्षेपेण प्रतिपाद्यते । ततः प्रातः पूर्णाहुतिं दत्त्वा मन्त्रन्यासं कुर्यात् । गन्धपुष्पाद्यैर्नैवेद्यसहितं पूजयेत् । ततः स्नपनमुत्सवं च कारयेद्वा न वेति विकल्पेनोच्यते । एवं स्थापनविधिरतीव संक्षेपेण प्रतिपादितः । अन्ते दशायुधप्रतिष्ठाकर्ता सर्वारिष्टैः प्रमुच्यत इति फलं प्रदर्श्यते । एवमष्टषष्टितमपटलार्थसंग्रहः ।

एकोनसप्ततितमे पटले त्रिशूलस्थापनविधिरुच्यते । तत्र प्रथमं लक्षणकथनपूर्वकं त्रिशूलस्थापनं वक्ष्यामीति प्रतिज्ञा । ततो हैमराजतताम्रायसैनाश्मादिभिर्वा त्रिशूलं कुर्यादित्युच्यते । अत्र त्रिशूललक्षणकथनानन्तरं शूलार्थं ये वृक्षाः पूर्वमुक्तास्तेऽत्र ग्राह्या इति वृक्षैरपि त्रिशूलः कार्य इति सूच्यते । ततो गर्भगेहमानेन त्रिशूलस्य मानं प्रदर्श्य द्वारोत्सेधमानेन स्तम्भोत्सेधमानेन वा कर्तव्य इति च सूच्यते । पुनर्हस्तमानेन त्रिशूलकल्पनप्रकारश्च कथ्यते । ततस्त्रिशूलविषये कौलिकं यौगिकमिति द्विविधं भवतीत्युक्त्वा तयोर्लक्षणमुच्यते । तत्र त्रिशूलविषये प्रथमं मध्यपत्रस्य पार्श्वपत्रयोश्च निर्माणप्रकारः प्रतिपाद्यते । पत्रमूले पादकल्पनं, पादमूले पालिकाकल्पनं, हीरिकाकल्पनं, दण्डकल्पनमित्यादित्रिशूलावयवकल्पनप्रकारो निरूप्यते । ततो मध्यपत्रस्य मध्येऽम्बुजं लिखेत् । अथवा मध्यपत्रस्य मूले देव्या युक्तं वियुक्तं वा वृषारूढमूर्तिमथवा वृषमुखं तद्विहीनं वा देवान्तरं कल्पयेत् । अथवा कोकेशांस्तदलानि वेष्टप्रमाणतः कल्पयेदित्युच्यते । एवं मध्यपत्रविषये देवताकल्पनमभिधायाथवा पालिकाया विदिक्षु अश्वत्थपत्रवन्मालाचतुष्टयं कुर्यादित्युच्यते । अत्रैतद्विहीनं वा स्यादिति विकल्पश्च सूच्यते । ततः पालिकोपरि कोणेषु वृषेश्वरं वा कारयेदिति सूच्यते । ततः शैलजमृण्मयत्रिशूलविषये कश्चिद्विशेषोऽस्तीत्युक्त्वा स विशेषः प्रतिपाद्यते । एवं त्रिशूललक्षणं प्रतिपाद्य त्रिशूलं प्रासादे वृषाग्रे वृषपृष्ठे बलिपीठाग्रे वा स्थापयेदित्युक्त्वा त्रिशूलप्रतिष्ठाविधिर्निरूप्यते । तत्र पूर्वप्रोक्तं शुभनक्षत्रवारादियुक्तं कालं निरीक्ष्य अङ्कुरार्पणं कृत्वा त्रिशूलस्योर्ध्वाधःखण्डयोर्दण्डेन सहाष्टबन्धाद्यैः सम्यक् संधानं कुर्यात् । रत्नन्यासो न कर्तव्यः, तथा नयनोन्मीलनमपि न विधेयमित्युच्यते । अचलस्थापनं चेद्रत्नन्यासं कुर्यादिति सूच्यते । ततोऽत्र प्रतिमादिकं विद्यते चेत्तस्य नयनोन्मीलनं विधाय मृदाद्यैः संशुद्धिं कृत्वा पुरादिप्रदक्षिणं नीत्वा जलाधिवासनं कारयेदिति जलाधिवासान्ताः क्रिया निर्दिश्यन्ते । ततः पूर्वोक्तवद्यागार्थं मण्डपं कुण्डवेदिकासहितं निर्माय तत्र शिल्पिविसर्जनविप्रभोजनपुण्याहप्रोक्षणवास्तुहोमान् कृत्वा वेद्यां स्थण्डिलं संकल्प्य तण्डुलाद्यैः शयनं कल्पयेत् । ततो जलान्मण्डपमानीतं त्रिशूलादिकं संस्नाप्य त्रिशूलस्य पत्रे त्रिषु पत्रेषु च तथा देवबेरे वृषे च कौतुकं विधिवद्बन्धयित्वा तत्सर्वं शयने प्राक्शिरस्कमूर्ध्ववक्त्रं च शाययेत् । श्वेतरक्ताभ्यां वासोभ्यामस्त्रपुष्पान्वितेनाधिकमाच्छादयेदिति शयनाधिवासविधिरभिधीयते । ततस्त्रिशूलस्य शिरोदेशे वस्त्रहेमादिसंयुतं कुम्भमेकं विन्यस्य तत्र शिवास्त्रं पूजयेदित्युक्त्वा ध्यानार्थं शिवास्त्रस्वरूपवर्णनं प्रतिपाद्यते । ततो यद्यस्ति शूले प्रतिमा तदा शिवकुम्भं वर्धनीं च विन्यसेत् । तथा यद्यस्ति वृषस्तस्यापि कुम्भं विन्यसेत् । परितोऽष्ट कुम्भान्विन्यस्य तेषु वज्रादीनर्चयेत् । तत्त्वमूर्त्यादिविन्यासं कुर्यादित्युक्त्वा त्रिशूलविषये मूर्तिमूर्तीश्वराः प्रतिपाद्यन्ते । ततस्त्रिशूलपत्राद्यङ्गेषु रुद्रादिदेवतान्यासप्रकारो वर्ण्यते । एवं कुम्भाधिवासविधिर्निरूप्यते । ततो द्रव्यनिरूपणपुरःसरं होमविधिरुच्यते । अत्र कुम्भाधिवासविधौ प्रोक्तानां रुद्रादिदेवानां विनियोगः प्रदर्शितः । ततस्तत्कुम्भजलैस्त्रिशूलं स्नापयेदिति कुम्भाभिषेकप्रकारः सूच्यते । ततः स्नपनं भूरि नैवेद्यं समाचरेत् । चक्रं चेदुत्सवं समाचरेदिति च सूच्यते । अनुक्तमत्र सामान्यस्थापनोदितं संग्राह्यमित्युच्यते । ततस्त्रिशूलस्थापनकर्तुः फलानि प्रदर्श्यन्ते । एवमेकोनसप्ततितमपटलार्थसंग्रहः ।

सप्ततितमे पटले सिंहासनप्रतिष्ठाविधिरभिधीयते । तत्र प्रथमं देवादीनां नृपादीनां च सिंहासनविधिमन्येषां महासनानामासनविधिं च वक्ष्यामीति प्रतिज्ञा । ततो देवाः शिवादय इति प्रसिद्धा एव । नृपादिषु 'चक्रवर्ती, अधिराजः, नरेन्द्रः' इति त्रयो विशिष्य परिगणनीया भवन्ति । तत्र चतुःसमुद्रपर्यन्तां भूमिं यः परिपालयति, स चक्रवर्तीति कथ्यते । यः एकराज्यं पालयति, सोऽधिराज इति कीर्त्यते । यो राज्यत्रयं शास्ति, स नरेन्द्र इति भण्यते । पार्ष्णिप्रमुखा अप्यन्ये नृपादयो विलसन्ति । एतेषामासनानि बहूनि सन्तीत्युच्यते । ततः सिंहासनानामुत्सेधे विस्तारे च बहुधा मानं प्रतिपाद्यते । ततो देवानां नृपाणां च सिंहपीठं समचतुरश्रमायतचतुरश्रं वृत्तं वा कुर्यादित्युच्यते । ततः सिंहासने भित्तिकल्पनप्रकारो वर्ण्यते । तत्र उपपीठे पादानामन्तरे पादा भवेयुः । तत्र पादे पादान्तरेऽन्यत्र च सिंहरूपाणि कारयेत् । मकरैर्नक्रैः पत्रैर्नाना-



विचित्रयेदित्युच्यते । तत उपपीठमानं प्रतिपाद्यते । तत उपपीठं स्थावरं जङ्गममित्यथवा चलाचलमिति द्विविधमुदाहृतम् । ...र्दन्तैर्लोहैः सुधया वा कर्तव्यम् । तत्र शैलं नराणां नेष्टं भवति । देवेषु सर्वमपि युक्तं भवेत् । दन्तवृक्षकृतमुपपीठं ... विचित्रयेदित्युच्यते । ततो राज्ञां सिंहासनं श्रेष्ठं भवति, तल्लक्षणमुच्यत इत्युक्त्वा सिंहासनोत्सेधे क्षेपणपङ्कजादि- ...कल्पनप्रकारकथनपूर्वकं भद्रकसौम्यसंज्ञकयोः सिंहासनयोर्द्वयोः स्वरूपं प्रतिपाद्यते । ततो द्विविधस्य सौमद्राख्यस्य ... च सिंहासनस्य स्वरूपप्रतिपादनं संग्रहेण क्रियते । तत एतेषां पञ्चविधानामासनानां च पृष्ठे विचित्रनिर्माणविशेषः ... इत्युक्त्वा तल्लक्षणमभिधीयते । ततः सिंहासने तोरणविधानप्रकारो निरूप्यते । तत्र तोरणपृष्ठे सुवर्णजः कल्पवृक्षः कल्पनीय ... । तत उपपीठविषये पञ्चाङ्ग-अष्टाङ्ग-द्वादशाङ्ग-द्विसप्ताङ्गानामुपपीठानां कल्पनप्रकारोऽभिधीयते । तत आसनानां ...दिविधिर्निरूप्यते । तत आसनार्थं संग्राह्या वृक्षाः कथ्यन्ते । ततो राज्ञां सिंहासनविषये संस्कारविधिरुच्यते । तत्र ... पूर्वोक्तः शुभः कालो ग्राह्य इत्युच्यते । ततः शिल्पिविसर्जनं कृत्वा पुण्याहप्रोक्षणानन्तरं हृन्मन्त्रेण पञ्चगव्य- ... कुशवारिणा च क्षालनं शुद्धोदकेन स्नापनं, पुनर्ब्रह्मपञ्चकोच्चारणसहितं गन्धोदकस्नापनं च कर्तव्यमित्युच्यते । ... स्थण्डिलोर्ध्वे सिंहासनं विन्यस्य वस्त्रैः कुशैश्चाच्छादयेत् । ततः सिंहासनमन्त्रेण गन्धपुष्पधूपैः पूजयेदित्युक्त्वा पूजार्थं ... प्रदर्श्यते । ततस्तस्याग्रे स्थण्डिलं कृत्वा तत्र समिदादिभिर्जुहुयादिति होमविधिः संग्रहेण निरूप्यते । ततः पूर्णाहुतिं ... शान्तिकुम्भाम्भसा सिंहासनमभ्युक्ष्य पुनरपि गन्धाद्यैः पूजयेदित्युच्यते । ततः शुभमुहूर्ते शुभलग्ने स्नातं शुक्लाम्बरधरं मकुटेन ... सर्वाभरणसंयुक्तं छत्रचामरसंयुक्तं राजानं सिंहासनमधिरोपयेदिति संस्कारविधिः प्रदर्श्यते । ततो देवस्य सिंहासनसंस्कारविधौ ...ऽस्तीत्युक्त्वा तद्विषये कुम्भस्थापनविधिर्होमविधिः कुम्भतोयाभिषेकविधिर्विशेषार्चनपूर्वकं देवस्य सिंहासनाधिरोपणप्रकार ... वस्त्रहेमाङ्गुलीयकैः संपूजनं दक्षिणादानमित्येते विषया निरूप्यन्ते । ततो महासनानामन्येषामासनविधिर्निरूप्यते । ...नामासननिर्माणयोग्यद्रव्यप्रदर्शनमासनकल्पनप्रकार इत्यादिविषया निरूप्यन्ते । तत्रासनपादविषये बहवः प्रकारा ...न्ते । फलकासनकूर्मासनयोर्निर्माणप्रकारो विशिष्य प्रदर्शितः । सिंहासनोक्तप्रकारेणात्राप्यादिविधिः संस्कारविधिश्च विधेय इति सूच्यते । एवं सप्ततितमपटलार्थसंग्रहः ।

एकसप्ततितमे पटले रथादिस्थापनविधिरुच्यते । तत्र प्रथमं 'लक्षणपुरःसरं रथादीनां स्नापनं वक्ष्ये' इति प्रतिज्ञा । ततो रथश्चक्रभेदाद् बहुविधो भवति । तत्र त्रिचक्रादिनवचक्रान्ताः सप्त रथभेदाः संभवन्ति । द्विचक्रस्तु शकटाह्वय इति रथभेदस्य शकटस्य च सूचनम् । ततो रथविषये बहिःकरणान्तःकरणानां निर्माणप्रकारस्तेषां संयोजनप्रकारश्च वर्ण्यते । तत्र बहिःकरणनिरूपणे भारः, अक्षोत्तरं, शिलाः, विद्धाः, अक्षः, चक्रम्, उपपीठमित्याद्यवयवा निर्दिष्टाः । बहिःकरणनिरूपणे ...पीठोर्ध्वतोऽधिष्ठानं कल्पनीयम् । अधिष्ठानोर्ध्वतः पादवर्गो विधेयः । पादवर्गोर्ध्वतः प्रस्तरवर्गः कर्तव्य इत्युच्यते । तेषां ...प्रकारश्च वर्ण्यते । तत एवंप्रकारेण निर्मितमाद्यतलं भवति । एततलयुक्त एकतलरथ इत्येकतलरथनिर्माणप्रकारः ...तिपाद्यते । ततो द्वितलाद्यन्वितो रथो भवति वा न वेति विकल्पः सूचितः । ततो द्वितलत्रितलरथादिविषये निर्माणप्रकारः ...पेण प्रतिपादितः । ततोऽनेकतलयुक्तरथविषये कर्तव्यो विशेषप्रकारो निरूप्यते । एवं रथकल्पनप्रकारमभिधाय तद्विषये ...शुभादिपरिज्ञानप्रकारो वर्ण्यते । अन्ते चात्र शकटे शिबिकादौ च शुभे शुभायादिपरिज्ञानं मतमिति सूच्यते ।

ततो रथस्थापनविधिः प्रतिपाद्यते तत्र शिल्पिविसर्जनपूर्वकं विधेयः प्रोक्षणादिसंस्कारः प्रतिपाद्यते । ततः कौतुक- ...नविधिः सूच्यते । ततो रथावयवेषु चक्रादिषु पूजनीयानां भान्वादीनां देवतानां निरूपणम् । ततो ब्रह्मविष्णुरुद्रेश्वरा ...धिपाः, शिखरस्याधिपतिः सदाशिवः, शिवस्तु स्तूपिनायकः, पद्मकुड्मलकाधिपतिरनन्त इत्युच्यते । ततो रथाग्रे स्थण्डिले कुम्भस्थापनविधिरुच्यते । तत्र नव कुम्भान्स्थापयित्वा तत्र मध्यकुम्भे शिवं, पूर्वे भानुम्, अनले इन्दुं, दक्षिणे हरिम्,

निर्ऋतिघटे आधारशक्तिं, वारुणे वृषभं, वायव्येऽनन्तम्, उत्तरकुम्भे धर्मम्, ईशानकुम्भे शेषं च कुम्भमूर्तित्वेन संपूजयेदित्युच्यते। ततो होमविधिः प्रतिपाद्यते। तत्र संस्थापितघटानां रथस्य वा समन्ततोऽष्ट वा पञ्च कुण्डानि, पूर्वस्यां दिश्येकं वा कुण्डं सर्वत्र स्थण्डिलं वा कृत्वा, कुण्डाग्निसंस्कारपूर्वकं होमं कुर्यादित्युक्त्वा होमविधानप्रकारः कथ्यते। अत्र नवपञ्चैककुण्डानुसारेण होमकरणे विशेषश्च सूच्यते। एवमधिवासविधौ क्रियाकलापः प्रादर्शि। ततो द्वितीयेऽहनि सुमुहूर्ते मन्त्रन्यासपूर्वकं कलशकुम्भस्थतोयैस्तत्तद्देशे संप्रोक्षयेदिति रथसंप्रोक्षणविधिरुक्तः। अन्ते एवं रथं संपाद्य यः संप्रोक्षणं कुर्यात्, स नर इहैव धनवाञ्श्रीमान्वाञ्छितं फलमवाप्नुयादिति फलश्रुतिश्च दृश्यते। तत एवं रथं सुसंस्कृत्य रथयात्रां समाचरेदित्युच्यते। एवं रथस्थापने क्रियाकलापः प्रदर्शितः।

ततः शिबिका 'वेठी, शेखरी, मण्डी' इति त्रिविधा भवतीत्युक्त्वा तासां तिसृणामपि निर्माणप्रकारस्तत्करणयोग्यवृक्षाश्च निरूप्यन्ते। शिबिकाप्रोक्षणं सिंहासनप्रतिष्ठाविध्युक्तप्रकारेण कर्तव्यमिति सूच्यते। ततः पर्यङ्कनिर्माणप्रकारस्तत्करणयोग्यद्रव्याणि च प्रतिपाद्यन्ते। एवं बालपर्यङ्कविधानप्रकारोऽपि प्रादर्शि। एवमेकसप्ततितमपटलार्थसंग्रहः।

द्विसप्ततितमे पटले करणलक्षणविधिः प्रतिपाद्यते। तत्र प्रथमं समिधः, वेणिकाः, विष्टराः परिधयः कूर्चाः इत्येतेषां लक्षणं, प्रमाणं, तन्निष्पादनप्रकारः, तत्करणयोग्यद्रव्याणि च प्रतिपाद्यन्ते। तत्र कूर्चविषये परम् 'ऊर्ध्वकूर्चः, अधःकूर्चः, अन्तःकूर्चः' इति भेदत्रयमभिधीयते। ऊर्ध्वकूर्चः शान्तिदः, अधःकूर्चः पुष्टिदः, अन्तःकूर्चोऽभिचारके विधेय इति चाभिधीयते। ततः पवित्रलक्षणं तन्निष्पादनप्रकारः, तदीयद्रव्यं च प्रतिपाद्यते। तत्र पवित्रार्थं स्वर्णनिर्मितमङ्गुलीयकमपीष्टमित्युच्यते। ततो दर्भमालाया लक्षणं तन्निष्पादनप्रकारः, तदीयद्रव्यं चाभिधीयन्ते। ततः प्रतिष्ठादौ कर्तव्यस्यान्यत्र विधेयस्य च तोरणस्य मानं, तदीयद्रव्यं तन्निष्पादनप्रकारश्च प्रतिपाद्यन्ते। ततो दर्पण-पूर्णकुम्भ-वृषभ-युग्मचामर-श्रीवत्स-स्वस्तिक-शङ्ख-दीपाः शैवाष्टमङ्गलानीति नामतो निर्दिश्य तेषां लक्षणं, प्रमाणं, तन्निर्माणप्रकारस्तत्करणयोग्यद्रव्याणि च निरूप्यन्ते। अन्येषां देवानां देवीनां चात्र वृषं विहाय तत्स्थाने तदीयवाहनमाचरेदिति विशेषः सूच्यते। प्रासादे स्वगृहे वापि यजमानानुरूपतो दर्पणादीनि लेखनीयानीत्युक्त्वा तन्मानादिकमुच्यते। स्त्रीणां मूर्धनि वा दर्पणाद्यष्टमङ्गलानि कुर्यादिति च सूचितम्। दर्पणाद्यष्टमङ्गलेषु पूजनीयदेवतानां निरूपणम्। ततो वज्र-शक्ति-दण्ड-खड्ग-पाश-अङ्कुश-ध्वज-शूल-पद्म-चक्राणि दशायुधानि नामतो निर्दिश्यन्ते। तत्र ध्वजो वा गदा वेति विकल्प उक्तः। तथा दण्डं हित्वा ध्वजाङ्कुशौ वा कर्तव्याविति चोच्यते। दशायुधानि याज्ञिकैर्वृक्षैर्लोहैर्वा कार्याणीत्युच्यते। देवान् कृताञ्जलिपुटान्विधाय तेषां मूर्ध्नि दशायुधानि कल्पनीयानीत्युच्यते। दशायुधेषु शक्तिगदे स्त्रियौ शेषाः पुरुषलक्षणा इति कथ्यते। दशायुधानां विषये मानानि तत्कर्तव्यताप्रकारश्च प्रतिपाद्यन्ते। ततः स्रुक्स्रुवयोर्विधानप्रकारौ विस्तरेण प्रतिपाद्येते। ततः करणानां विषये नूतनं करणं श्रेष्ठम्। तदभावे वित्तं दत्त्वा गुरोः पुराणकरणं ग्राह्यम्। पुराणकरणग्रहणे प्रायश्चित्तं कर्तव्यमित्युक्त्वा तत्प्रायश्चित्तविधिः प्रतिपाद्यते। ततो येन शास्त्रेण यत्र क्रिया पूर्वं प्रवर्तते, तत्र तच्छास्त्रसिद्धं करणमेव ग्राह्यम्। अनुक्तपक्षतो ग्राह्यमित्युक्तम्। उत्सवादिकर्मसु अत्र प्रतिमा वा देवोपकरणादिकं सर्वं तदालयसिद्धमेव श्रेष्ठम्। तल्लिङ्गादेर्विरुद्धत्वादाचार्यैरशुभैर्युक्तत्वाच्चान्यालयस्थितं न ग्राह्यमित्युच्यते। ततः स्थानात्स्थानान्तरप्रापितदोषशान्त्यर्थमाचरणीयः प्रायश्चित्तविधिः प्रतिपाद्यते। अन्ते यागादिविषये कल्पनीयस्य तोरणस्य विषये लक्षणमानादिकमुच्यते। एवं द्विसप्ततितमपटलार्थसंग्रहः।

त्रिसप्ततितमे पटले सौख्यकर्मविधिरथवा शुद्धनृत्तविधिरभिधीयते। तत्र प्रथमं प्रतिष्ठोत्सवकर्मादौ तथा नित्योत्सवान्ते सौख्यकर्म कर्तव्यमित्युच्यते। ततः सौख्यकर्माथवा शुद्धनृत्तं रुद्रकन्याभिः करणीयमित्युक्त्वा रुद्रकन्योत्पत्तिर्द्विधा प्रतिपाद्यते। रुद्रेणेन्द्रप्रीतिकारणात्सृष्टेऽप्सरसां कुले जाताः प्रथमा रुद्रकन्याः। अपरास्तु दारुकावने विनोदार्थं सुन्दररूपेण विचरतो भगवतो देवस्य शिवस्य सौन्दर्येण मोहितानां मुनिपत्नीनां तदालोकनमात्राद्भूतगर्भाणां संततयः। तासां द्विविधानां



रुद्रकन्यानामपि भरतोदितलक्षणसहितशुद्धनृत्ताचरणरूपमर्चनमेव वृत्तिरिति तत्प्रार्थनानुगुण्येन भगवता शिवेनैवाभिहितम्। ततः गुरुणा शिवेनैव द्विविधानां रुद्रकन्यानामपि दीक्षा च संपादिता। ततो नन्दिमाहूय तत्करस्थवेत्रदण्डेन स्पर्शिताः। नन्दिकुलोत्पन्ना नन्दिनीसंज्ञा दण्डिकन्य इति च भुवि व्यवह्रियन्त इति रुद्रकन्योत्पत्तिस्तासां वृत्तिश्चाभिधीयते। ततः शुद्धनृत्तं रुद्रकन्याभिः पञ्चाचार्यसमन्वितं विधेयमित्युक्त्वा नर्तक-मर्दक-गायक-वांशिक-मौरविका इति पञ्चाचार्याणां नामनिर्देशः क्रियते। ततो नाट्यवेदकृतश्रमा भावगेयनृत्तज्ञा वाद्यज्ञानविशारदा नवनाट्यरसज्ञा वीतकल्मषाः शिवभक्ताश्चतुर्वर्णानुलोमोत्थाः पञ्चाचार्या इति तेषां सामान्यलक्षणमुच्यते। ततस्तेषां पृथक् पृथग्लक्षणं, नृत्तकाले तेषां स्थानं, तैस्तत्र विधेयानि कर्माणि च कथ्यन्ते। ततो रुद्रकन्या यद्यपि पूर्वं संस्कृतास्तथापि पुनरेवासु पुनर्दीक्षा विधेया। सा च दीक्षा लेशान्निगद्यत इत्युक्त्वा रुद्रकन्यादीक्षाविधिः निरूप्यते। तत्र रुद्रकन्याः पञ्चवत्सराधिकाः पञ्चाशद्वत्सरान्ता दीक्षाकर्मणि योग्या नेतरा इत्युच्यते। ततः शुद्धनृत्तार्थं दीक्षाविधानप्रकारः प्रथममभिधीयते। ततो मण्डपमध्ये नटेशपूजाविधिः, पञ्चाक्षरादिमन्त्रजप्तेन शङ्खवारिणा रुद्रकन्यानां अभिषेकविधिः, मण्डपे वेत्रदण्डस्थापनं, नन्दिपूजाविधानं, ततो गुरुणा संप्राप्तदक्षिणेनाचार्येण तच्छिष्येण वा वेत्रदण्डस्य रुद्रकन्यानां शिरसि न्यासप्रकारः, तासां नामकरणप्रकारः, पुष्पाञ्जलिदानप्रकारः, ततः शिवसंनिधौ भरतोक्तपञ्चपदीत्यादिनृत्तविधानप्रकार इत्यादिविषया रुद्रकन्यादीक्षाविधौ प्रतिपाद्यन्ते। ततः पञ्चाचार्याणां विधेया दीक्षाविधिः कथ्यते। तत्र गुरुः स्वगृहे तेषां गृहे वा मनोरमे देशे मध्यभागे देवेशं परिवारसंयुतं संपूज्य, तत्पुरतः स्वर्णादिसूत्रावृतं कुम्भं विन्यस्य, तत्तोयं पञ्चाक्षरमन्त्रेणाभिमन्त्रयेत्। ततः कृतस्नातान् सितवस्त्रादिभिर्युतान्पञ्चाचार्यान् कुम्भाम्भसा संप्रोक्ष्य, पञ्चाक्षरं जप्त्वा शिरः कूर्चेन संस्पृशेत्। तदा कर्माधिकारिता सिध्यतीति पञ्चाचार्यदीक्षाकर्म प्रतिपाद्यते। ततो रुद्रकन्यानां नृत्तार्थं प्रथमप्रवेशविधिः प्रतिपाद्यते। तत्र निर्दिष्टदिवसात्पूर्वमङ्कुरार्पणं कर्तव्यम्। ततः प्रासादस्य चतुर्दिक्षु चत्वारो मण्डपाः कर्तव्याः। पूर्वास्यं मण्डपं च कल्पनीयम्। मण्डपे बलिपीठवच्चारपीठं कल्पनीयम्। सर्वेषु मण्डपेषु होमार्थं कुण्डं वा स्थण्डिलं वा कर्तव्यम्। ततः पूर्वेद्युर्देवेशं पूजयेत्। युगसंख्याताः सुस्नाताः सर्वावयवशोभिताः सर्वमङ्गलसंयुक्ताः कृतशयनमस्काराः शान्ता उपोषिता रुद्रकन्यास्तथाविधाः पञ्चाचार्याश्च मण्डपेऽधिवास्या इति पूर्वेद्युः कर्तव्योऽधिवासविधिः प्रतिपाद्यते। ततः परेद्युः प्रातः कर्तव्याः क्रिया उच्यन्ते। तत्रादौ सहस्रकलशादिस्नपनोपेतं प्रभूतहविषान्तं देवदेवेशं संपूजयेदिति प्रासादस्थलिङ्गपूजाविधिरभिधीयते। ततो मण्डपसंस्कारविधानानन्तरं मध्यपीठस्य मध्यमे सदाशिवमथवा नटेश्वरं देव्या सहितमावरणयुक्तं पूजयेत्। तत्र ब्रह्माणं च साङ्गं पूजयेदित्युच्यते। तत्रावरणविषये क्रमेण पूर्वादिचतुर्दिक्षु नन्दिब्रह्मस्कन्दविष्णवः प्रथमावरणे पूज्याः। तद्बहिर्लोकपालावरणं तद्बहिरस्त्रावरणं च पूजनीयमिति सूच्यते। ततः पूर्वदिङ्मण्डपे गौरीदेव्या सहितं रुद्रं प्राग्वदावरणोपेतं पूजयेत्। दक्षिणदिङ्मण्डपे सरस्वत्या समेतं ब्रह्माणं लोकपालादिसंयुतं पूजयेत्। पश्चिमे मण्डपे स्कन्दं लोकपालादिसंयुतं पूजयेत्। उत्तरदिङ्मण्डपे लोकपालावृतिसंयुतं विष्णुं संपूजयेदिति पूजाविधिः प्रतिपाद्यते। ततः कुण्डं वह्निं च संस्कृत्य तत्र तत्र विधेयो होमविधिः कथ्यते। ततो रङ्गे देवं संपूज्य शुद्धनृत्तं कारयेत्। नृत्तारम्भे देशिकस्य विशेषतो वस्त्राभरणैः पूजा कर्तव्या। तथा पञ्चाचार्येषु रुद्रकन्यासु च विषये वस्त्राद्यैर्भूषणादिभिः सह भृतिं यावत्प्रेम तावत् प्रदद्यादित्युच्यते। अत्र रुद्रकन्याः पञ्चाचार्याश्च प्रागुक्तदीक्षासंस्कारेणासंस्कृताश्चेत् संस्कारं कृत्वा ततो नृत्तं कारयेदिति सूच्यते। एवं रुद्रकन्यानां नृत्ते प्रथमप्रवेशविधौ क्रियाकलापो विधीयते। ततो नित्योत्सवान्ते कर्तव्यः शुद्धनृत्तविधिर्निरूप्यते। तत्र कृतस्नानया सर्वाभरणभूषितया शुक्लमाल्यादिसंयुक्तया रुद्रकन्यया रङ्गेशं प्राग्वदावरणसहितं संपूज्य तदग्रे पञ्चाचार्यसमोपेतं नवनाट्यरससमन्वितं हस्तार्थभावनोपेतं शुद्धनृत्तं कर्तव्यमिति कथ्यते। ततो ब्रह्मा, विष्णुः, रुद्रश्च संध्यात्रयाधिपा इत्युक्त्वा तेषां पुष्पाञ्जलिप्रदानसमये वक्तव्यं श्लोकत्रयमुच्यते। अन्ते स्थापने, संप्रोक्षणे प्रायश्चित्तकर्मणि, उत्सवे, स्नपने, मासपूजायां, होमकर्मणि, ध्वजारोहणकालादौ काम्यकर्माचरणकाले च शुद्धनृत्तकरणं विशिष्यत इति कथ्यते। एवं त्रिसप्ततितमपटलार्थसंग्रहः।

चतुःसप्ततितमे पटले वैशिष्ट्यविधानविधिरभिधीयते । आचार्य-साधक-पुत्रक-समयि-माहेश्वरा इत्येते पञ्च संस्कारेण पूर्वपूर्वं गुणाधिका इति संस्कारेण वैशिष्ट्यमुच्यते । अत्राचार्यलक्षणपटले ( २४-५२ उ, ५४पू ) 'आत्मोद्धारविहीनः सामान्यसमयी माहेश्वरः' इत्युक्तं माहेश्वरलक्षणं द्रष्टव्यम् । ततो ब्राह्मणाद्याश्चतुर्वर्णाः, अनुलोमाः षड् एते पूर्वपूर्वं गुणोत्कृष्टा इति जात्या वैशिष्ट्यं प्रतिपाद्यते । ततो, वयसा, विद्यया, भक्त्या, वैराग्येण, योगेन, क्रियया, चर्यया च परस्परं वैशिष्ट्यं भवेदित्युच्यते । ततो 'राजगुरुः, राजा, राजपत्नी, राजपुरोहितः, राजपुत्रः, मन्त्री इत्येतेऽपि क्रमेण पूर्वपूर्वं विशिष्यन्ते' इत्युच्यते । ततः शिवालये 'आचार्यः, निष्कलार्चकः, सकलार्चकः दैवज्ञः' इत्येतेषां क्रमेण पूर्वपूर्वं वैशिष्ट्यमस्तीत्युच्यते । ततो 'मठाधिपतिः, राजा, राजनियुक्तः, नैष्ठिकाः शिवभक्ताः, भृतिवर्जिता भौतिकाः, भृतिसंयुताः परिचारकाः, पूजकाः, भक्ताः, पञ्चाचार्याः, रुद्रकन्याः, देवदास्यः, वादकाः' इत्येतेषां क्रमेण स्वस्वकर्मभिर्वैशिष्ट्यमस्तीत्युच्यते । अत्रानुक्तानामन्येषामपि तत्तत्कर्मानुरूपतो ब्राह्मणादिक्रमेणापि वैशिष्ट्यं ज्ञात्वादरात्तान्पूजयेदित्युच्यते । एतेषां सर्वेषां देवकल्याणे पवित्रारोहणादिके देशिकाज्ञया वैशिष्ट्यमुदितमिति सूच्यते । ततो 'देशिकः शिव एवेति ज्ञेयः । देशिकाज्ञा शिवाज्ञेति च शिवागमे कथ्यते । अतो देशिकः शिववत्पूजनीय इत्युच्यते । ततः 'सन्मार्गादिक्रमेणापि वैशिष्ट्यमिह संमतम्' इत्युक्त्वा 'सन्मार्गी, पुत्रमार्गी, सहमार्गी, दासमार्गी' इत्येषां चतुर्णां प्रत्येकं लक्षणकथनपूर्वकं क्रमेणैतेषां पूर्वपूर्वं वैशिष्ट्यमिष्यत इत्युच्यते । अन्ते चैवं बहुप्रकारेण गुणसमायुक्तैः शैवैः सह विचार्य वैशिष्ट्यं परिकल्पयेदित्युच्यते । एवं चतुःसप्ततितमपटलार्थसंग्रहः ।

पञ्चसप्ततितमे पटले व्याधिनाशविधानविधिरुच्यते । तत्रादौ सर्वेषां मर्त्यानां, विशेषतो भूपतीनां, गोगजाश्वमहिषप्रमुखानां चतुष्पदां च ज्वरमारिग्रहावेशापस्मारेषु, विशेषतः क्षयरोगादिव्याधिसंभवे व्याधिनिवृत्त्यर्थं रोगानुत्पत्त्यर्थं पुष्ट्यर्थं बलार्थं च क्लेशाद्विधिर्निगद्यत इति प्रतिज्ञा । ततो देवालये, नदीतीरे, पर्वते, काननेऽपि वान्यस्मिन्पुण्यदेशेऽपि वा तत्तत्स्थाने, रक्षान्विते स्वमन्दिरे गोमयोपलेपिते शुद्धे स्थले, लिङ्गे, मण्डले वा कुम्भे स्थण्डिले फलकादिषु वा शिवादिदेवानावाह्य पूर्ववद्गन्धपुष्पधूपदीपैर्हविषा च समन्वितं समभ्यर्च्य, स्वेष्टदेवं पञ्चगव्यपञ्चामृतादिस्नपनोपेतं संपूज्य, जपं कुर्यादित्युक्त्वा जपविधानप्रकारस्तत्र कर्तव्यो होमविधिश्च प्रतिपाद्येते । ततो गुरुः कुम्भान्तिकं गत्वा, देवं स्तुत्वा, प्रणम्य कुम्भस्थतोयेन व्याधितं नरं संप्रोक्षयेत् । ततो मन्त्रध्यानसमन्वितं तत्रत्यभस्मालेपनं च कुर्यात् । ततो रुद्रादिभ्यो सघृतं दध्यन्नं बलिं दद्यादिति मनुष्याणां विषये व्याधिनाशनविधौ कर्तव्यो विधिरेकोऽभिधीयते । अत्र होमान्ते वा रुद्रादिभ्यो बलिं दद्यादिति च पक्षान्तरं च सूच्यते ।

ततो व्याधितनराकृत्यनुरूपेण पैष्टीं प्रतिकृतिं विधाय, गन्धपुष्पादिना बल्यन्तं पूजनं कृत्वा, प्रत्यहं संध्यात्रये एककाले वा नानाव्यञ्जनसंयुक्तं पायसं मौद्गान्नं शुद्धान्नं चत्वरे, चैत्यवृक्षमूले, रथ्यायां वा, सप्तमातृस्थानसमीपे वा श्मशानादौ वा मन्त्रमुच्चार्य बलिदानप्रकारेण विनिक्षिपेदित्युच्यते । अत्र बलिदानसमये वक्तव्यो मन्त्रः साधारणतया 'यः सत्त्वो देवदंष्ट्र समाविश्येह वर्तते, तस्यैवैष बलिर्भूयात्' इत्युच्यते । अयं बलिरेकादिदशाहान्तं, मासात् संवत्सरान्तं, संवत्सराच्छतवर्षान्तं प्राणिनां विषये विधेय इत्युच्यते । एवं बलिदानविधिरूपः प्रकार एको मनुष्याणां व्याधिनाशविधानविधिः प्रदर्शितः ।

ततो लिङ्गादौ देवमभ्यर्च्य, जपहोमौ समाप्य, वित्तशाठ्यं विना सुवर्णेन वा रजतेन वा रोगार्तरूपां, कालरूपां, नेमिरूपां वा प्रतिकृतिं संपाद्य, पूर्वोक्तविधिनाभ्यर्च्य तां प्रतिकृतिं शिवाय दानं कुर्यात् । अतो रोगी नीरोगी भवेन्न संशय इत्युच्यते । एवं प्रतिकृतिदानरूपोऽपरः प्रकारो मनुष्याणां व्याधिनाशनविधौ प्रतिपादितः । अत्र केवलबलिदानं वा चतुर्मासान्तं पञ्चषण्मासान्तं वा यावद् व्याधिविनाशं वा कुर्यादिति विकल्पेन पक्षान्तरं च सूच्यते ।



ततः पक्षयोरुभयोरष्टम्यां चतुर्दश्यां पर्वणि च तथा ग्रहणे विषुवेऽयनद्वयोरपि स्वजन्मर्क्षेऽनुजन्मर्क्षे वा शुद्धे मनोरमे [illegible] स्थले स्थण्डिलं कृत्वा सलक्षणान् पञ्चविंशतिसंख्यातानथवा नव पञ्च वा कुम्भान् स्थापयित्वा, तान्यथाविधि [illegible]न्वितं गन्धपुष्पधूपदीपैर्विशेषतः समभ्यर्च्य, तत्पूर्वे वा चतुर्षु भागेषु वा स्थण्डिले कुण्डे वा होमं समिदाज्यान्नसंयुतं कुर्यात् । तत्रत्यभस्मना तदुत्तरदेशस्थं व्याधितं पुरुषं स्नापयेत् । यवाद्यैः पैष्टिकैर्वा निर्मृज्य तत्तद्ध्यानसमन्वितं तत्तन्मन्त्र[illegible] कुम्भतोयैः स्नापयेदथवा संप्रोक्षयेत् । ततस्तत्रत्यभस्मनालेपनं कुर्यात् । तदा रोगी गुरुं संपूजयेत् । अयं रोगनाशविधिः [illegible] राज्ञां, सामन्तानां चाष्टोत्तरशतकलशस्थापनेनाथवा पञ्चाशत्कलशस्थापनेन वा कर्तव्यः । कलशेषु सर्वेषु मन्त्रमेकमेव [illegible]दिति राज्ञां सामन्तानां च विषये कर्तव्यो विधिः प्रदर्शितः । एवं साधारणमनुष्याणां, राज्ञां सामन्तानां विषये च [illegible] [illegible]स्नानकुम्भतोयाभिषेकतत्प्रोक्षणभस्मालेपनरूपो व्याधिनाशे कर्तव्यो विधिप्रकारो न्यरूपि ।

ततो राज्ञां साधारणमर्त्यानां च विषये व्याधिनाशनाय जलमध्ये स्थित्वा मन्त्रजपेन साधनीयोऽपरः प्रयोगो वर्ण्यते । [illegible] कर्तव्यो होमविधिर्मन्त्रतर्पणविधिश्चात्र कथ्येते । ततोऽस्मिन्नेव विषये भूर्जपत्रे मन्त्रवर्णान्विलिख्य स्वर्णेन रजतेन ताम्रेण [illegible] गुलिकां विधाय तत्र लिखितभूर्जपत्रं निक्षिप्य तां कर्णे वा कण्ठदेशे शिखायां वा धारयेदित्युक्त्वा, तत्र विनेया [illegible]तर्पणजपप्रकाराश्च कथ्यन्ते । अस्मिन्कर्मणि परानुग्रहे रतो देशिक आदिशैव एव भवितुमर्हतीत्युच्यते ।

ततो गजानां विषये रोगशान्तिविधिरुच्यते । गजशालाया मध्येऽथवा शिवहर्म्ये शूलस्थानेऽथवा विष्णुदुर्गाभास्कर-[illegible]स्तमातृणामालयेऽपि वा नदीतीरे तटाकतीरे देवोद्याने वा गोमयेनोपलिप्तस्थले विधिना स्थण्डिलं कृत्वा, सलक्षणं कुम्भं[illegible] स्थापयित्वा, तत्र साङ्गमघोरास्त्रं समर्चयेदित्युक्त्वाघोरास्त्रध्यानप्रकारस्तत्र कर्तव्यपूजाप्रकारश्च कथ्यते । ततस्तत्र होमविधिः प्रतिपाद्यते । पूर्णाहुत्यन्ते तत्कुम्भतोयसंप्रोक्षणं तत्रत्यभस्मलेपनं च गजानां कर्तव्यम् । तदा रोगा नश्यन्ति । [illegible]नामायुष्यवृद्धिः पुष्टिश्च संजायते । तेषां स्वामी च विजयी भवेदित्युच्यते । ततस्तत्र कर्तव्यो बलिविधिः कथ्यते । अन्ते [illegible]नैव विधिरश्वादीनां रक्षणेऽपि प्रोक्तः । किं तु धूम्ररूपमघोरास्त्रमत्र साधकोत्तमैर्ध्यातव्यमिति विशेषः सूच्यते ।

ततो व्याधिनाशनविधिविषयेऽघोरतदस्त्रयोरुभयोः पूजनेन साधनीयः प्रयोगस्तथालये शैलादौ अघोरमूर्तिं निष्पाद्य, [illegible] तत्पूजया साधनीयः प्रयोगः, सावरणस्याघोरमूर्तेः पूजनेन साध्यः प्रयोगश्च वर्ण्यन्ते । तत्र तत्र विधेया जपहोमबलि-[illegible] कथ्यन्ते । एवं साधारणमनुष्याणां, विशेषतो राज्ञां, चतुष्पदां च व्याधिनाशनविधिषु बहवः प्रयोगविशेषाः [illegible]पादिताः । अन्तेऽघोरस्य तदस्त्रस्य च यत्र राष्ट्रे होमबलिसंयुतं यजनं वर्तते, तत्रायुष्यमभिवृद्धिर्नीरोगता च भवेयुः । [illegible] सदृशो दुरितक्षयहेतुः प्रयोगोऽन्यो नास्ति । अतः प्रयत्नेनैनं प्रयोगं समाचरेदित्युच्यते । एवं पञ्चसप्ततितमपटलार्थसंग्रहः ।

षट्सप्ततितमे पटले राजरक्षाविधिरुच्यते । तत्र प्रथमं 'राज्ञां रक्षाविधानं समासतः प्रवक्ष्यामि' इति प्रतिज्ञा । ततो गुरूत्तमो नृपाय तल्ललाटमुखहृन्नाभिबाहुमूलद्वये मन्त्रं संस्मरन् भस्म दद्यादित्युक्त्वा, भस्मलक्षणं तत्र स्मरणीयो मन्त्रो [illegible]दानप्रकारस्तत्राङ्गुलीनां देवता इत्यादयो विषयाः प्रतिपाद्यन्ते । ततो विप्रक्षत्रियवैश्यशूद्राणां विषयेऽपि रक्षाप्रकारो यज्ञोपवीतदानप्रकारश्च समन्त्रकं निरूप्येते । तत्र नृपविषये सोत्तरीयं यज्ञोपवीतद्वयं दातव्यमित्यन्ते सूच्यते । एवं षट्सप्ततितमपटलार्थसंग्रहः ।

सप्तसप्ततितमे पटले दुर्गापूजाविधिः कथ्यते । तत्र प्रथमं दुर्गापूजाकालः प्रतिपाद्यते । तत्राश्वयुङ्मासे [illegible]पक्षेऽष्टम्यां नवम्यां च जगन्मातरं दुर्गां पूजयित्वा राजा विशोको द्विषो जयतीत्युच्यते । ततो दुर्गायैमुपयुज्यमाना महिषादयः [illegible] यतः सुगतिं यान्ति, ततः पापो न विद्यत इत्युच्यते । दुर्गायाः प्राङ्गणे ये प्राणांस्त्यजन्ति, तेषां स्वर्गे वासोऽप्सरसां

ते प्रिया भवन्ति । अनैरेते पूजनीया भवन्तीत्युच्यते । ततः दुर्गापूजार्थं प्रतिपुरं प्रतिग्रामं प्रतिगृहं स्थाने स्थाने प्रागुदक्प्रवणे देशे मण्डपं कारयेदित्युक्त्वा मण्डपविधिः, तत्र वेदिकाकुण्डकल्पनविधिश्च प्रतिपाद्यते । वेदिकोर्ध्वे राजचिह्नानि सर्वाण्यस्त्राणि चाधिवास्य पूजयेदित्युच्यते । ततो दुर्गापूजाप्रकारो होमविधिश्च संक्षेपेण प्रतिपाद्यते । हुतशेषं तुरङ्गानां गजानां चोपाहरे-दित्युच्यते । ततो नानाघोषपुरःसरं बद्धप्रतिसरान् पञ्च गजाश्वानलंकृतान्नगरे नित्यं भ्रामयेदित्युच्यते । प्रत्यहं राजा स्वाः स्वाः पितृदेवताः संपूज्य राजचिह्नानि फलमाल्यविलेपनैर्नानापुष्पसमन्वितैः सताम्बूलनैवेद्यान्तैः संपूज्य हुतशेषो गजाय प्रदातव्य इत्युच्यते । एवं दुर्गापूजायां क्रियाकलापः प्रादर्शि । ततः पूजामन्त्रान् प्रवक्ष्यामीत्युक्त्वा छत्र - तुरङ्ग - ध्वज - गज - पताका - खड्ग - वर्म - दुन्दुभि - चाप - शङ्ख - चामर - क्षुरिका - कनकदण्डसिंहासनानां मन्त्राः प्रतिपाद्यन्ते । ततोऽष्टम्यां राजा दुर्गादेवीं फलनैवेद्यकुसुमैर्धूपदीपविलेपनैः पूजयेदित्युक्त्वा तत्पूजाप्रकारो वर्ण्यते । तत्र स्वर्णरजतताम्रशैलदारुमृत्तिकोद्भवासु प्रतिमास्वेकां शक्त्यनुसारतो विधाय तां पूजयेदित्युच्यते । अथवा चित्रसंयुक्तां प्रतिमां वा पूजयेदिति चोच्यते । पूर्वाह्णे वाथ मध्याह्ने पूजामिमां कुर्यादिति कथ्यते । ध्यानार्थं प्रतिमालक्षणं सम्यग्वर्ण्यते । ततो नानाविधनृत्तगानैः निशां नीत्वा, प्रभातेऽरुणोदये प्रतिमाग्रतो महिषान्मेषांश्च वध्यर्थं घातयेदित्युच्यते । ततोऽपराह्णे नवम्यां रथारूढां दुर्गां राष्ट्रे भ्रामयेत् । भ्रामणकाले ससैन्यो राजा वा तत्प्रेषितः कश्चिद्वीरो वा दिग्विदिक्षु भूतेभ्योऽन्नं सघृतं मधुप्लुतमनेन मन्त्रेण बलिं दद्यादित्युक्त्वा बलिदानमन्त्रः प्रतिपाद्यते । अन्ते नरयानेन वा देवीं भ्रामयेदिति पक्षान्तरं सूच्यते । एवं सप्तसप्ततितमपटलार्थसंग्रहः ।

अष्टसप्ततितमे पटले वाजिनीराजनविधिरुच्यते । तत्र प्रथमं वाजिनां नीराजनाख्यं शान्तिकर्म वक्ष्यत इति प्रतिज्ञा । ततः प्रतिसंवत्सरमाश्वयुजमासि शुक्लपक्षेऽष्टमीनवम्योरथवा द्वादशीपूर्णिमयोरेतत्कर्म कुर्यादिति कालनिरूपणम् । ततो नगर्या उत्तरे पूर्वे चैशानदेशेऽन्यस्मिन्स्थले वैतद्विधानं कर्तव्यमित्युच्यते । अनन्तरं यागशालाविधिस्तत्र वेदिकाकुण्डकल्पन-विधिश्चाभिधीयते । ततो देशिको बद्धप्रतिसरं सखीभिरावृतं किङ्किण्योषधिसंयुतमश्वं कर्मारम्भात्पूर्वमेवापां समीपं नीत्वा, पूर्वोक्तविधिवत्कल्पितां यागानमां वेदिं प्रापय्य, तत्र विधिवत्कुण्डमग्निं च संस्कृत्य, सप्ताहं सायं प्रातश्च जुहुयात् । बलिविधिं च समाचरेदित्युक्त्वा होमविधिर्बलिविधिश्च कथ्येते । एतत्सप्ताहकाले नद्यां, समुद्रे, तटाकादौ, सरःसु वा हयानां स्नापनं यथोक्तैरोषधीगणैस्तिलसर्षपकल्कैर्दध्ना च विघर्षणं च कारयित्वा, तान्विमर्दितान्धौतमलान्पीतस्नातानवगाहितान् कारयित्वा, वाहनागारं नीत्वा, तत्र ब्रह्मचर्यसमन्वितो देशिको रक्षार्थं वीर्यार्थं च बद्धौषधानि तेषु बन्धयेदित्युच्यते । अत्र ब्राह्मे मुहूर्ते वेदघोषाभिनादिते सूर्याचन्द्रमसो रश्मिर्यथा हयान् न स्पृशति, तथा तेषां प्रचारः कर्तव्यः । सायं प्रातः कालद्वयेऽपि प्रधानतुरगस्य स्नानं प्रशस्यते । नित्यं स्वस्त्याशीर्वादैर्मङ्गलैश्च समन्वितं पुण्याहं वाचयेदिति सूच्यते । तत एवं सप्तरात्रे निवृत्ते शुक्लपक्षाष्टम्यां प्रातः स्नातो देशिको गौरसर्षपगोरसैरश्वान् स्नापयित्वा नवम्यामुत्तराषाढश्रवणनक्षत्रयोः संधौ नगराद्बहिस्तान् वासयेदित्युक्त्वा तदावासस्थानवर्णनं क्रियते । तत्र तोरणैर्मालाभिरलंकरणं कर्तव्यमित्युच्यते । ततो राजा सर्वमङ्गलसंयुक्तः पौरजनैः संवृतः शङ्खतूर्यादिभिः सह पूर्वोक्तविधिवत्कल्पितं शान्तिगेहं प्रविश्य, तत्र वस्त्रादिसहितानष्टकलशान्निक्षिप्तौषधिकान् स्थापयित्वा तत्पूजापुरःसरं पूर्ववत्कुण्डे होमं कुर्यादित्युक्त्वा राज्ञा विधेयो होमविधिः प्रतिपाद्यते । अत्र कलशेषु निक्षेपणीया ओषध्यो निरूप्यन्ते । राजा वैयाघ्रचर्मण्यासीनो गुरुणा समन्वितः पूर्वदिङ्मुखो वेदविद्भ्यां जैवैद्याभ्यां च सहितो होमं कुर्यादित्युच्यते । ततो राजा पूर्णाहुत्यवसानेऽग्नेः शुभाशुभे ज्ञात्वा, श्वेतचन्दनमाल्याढ्यं श्वेतवस्त्रसमन्वितं तुरगश्रेष्ठमारुह्य त तोरणान्तिकं प्रापयेत् । तत्र गानवाद्यादिभिः शनैः सान्त्वनवाग्भिश्च होमशेषं पयोदधिसमन्वितं कदलीफलसंयुक्तं पिण्डं तस्मै वाजिवराय दद्यात् । यदि शीघ्रं सोऽश्वः समश्नीयात्तदा राज्ञो विजयो भवेदित्युच्यते । तदा गुरुः शान्तिकपौष्टिकमन्त्रैः केवलकुम्भस्थैस्तोयैः राजानं हस्तिनं च संप्रोक्षयेत् । ततः सैन्यानि च संप्रोक्षयेत् । तत आभिचारमन्त्रैर्मृन्मयमहितं तीक्ष्णशूलेनोरःस्थले भिन्द्यादिति कथ्यते । एवमश्वाय रक्षणं कृत्वा तमारुह्य विजयसिद्ध्यर्थं राजा प्रागादिदिशो गच्छेदिति



[illegible] । एवमेव गजादीनामपि राजा नीराजनाख्यं शान्तिकर्म कुर्यादित्युक्त्वा तत्र कर्तव्यो विशेषविधिः प्रतिपाद्यते । [illegible]तितमपटलार्थसंग्रहः ।

एकोनाशीतितमे पटले राजनीराजनविधिरभिधीयते । तत्रादौ चातुरन्तराजविषयेऽथवा सार्वभौमविषये नीराजन-[illegible] प्रतिपाद्यत इति प्रतिज्ञा । ततो वेद्यां तोरणमालाभिरलंकृते रम्ये स्थले गुरूत्तमो नवं वह्निं विधिवत् संपाद्य, तमग्निं [illegible]भिः प्रकाशिकाभिः समिद्भिर्ज्वालयित्वा, पत्रपुष्पाक्षतैः बदरसमिद्भिः कूर्चैश्च सह समन्त्रं होमं कुर्यादित्युच्यते । [illegible] होमविधिर्न स्पष्टं प्रतिपाद्यते । ततो भगवन्तं भवं गन्धपुष्पाद्यैः संपूज्य नीराजनकर्म कुर्यात् । ततो गौरीं च पूर्ववत्संपूज्य [illegible]कर्म समाचरेत् । ततो हरिं, लक्ष्मीं, चतुर्मुखं, विघ्नेशं, चण्डिकां, सूर्यं, यक्षान्, मातृगणान्, गुहं, सर्वान् पितृगणांश्च [illegible] नीराजनविधिमाचरेत् । ततो घण्टानादमहारवैर्विघ्नजालं त्रासयन् गुरुर्गोमहिषादीनां नीराजनं कुर्यात् । अनन्तरं [illegible] विशेषेण राज्ञो गजतुरगाणां राजचिह्नानां च नीराजनकर्म समाचरेत् । सामन्तप्रमुखैरावृतं सिंहासनस्थं राजानं [illegible]भिरथवा रूपयौवनसंपन्नाभिर्वेश्याभिर्वा नाराजयेदित्युच्यते । नीराजनविधिश्चात्र ग्रन्थे सप्तमे पटले प्रतिपादितः । [illegible] नीराजनकर्म यत्र राष्ट्रे पुरे ग्रामे च क्रियते तत्र राजा सुखी भवेत् । सुभिक्षं च जायत इति फलश्रुतिरुच्यते । [illegible]तुर्वर्णानामपि रोगोत्पत्तौ तन्निवृत्त्यर्थमेतन्नीराजनकर्म कर्तव्यमिति सूच्यते । एवमेकोनाशीतितमपटलार्थसंग्रहः ।

अशीतितमे पटले पुष्याभिषेकविधिरभिधीयते । तत्र प्रथमं सर्वोत्पातविनाशार्थं पापनाशनं पवित्रं पुष्याभिषेकं [illegible]मीति प्रतिज्ञा । ततो राज्ञोऽभिषेकार्थं मनोरमे पुण्यदेशे कूटकल्पनप्रकारो निरूप्यते । अत्र द्वादशस्तम्भसंयुक्तं मध्यपादं [illegible]वेदिकं मण्डनैरुपशोभितं कूटं कुर्यात् । कूटस्य पश्चिमभागे दक्षिणभागे च वेदिकाद्वितयं पार्श्वसोपानसंयुक्तं [illegible]मित्युच्यते । ततः पुष्यमासे पुष्यनक्षत्रे पुण्यतीर्थेषु, आयतनेषूद्यानेषु, शिवस्थाने पूर्वोत्तरेशानप्रदेशेषु वा गुरुर्दैवज्ञेन [illegible]कर्मारम्भात्पूर्वं धूपगन्धपुष्पादिभिः सह दधिलाजाक्षतोपेतं देवादिभ्यो बलिं कुर्यादित्युक्त्वा, बलिदानविषये वक्तव्यो देवता-[illegible]ऽभिधीयते । ततो बलिदानानन्तरं रात्रौ राज्ञः स्वप्नं परीक्ष्य शुभस्वप्ने सति कर्मारम्भः कर्तव्यः । अशुभस्वप्ने सति [illegible] विधाय तदनन्तरमभिषेककर्मारम्भो विधेय इत्युच्यते । ततः पूर्वप्रकल्पितं कूटमथवा मण्डपं तोरणसंयुतं भूषयेत् । [illegible] पूर्वोक्तमङ्गलाङ्कुरकर्माचरेदित्यङ्कुरार्पणं कर्तव्यमिति सूच्यते । ततो भद्रासनं तद्दक्षिणभागे सोपानसहितं [illegible]सनं च कुर्यादित्युक्त्वा भद्रासनस्यासनस्य च कल्पनप्रकारः सलक्षणं प्रतिपाद्यते । तत्र भद्रासनेऽग्रे पृष्ठे च विशेषेण [illegible] कल्पनीयमित्युच्यते । ततोऽभिषेकदिनात्पूर्वेद्युर्वृद्धिनिमित्तं कर्तव्यं श्राद्धं विधिवत्कर्तव्यमिति सूच्यते । तस्मिन्दिने [illegible] प्रतिसरबन्धश्च विधेय इति सूच्यते । परेद्युः प्रभाते ग्रहयज्ञो निर्वर्तनीय इत्युच्यते । ततो मण्डलकल्पनप्रकारोऽभिधीयते । [illegible]न्तं मण्डलमानं प्रकल्प्य, तच्च शतभागं कृत्वा, तत्र शतभागेषु जम्बूद्वीपलेखनप्रकारो वर्ण्यते । तत्र भारतवर्ष-[illegible]लयोः, किंपुरुषवर्षहेमकूटपर्वतयोः, हरिवर्षनिषधपर्वतयोः, कुरुवर्षशृङ्गवत्पर्वतयोः, हिरण्मयवर्षश्वेताचलयोः, रम्यवर्षनीला-[illegible] भद्राश्ववर्षमाल्यवत्पर्वतयोः, केतुमालवर्षगन्धमादनपर्वतयोरिलावृतवर्षमेरुपर्वतयोश्च दक्षिणादिक्रमेण कल्पनं प्रतिपाद्यते । [illegible]कजम्बूद्वीपाद्बहिर्लवणाब्धिर्वर्तते । ततो द्वीपानन्तरमुदधिरुदधेरनन्तरं द्वीप इति क्रमेण क्षारक्षीरसर्पिरिक्षुरसमद्य-[illegible] इति षट्समुद्रास्तथा शाककुशक्रौञ्चशाल्मलीगोमेदपुष्कला इति षड् द्वीपाश्च वर्तन्त इति सप्तद्वीपसप्तसमुद्राणां च [illegible] प्रतिपादिता । स्वादूदकादनन्तरं लोकालोकपर्वतो दिवौकसां क्रीडनार्थं दशकोटिमानमितो विराजत इति वर्ण्यते । ततो [illegible] चतुस्त्रिंशत्संख्याकाः पिशाचा तिष्ठन्त इत्युक्त्वा, तान्नामतो निर्दिश्य तेभ्यः पूजापुरःसरं प्रतिसरादिभिः सह [illegible]नेन मद्यैश्च बलिं कुर्यादित्युच्यते । 'प्रतिसरः, वस्त्रं, पताका, भूषणं, यज्ञोपवीतम्' इति प्रतिसरादिविवरणमस्मिन्नेव [illegible] १०३ तमश्लोके प्रदर्शितम् । अनन्तरं श्वेताचले चतुःषष्टिसंख्याका दितिसुता दानवा वर्तन्त इत्युक्त्वा, तान्नामतो [illegible] तेभ्यश्च पूर्ववत्पूजापुरःसरं बलिमाचरेदिति कथ्यते । ततः शृङ्गवत्यचले एकत्रिंशत्संख्याकाः पितरो निवसन्तीत्युक्त्वा,

तान्नामतो निर्दिश्य तेभ्यः प्रतिसरादिभिस्तिलतैलाक्तैर्माषैः पूजापुरःसरं बलिर्देयेत्युच्यते । अत्र आदित आरभ्य सप्तानां नाम निर्दिश्य एते पृथक् पृथक् संख्यात्रययुता गणा भवन्ति । अत एते एकविंशतिसंख्याका इति कथ्यन्ते । अपरं दश च नाम्ना निर्दिश्यन्ते । आहत्य एकत्रिंशत्संख्याकाः पितरः सिध्यन्ति । अनन्तरं नीलाचले चत्वारिंशत्संख्याका मुनयो वसन्तीत्युक्त्वा तान्नामतो निर्दिश्य तेभ्यो गन्धैः प्रतिसरादिभिः सह स्वस्वनामभिर्ऋग्यजुस्साममन्त्रैर्वा पूजा कर्तव्येत्युच्यते । ततो निषधपर्वते अनन्ताद्यष्टनागा वसन्तीत्यभिधाय, नामतस्तान्निर्दिश्य तेभ्यः प्रतिसरादिकं दत्त्वा, सितामधुघृतनिवेदनदानपुरःसरं विविधैर्गन्धपुष्पकैः पूजयेदिति कथ्यते । ततो महामेरुपर्वते 'अष्ट वसवः, एकादश रुद्राः, द्वादशादित्याः, प्रजापतिर्वषट्कारः' इति त्रयस्त्रिंशद्देवा निवसन्तीत्यभिधाय, तांश्च नामतो निर्दिश्य तेभ्यः प्रतिसरादिकं समर्प्य, नमस्कारैर्धूपैश्च संपूज्य, तान्प्रति घृताहुतिभिरग्नौ जुहुयादिति निगद्यते । ततो हेमकूटाख्ये पर्वते गन्धर्वाः, अप्सरसश्च पूज्या इत्युक्त्वा, चित्रसेनादयः सप्तविंशतिसंख्याका नामतो निर्दिश्यन्ते । अप्सरसां विषये, अञ्जुल्याद्याश्चतुर्दश, तथा मेनकाद्याश्चतुर्विंशतिसंख्याकाश्च नामतोऽभिहिताः । पूर्वोक्तेभ्यो गन्धर्वेभ्योऽप्सरोभ्यश्च प्रतिसरादिकं दत्त्वा सुगन्धैः सुमाल्यैश्च संपूजयेदिति कथ्यते । ततः पुनरपि हेमाद्रिपर्वतेऽथवा हेमकूटाख्यपर्वते स्थितान् यक्षानष्ट सर्ववर्णकबलिदानेन पूजयित्वा प्रतिसरादिकं तेभ्यो दद्यादित्युक्त्वा यक्षा नामतो निर्दिश्यन्ते । ततः पुनरपि नीलाचले स्थितान् सिद्धानष्ट सर्ववर्णकबलिदानेन पूजयित्वा प्रतिसरादिकं तेभ्यो दद्यादित्युच्यते । ततः पुनरपि मेरुपर्वते स्थितानादित्यादिनवग्रहान्, अभिजिन्नक्षत्रेण सह सप्तविंशतिनक्षत्राणि, सप्तमातृभिः सहितौ वीरविघ्नेशौ, इन्द्राद्यष्टदिक्पालकैः सहितान् ब्रह्मविष्णुमहादेवस्कन्दान्, चतुर्दशसुरस्त्रीभिः सहितौ दस्रौ च नामतो निर्दिश्य, तेभ्यः क्रमशः प्रतिसरादिकं दत्त्वा पञ्चवर्णहविर्भिः बलिं कुर्यादित्युच्यते । अत्र मण्डलकल्पने प्रोक्तौ माल्यवद्गन्धमादनपर्वतौ विनान्ये हिमाचलादयः सप्त पर्वताः पूजाविषये विनियुज्यन्ते । नीलाचलमेरुपर्वतौ द्विवारं विनियुक्तौ । विषयोऽयं विमर्शनार्हो भवति । ततः पूर्वं प्रकल्पिते कूटे पश्चिमवेद्यां सूत्रवस्त्रपिधानपल्लवान्वितान् घृतपूरितान्घटान् अष्टौ अष्टाविंशतिमष्टोत्तरशतं वा संस्थाप्य, तत्र कोणेषु सूत्रवस्त्रादिसंयुक्तान्षोडश घटान् स्थापयित्वा तत्र द्रव्याणि विन्यसेदित्युक्त्वा तत्र निक्षेप्याण्योषधिप्रमुखानि प्रशस्तद्रव्याण्यभिधीयन्ते । ततस्तस्यां वेद्यां वृषभचर्मसिंहचर्मव्याघ्रचर्माणि पौषध्यचर्मेति चत्वारि चर्माण्युपस्तरेदित्युच्यते । तदूर्ध्वे भद्रपीठसिंहासनस्थमासनं परिकल्प्य, मृत्युंजयमन्त्रमुच्चार्य गन्धपुष्पाद्यैः संपूजयेदित्युच्यते । अत्र सार्वभौमविषये मण्डलीकविषये चासनं श्रेष्ठमध्यादिभेदेन भवेदित्युच्यते । आसनोर्ध्वे मध्ये सौवर्णपुष्पं विन्यस्य तत्र पुरोहितप्रमुखैर्द्विजैः सामन्तनृपतिभिर्मन्त्रिभिश्च परिवृतं नृपेन्द्रं निवेशयेदित्युच्यते । ततो राज्ञोऽभिषेकप्रकारः कथ्यते । तत्र गुरुर्धृतपञ्चाङ्गभूषणोऽहतक्षौमवासोधृग् वेदपुण्याहघोषैर्नृत्तवाद्यगेयमङ्गलशब्दैश्च सहोत्तरामुखः कम्बलेन राजानमाच्छाद्य आज्यमन्त्रमुच्चार्य आज्यघटानभिषिच्य, कम्बलमुद्धृत्य स्थापितघटाम्बुभिर्विविधैः स्वादुभिः फलैः सुगन्धकैः पुष्पैश्चाभिषिञ्चेदित्युक्त्वा, अभिषेककाले वक्तव्या मन्त्रा अभिधीयन्ते । अत्रान्ते मन्त्रैरेतैरन्यैराथर्वणमन्त्रै रुद्राध्यायेन वान्यैर्वाभिषेकं कुर्यादित्युक्त्वा विविधा मन्त्राः प्रोच्यन्ते । ततोऽभिषेकानन्तरं क्षत्रियाधिपो राजा कार्पासवस्त्रयुगकं दधानः पुण्याहशब्दैः शङ्खतूर्यरवसमन्वितमाचम्य देवान् स्वगुरुं ब्राह्मणानपि पूजयेदित्युच्यते । ततो ध्वजं शस्त्रं श्वेतच्छत्रं च पूर्वप्रोक्तमन्त्रैः संपूजयेदित्यभिधीयते । पूर्वं दुर्गापूजापटले ध्वजादीनां मन्त्रा अभिहिताः । ततो होमवेदीं प्रविश्य तत्र वृषपृषदंशरुरुपृषतसिंहव्याघ्रचर्माण्यास्तीर्य तत्र कुण्डे वा स्थण्डिले वा मुख्यस्थाने गुरूत्तमः समिद्भिः सर्पिर्मिश्रं शतं शतं होमं कुर्यादित्युच्यते । अत्र होमविषये मृत्युंजयमन्त्रः श्रेष्ठ इति सूच्यते । ततो होमान्ते गुरूत्तमः प्राञ्जलिर्भूत्वा 'यान्तु देवगणाः सर्वे पूजामादाय पार्थिवात् । सिद्धिं दत्त्वा तु विपुलां पुनरागमनाय च' इति ब्रूयादिति कथ्यते । तत्काले गुरवे नृपेन्द्रो दक्षिणां दद्यात् । विशेषतो ब्राह्मणेभ्यो दानं कुर्यात् । सर्वाञ्जनान् बन्धनाद्विमुच्येत । देवदेवेशं प्रणम्य तस्मै ग्रामकाञ्चनादिकं समर्पयेत् । ततः संतुष्टचित्तो मकुटादिभूषितो मातङ्गमारुह्य भवनं प्रति गच्छेदित्यादिक्रियाकलापः पुण्याभिषेकविधौ निगद्यते । अन्ते सर्वोत्पातविनाशार्थं सर्वरोगनिवृत्तये सार्वभौमप्रसिद्ध्यर्थमायुरारोग्यसिद्धये सर्वशत्रुविनाशार्थं च नृपस्य पुण्याभिषेकं पुण्यस्थाने प्रत्यब्दं समाचरेदिति फलश्रुतिर्दृश्यते । एवमशीतितमपटलार्थसंग्रहः ।



एकाशीतितमे पटले ग्रहयज्ञविधिरुच्यते । तत्र प्रथमं यस्मात्कारणात् सर्वेषां ग्रहचारात् सर्वदुःखं जायते, तस्माद् ग्रहाणां प्रीतिकारणं ग्रहयज्ञं वक्ष्यामीति प्रतिज्ञा । ततो मण्डपादौ गृहेऽपि वा नवभागांकृते क्षेत्रे दीक्षितैः सह देशिको नवग्रहान् पूजयित्वा जुहुयादित्युच्यते । तत्र प्रणवादिनमोऽन्तेन स्वस्वनाम्ना नवग्रहाणां मण्डले पूजां कुर्यादित्युक्त्वा पूजादिनमण्डलकल्पनविधिर्ध्यानार्थं नवग्रहाणां वर्णाश्च प्रतिपाद्यन्ते । ततः पूजाविधिर्होमविधिश्च संक्षेपेण प्रतिपाद्येते । तत्र पूजादिनैवेद्यद्रव्याणि होमद्रव्याणि च कथ्यन्ते । होमद्रव्यविषये नवग्रहानुरोधेन नवविधाः समिधो निरूप्यन्ते । अत्र सर्वाः समिधः क्षीरवृक्षसमुद्भूता वा भवेयुरिति विकल्पोऽभिधीयते । स्रुक्स्रुवौ लक्षणसंयुतौ भवेताम् । अथवा पलाशदलजौ वा स्यातामिति विकल्पेनोक्तौ । होमान्ते फलसिद्ध्यै होतॄणां दक्षिणां दद्यादित्युच्यते । एवं ग्रहयज्ञविधौ क्रियाजातमभिहितम् । एवम् एकाशीतितमपटलार्थसंग्रहः ।

द्व्यशीतितमे पटले प्रतिसरविधिर्निगद्यते । तत्र प्रथमं राज्ञां प्रतिसरविधिं वक्ष्यामीति प्रतिज्ञा । ततः सर्वस्मिन्मङ्गलकार्ये निर्दिष्टदिवसात् पूर्वरात्रे कौतुकबन्धनं कुर्यादिति प्रतिसरविधेः कालो निरूप्यते । ततः शुद्धो देशिकः सकलीकरणं विधाय, स्थाली स्थण्डिले विन्यस्य, पुण्याहवाचनपूर्वं तत्संप्रोक्ष्य, यज्ञसूत्रं वलयमङ्गुलीयकं प्रतिसरं तथा हेमन्यं शिरःपुष्पं च [illegible]लेनास्त्रमन्त्रेण प्रक्षाल्य, पात्रनिक्षिप्तानि यज्ञसूत्रादीनि क्रमान्मन्त्रैरभिमन्त्रयेदित्युक्त्वाभिमन्त्रणप्रकारा मन्त्रपूर्वकमभिधीयते । एवं मन्त्रेणाभिमन्त्रितं चन्दनेन विमिश्रितं कौतुकं भस्म चैशान्यां निक्षिपेत् । शिरःपुष्पादि मध्यादिसौम्यपर्यन्तं विन्यसेत् । समन्त्रकं ताम्बूलं दापयेत् । अथवा स्वर्णनिर्मितं रजतनिर्मितं दूर्वाग्रं केवलं वाग्नेये नैरृते वा विन्यस्य हृदयमन्त्रेणाभिमन्त्रयेदिति पक्षान्तरमुच्यते । ततस्तत्पात्रं पटैराच्छाद्य सर्वालंकारसंयुक्तं मातङ्गोपरि संस्थितं कृत्वा नगरीं भ्रामयेत् । ततो गुरुर्दैवज्ञपुरोहितप्रमुखैर्विप्रैश्च समन्वितः सर्वमङ्गलैः सह कृतशौचं विलिप्ताङ्गं क्षौमवस्त्रोत्तरीयं सर्वाभरणसंयुक्तं सर्वालंकारसंयुक्तं राजानं सिंहासनादौ पूर्ववत्तत्र विनिवेशयेत् । ततः पूर्वमन्त्रतः पुण्याहप्रोक्षणं कृत्वा शिरःपुष्पादि मृत्युंजयमन्त्रमुच्चरन् सर्वं दत्त्वा, तस्य दक्षिणहस्ते सौम्यदिङ्मुखः समन्त्रकं भस्मदानपूर्वकं कौतुकबन्धनं कुर्यादित्युच्यते । अथवा गुरुरीशानादिमन्त्रैर्यथान्यायं सर्वं परिकल्प्य, समन्ताल्लाजपुष्पादिभिः सह नालिकेरफलानि स्थापयित्वा, शुद्धसामपठनपूर्वकं प्रतिसरविधिं कुर्यादिति पक्षान्तरमभिधीयते । ततः कर्ता देशिकं, दैवज्ञं, पुरोहितं सर्वान्ब्राह्मणानपि पूजयेदित्युच्यते । अन्ते च मङ्गलवाद्यकरणेन विधिना देवदेवस्य शूलिनोऽन्येषां देवानां, चतुर्णां वर्णिनामपि प्रतिसरविधिं कुर्यादित्युच्यते । एवं द्व्यशीतितमपटलार्थसंग्रहः ।

त्र्यशीतितमे पटले तुलारोहदानविधिः कथ्यते । तत्र प्रथमं विप्रादिचतुर्वर्णानां विशेषतो भूपतीनां च विषये तुलारोहादिषोडशदानविधिं वक्ष्यामीति प्रतिज्ञा । ततस्तुलारोहादिषोडशदानानि ग्रहणादिषु कालेषु शुभे देशे कुर्यादिति तत्र कालो देशश्च विधीयते । ततस्तुलारोहादिषोडशदानविधौ सामान्यतो मण्डपं कूटं वा कुर्यादित्युक्त्वा मण्डपकल्पनप्रकारस्तत्र वेदिकाकुण्डकल्पनप्रकारश्चाभिधीयेते । तत्र मण्डपे कूटे वा कल्पिते वेदिकां मध्ये निर्माय तद्बाह्ये नव चतुरश्रकुण्डानि कल्पयेदित्युच्यते । मण्डपालंकारविधिश्च प्रतिपाद्यते । ततस्तुलाकल्पनप्रकारो निरूप्यते । तत्र तुलादण्डादिकरणयोग्या वृक्षा कथ्यन्ते । तुलायाः सर्वेऽप्यवयवा एकदारुमया अथवा मिश्रा वा भवेयुरिति कथ्यते । ततस्तुलां निर्माय, पुरुषमात्रं खात्वा, तत्र पादशिलां विन्यस्य, तदूर्ध्वे तां स्थापयित्वा वाद्यकाभिर्दार्ढ्यं नयेदित्युच्यते । तत एवं सर्वं संपाद्य, शिल्पिविसर्जनं कृत्वा पुण्याहं वाचयित्वा, समलंकृते मङ्गलाङ्कुरसंयुक्ते नानाफलसमन्विते पूर्वकल्पिते मण्टपे सर्वतोभद्रमण्डलं कारयेत् । मण्डपस्याग्र-

विद्यु वज्रादिशूलपर्यन्तं दशास्त्रं विन्यसेत्। तत्र शूलस्य वामदेशे चक्रं दक्षिणभागे पद्मं च कल्पयेदिति भण्यते। ततः पूजाविधिः प्रतिपाद्यते। तत्र मण्डलस्य मध्यमे वामभागे गौरीसमायुतं देवदेवेशं गन्धपुष्पाद्यैः संपूज्य, दक्षिणे ब्रह्माणं वामे विष्णुं समन्ताल्लोकपालांश्च विन्यस्य पूजयेदिति कथ्यते। ततो मध्ये सूर्यमग्निदेशे नैर्ऋते वा भास्करं वायुदेशे भानुमीशे रविं नैर्ऋतेऽग्निदेशे वा दिवाकरं विन्यस्य गन्धपुष्पाद्यैर्यजेदित्युच्यते। अत्र भास्करदिवाकरयोर्विषये विविकल्प उक्तः। तत उमां, प्रभां, प्रज्ञां, संध्यां, सावित्री च मध्यादीशानपर्यन्तं विन्यस्य गन्धपुष्पाद्यैरर्चयेदिति कथ्यते। तत मध्यमे (नैर्ऋते ?) विस्तारां वह्निदेशे सुतारां, वायुदेशे बोधनीम्, ईशानदेशे आप्यायनीं, मध्यदेशे रविं च विन्यस्य गन्धपुष्पाद्यैर्यजेदित्युच्यते। ततः प्रभूत-विमल-सार-आराध्यासुख्यान्यासनानि पूर्वाद्युत्तरान्तं मध्यमे सुखाभिधानमासनं च विन्यस्य पूजयेदित्युच्यते। ततो दीप्ताद्या अष्टशक्तीः पूर्वान्मध्यान्तं विन्यस्य संपूजयेत्। सोमादिकेतुपर्यन्तानष्टौ ग्रहांश्च न्यस्य पूजयेदिति पूजाविधिरभिहितः। ततः समन्त्रकं नवकुण्डेषु विधेयो होमविधिर्निरूप्यते। तत्र मण्डले पूजितान्सर्वान्देवानभ्यर्च्य होमयेत्। पूर्णाहुतिं विधाय नृपाणां तुलारोहक्रियामाचरेदिति सूच्यते। ततः परमेश्वरं सहस्रकलशाद्यैरथवा पञ्चामृतैः पञ्चगव्यैः क्षीराद्यैर्वा संस्नाप्य प्रभूतहविषान्वितां महापूजा कर्तव्या। ब्राह्मणान्भोजयेत्। पश्चात्तुलारोहक्रियामाचरेदिति तुलारोहक्रियाविषये क्रमो निरूप्यते। ततस्तुलारोह-विधिप्रतिपादनम्। तत्र स्नातं शुक्लवस्त्रगन्धलेपनयुतं सर्वाभरणसंयुक्तं शुक्लमाल्यविभूषितं कृतप्रतिसरं खड्गखेटकधारिणं नृपतिमाहूय शिवाम्भसा शिवमन्त्रमुच्चरन् प्रोक्षयेत्। ततः पुण्याहं वाचयित्वा, भूतशुद्धिपुरःसरं सकलीकरणं कृत्वा, गुरुः समन्त्रकं वेदघोषातोद्यसमन्वितं नृत्तगीतसमन्वितं नृपतिं काञ्चनं च तुलामारोपयेत्। तदा यजमानो रुद्रगायत्रीमन्त्रं जपेदित्युच्यते। आरोपितस्य कायेन तत्सुवर्णं यदि समं भवेत्तदा तुलारोहः कृतो भवेदिति भण्यते। तस्मिन्काले वस्त्रकाञ्चनभूषणैर्देशिकं होतॄंश्च संपूजयेत्। तेभ्यो विधिपूर्वकं दक्षिणां दद्यादित्युक्त्वा दक्षिणादानविधिरभिधीयते। तस्मिन्काले कारागृहबद्धान्सर्वान्विसृजेदिति सूच्यते। एतत्तुलारोहविधानं षोडशदानविधीनां सामान्यतोऽभिहितमिति च सूच्यते। एवं त्र्यशीतितम-पटलार्थसंग्रहः।

चतुरशीतितमे पटले हिरण्यगर्भदानविधिः प्रतिपाद्यते। तत्र प्रथमं सर्वार्थसिद्धिदं हिरण्यगर्भदानं वक्ष्यामीति प्रतिज्ञा। ततो हिरण्येनाधःपात्रोर्ध्वपात्रसमन्वितायाः फेलाया निर्माणप्रकारोऽभिधीयते। तत्र फेलां सूक्ष्मां वा कृत्वा तत्र स्वर्णपट्टैर्वेष्टयेदिति कथ्यते। तस्यां फेलायां षट्त्रिंशत्तत्त्वभावनाप्रकारः सूचितः। ततस्तुलारोहविधिप्रोक्तप्रकारेण वेदिकोपेतं स्थानं मण्डलेन समन्वितं कृत्वा, मध्ये शालिं निक्षिप्य, तदूर्ध्वं नववस्त्रैर्वेष्टितां फेलां विन्यस्य, तां माषकल्केन नीरन्ध्रं विधाय, तत्र पञ्चगव्यानि पञ्चामृतानि चेशानाद्यैः पञ्चभिर्मन्त्रैः पूरयेत्। पश्चाद्यथा शिवमयं भवेत्तथा गायत्र्या पूजयेत्। ततः पूर्ववत्तु-लारोहविध्युक्तप्रकारेण मण्डले सामान्यपूजां विदध्यात्। ततः कर्ता गौरीगायत्रीमन्त्रं जपन् प्राङ्मुखः फेलां प्रविशेत्। तदा गुरुः शिवमन्त्रं स्मरन् विधानेन फेलां छादयेत्। तदा गुरुः षोडशसंस्कारान् गर्भाधानादिकान्कुर्यादिति कथ्यते। अत्र दानप्रकारो न निरूप्यते। किंतु 'अनन्तरं वा संस्काराः क्रियन्तां, तत्र विशेषः कथ्यते' इत्युक्त्वा स विशेषप्रकारोऽभिधीयते। तत्र सर्वालंकारसंयुक्तं भार्यया युक्तं कर्तारं समानीय तस्यैव षोडशसंस्कारान् गर्भाधानादिकान् कुर्यादित्युच्यते। ततः सीमन्त-कर्मविधानं संक्षेपेण प्रतिपाद्यते। ततो भार्यापार्श्वे त्रिंशन्निष्कमितां कन्यां सर्वालंकारशोभितां निक्षिप्य शिवादिभ्यो निवेदयेत्। अन्नप्राशनकर्मणि विप्रान्पायसैर्भोजयेत्। दक्षेवामन्त्रमुच्चार्य सर्वकर्म समाचरेत्। अनुक्तमत्र यत्कर्म तत् तुलारोहवदाचरेदिति क्रियाकलापोऽत्राभिधीयते। अन्ते चैवं यः कुर्यात्सोऽनन्तफलमश्नुत इत्युक्तम्। एवं चतुरशीतितमपटलार्थसंग्रहः।



पञ्चाशीतितमे पटले तिलपर्वतदानविधिरुच्यते। तुलारोहदानविध्युक्तमार्गेण मण्डलान्वितं मण्डपं कुर्यात्। [illegible] वेदिकां विना वाद्यवर्ज्यां कुण्डानि प्रागुक्तविधिना कल्पयेदित्युच्यते। मध्ये कल्पिते मण्डले पञ्चगव्येन संप्रोक्षणं [illegible] शतमात्रसमुच्छ्रयं वेण्वादिकल्पितं दण्डं विन्यसेत्। तत्र व्योमव्यापिमन्त्रं समुच्चरंस्तिलान् निक्षिपेत्। तत्र तिलानां [illegible] प्रादेशमात्रमथवा षडङ्गुलं चतुरङ्गुलं वाधिकतया भवितव्यम्। अथवा दण्डमानसमं भवेत्। ततो हीनतया न [illegible] सूच्यते। ततस्तिलान्वस्त्रैः स्रष्टादिमन्त्रतो वेष्टयेत्। तादृशे तिलपर्वते देशं संकल्प्य विशेषेण पूजयेदिति [illegible] प्रकारः सूच्यते। तत्र तिलपर्वतप्रान्ते क्ष्मादष्टमूर्तींस्तदधिपानष्ट शर्वादींश्च निष्कत्रयसुवर्णेन निर्माय निक्षिपेत्। [illegible] देवं विधानज्ञो देशिको यजमानेन सहार्चयेत्। तदा 'अयं हि देवदेवेशः सर्वेषां वृषभध्वजः। अस्यार्चने [illegible] भवति कल्पनम्।' इत्युक्त्वा यजमानाय तिलमध्यस्थं देवदेवमुमापतिं दर्शयेदिति कथ्यते। अत्रानुक्तं यत्किंचि-[illegible] होमं तथा देवदेवस्य सहस्रकलशादिभिः स्नपनं तत्सर्वं तुलारोहविधिवत्समाचरेत्। ततो देवदेवेशं विसृज्य कर्ता [illegible] पुरःसरं शिवाय शिवधर्मिणे च तिलपर्वतं दद्यात्। अस्माद्दानात्परतरं दानं नास्ति भुवनत्रय इत्युच्यते। ततोऽथवा-[illegible] महाफलदं दानमिह कथ्यत इत्युक्त्वा प्रकारान्तरेण तिलपर्वतदानविधिर्निरूप्यते। तत्र देशिको गोमयालि-[illegible] दशाक्षरमन्त्रेण तत्र भारत्रयं तिलं निक्षिपेत्। कर्णिकाकेसरोपेतमष्टदलपद्मं दशनिष्केण कृत्वा, तिलमध्ये [illegible]। तत्पद्ममध्ये शिवं पूजयेत्। पञ्चनिष्कसुवर्णेन मनोन्मनीं निर्माय, तथा निष्कत्रयसुवर्णेन वामाद्यष्टशक्तीश्च कृत्वा [illegible] विन्यस्य विधिवत् पूजयेत्। ततो बाह्ये तद्वत्स्वर्णमयेनाष्टौ विद्येश्वरान् विधाय विन्यस्य विधिवत् पूजयेत्। ततो [illegible] तत्सर्वं तिलसंयुतं कर्ता शिवभक्तेभ्यो दापयेदिति क्रियाक्रमो न्यरूपि। एवं पञ्चाशीतितमपटलार्थसंग्रहः।

षडशीतितमे पटले स्वर्णभूमिदानविधिरभिधीयते। तत्र सप्तद्वीपसमन्वितां समुद्रपर्वतोपेतां सर्वतीर्थसमन्वितां [illegible] मेरुपर्वतसंयुक्तां भूमिं सहस्रेण काञ्चनेनैकहस्तप्रमाणेन विधाय, तां नवखण्डयुक्तामनेकमुनिसंयुक्तां च भावयेत्। तुलारोह-[illegible] विध्युक्तप्रकारेण देवपूजां होमं च कुर्यात्। मेरुपर्वतादीन् स्वस्वबीजाक्षरेण पूजयेत्। परमेश्वरं च तुलारोहविध्युक्तप्रकारेण सहस्रकलशाद्यैः स्नापयित्वा महापूजां च विदध्यात्। ततस्तां शिवादिभ्यो दद्यादिति क्रियाक्रमः प्रतिपाद्यते। एवं [illegible] शीतितमपटलार्थसंग्रहः।

सप्ताशीतितमे पटले कल्पपादपदानविधिः कथ्यते। तत्र प्रथमं शतनिष्कसुवर्णेन कल्पपादपनिर्माणप्रकारो निरूप्यते। तत्र कल्पपादपो बहुशाखासमेतः पत्रपुष्पसमन्वितो नानाफलसमायुक्तः सर्वशोभासमन्वितश्च कल्पनीयः। तत्र कल्पपादपाङ्गानि दण्डशाखास्कन्धपत्रपल्लवादीनि सर्वाण्यपि नवरत्नैः कर्तव्यानीत्युच्यते। कल्पद्रुमस्य वेदिः स्फटिकेन कल्प-नीयेत्युक्तम्। वृक्षस्य वितस्तिमात्र आयामः कल्पनीय इति भण्यते। तुलारोहविध्युक्तप्रकारेण वेदिकामण्डलकुण्डसंयुक्तं मण्डपं तुलारोहविध्युक्तवद्विधेयम्। तन्मध्ये कल्पद्रुमं स्थापयित्वा कल्पवृक्षमूले लोकपालैः संवृतं लिङ्गं स्थापयेदित्युच्यते। लोकपाल-[illegible] संयुक्तमीश्वरं गुरुर्विधिवत्पूजयेत्। तत ईश्वराय तदीयभक्तेभ्यश्च कल्पपादपं दद्यात्। अत्रानुक्तं यत्कर्म तत्सर्वं तुलारोह-विधिप्रकारेण समाचरेदिति क्रियाजातमभिधीयते। एवं सप्ताशीतितमपटलार्थसंग्रहः।

अष्टाशीतितमे पटले गणेशदानविधिरुच्यते। तत्र प्रथमं सर्वपापप्रणाशनं गणेशदानं वक्ष्यामीति प्रतिज्ञा। ततो देशिकस्तुलारोहविध्युक्तप्रकारेण वेदिकामण्डलकुण्डान्वितं मण्डपं विदध्यात्। तन्मध्ये लोकपालसमावृतं देवं संयजेत्। तद्बाह्ये ऽष्टौ

विघेशानष्टदिक्षु सुवर्णेन निर्मितान् स्थापयेत् । ततो गुरुर्गन्धपुष्पादिभिस्तृतीयावरणस्थगणेशोपेतान् तान् विधिवत् पूजयेत् । प्रधानकुण्डे देवेशं समभ्यर्च्य जुहुयात् । तथाष्टदिक्षु कुण्डेषु विघेशानभ्यर्च्य जुहुयादिति होमविधिः प्रतिपाद्यते । तत ईशानादिसप्तदिक्षु सप्त विप्रान् उत्तरदिशि कन्यामेकां च संस्थाप्य गन्धपुष्पादिभिर्गुरुः समर्चयेत् । पूजितेभ्यस्तेभ्यो विघेशान्स्वमन्त्रैरनुक्रमेण प्रदद्यात् । अत्रानुक्तं सर्वं कर्म तुलारोहविधिवत् कर्तव्यमिति क्रियाकलापः प्रादर्शि । एवमष्टाशीतितमपटलार्थसंग्रहः ।

एकोननवतितमे पटले हेमधेनुदानविधिरुच्यते । तत्र प्रथमं सर्वभयदुर्भिक्षनाशनं हेमधेनुदानं संक्षेपतो वक्ष्यामीति प्रतिज्ञा । ततः सहस्रेण पञ्चशतेनाथवा पञ्चाशदुत्तरद्विशतेन शतेन वा निष्केण सुवर्णेन सर्वलक्षणसंयुतं गोरूपं कारयेत् । गोः शृङ्गाद्यङ्गेषु नवरत्नैरलंकारं कुर्यात् । गोदशांशेन वत्सरूपमपि संपादयेदिति वत्सयुक्तगोरूपनिर्माणप्रकारोऽभिधीयते । ततो देशिकस्तुलारोहविध्युक्तप्रकारेण वेदिकामण्डलोपेतं मण्डपं कारयित्वा तन्मध्ये सवत्सां गां विन्यस्य वस्त्रयुग्मेन वेष्टयेत् । धेनुगायत्र्या गन्धपुष्पाद्यैः पूजयेत् । तुलारोहविध्युक्तप्रकारेण सामान्यपूजां होमं च कुर्यात् । ततः परमेश्वरं सहस्रकलशादिभिः स्नापयित्वा महापूजां च समाचरेदित्युच्यते । अत्र होमविषये समिदाज्यहविष्ययुगेकाग्निहोमो वा कर्तव्य इत्युक्त्वा एकाग्निकल्पने गुरोर्दक्षिणाविषये विशेषः कथ्यते । अन्ते चात्रानुक्तं यद्भवेत् किंचिद्विधानं तत्तुलारोहविध्युक्तवदाचरेदित्युच्यते । एवमेकोननवतितमपटलार्थसंग्रहः ।

नवतितमे पटले लक्ष्मीदानविधिः कथ्यते । तत्र प्रथमं प्रभूतैश्वर्यसिद्ध्यर्थं लक्ष्मीदानं वक्ष्यामीति प्रतिज्ञा । ततः सहस्रेण पञ्चशतेन पञ्चाशदुत्तरद्विशतेन, पञ्चविंशत्युत्तरशतेनाष्टोत्तरशतेन वा निष्केण काञ्चनेन लक्षणसमन्वितां लक्ष्मीदेवीं विदध्यात् । ततस्तां लक्ष्मीं तुलारोहविध्युक्तवद् वेदिकामण्डलकुण्डान्वितं मण्डपं विधाय तत्र मण्डले विष्णोर्वामभागे यथा भवेत्तथा विन्यसेत् । लक्ष्मीं श्रीमन्त्रेण श्रीसूक्तेन वा तथा विष्णुं विष्णुगायत्र्या गन्धपुष्पादिनार्चयेत् । तुलारोहदानोक्तविधिना शिवपूजां, होमं, देवदेवस्य सहस्रकलशादिभिः स्नपनं महापूजां च कुर्यादित्युच्यते । अत्रैकाग्नौ होमं वा कुर्यादिति पक्षान्तरं सूच्यते । अनुक्तमिह यत्कर्म तदपि तुलारोहविध्युक्तवत् समाचरेदिति क्रियाकलापः प्रत्यपादि । एवं नवतितमपटलार्थसंग्रहः ।

एकनवतितमे पटले तिलधेनुदानविधिः प्रतिपाद्यते । तत्र प्रथमं सर्वकामार्थसाधनं तिलधेनुविधिं वक्ष्यामीति प्रतिज्ञा । तुलारोहविध्युक्तप्रकारेण वेदिकाकुण्डमण्डलान्वितं मण्डपं कुर्यात् । मण्डपस्यामे अष्टद्रोणेन भारेण वा तिलेन तिलमयं पद्मं कारयेत् । तत्पद्मं वस्त्रैराच्छाद्य तन्मध्ये त्रिंशन्निष्केण तदर्धेन तस्याप्यर्धेन वा पञ्चनिष्केण वा सुवर्णेन कर्णिकानालशोभितं स्वर्णपद्मं निर्माय विन्यसेत् । तस्यैवोत्तरभागे एकादशब्राह्मणानेकादशरुद्रान्स्मृत्वा समावाह्य समर्चयेत् । पूर्वभागे द्वादश विप्रान् द्वादशादित्यमन्त्रैरावाह्याभ्यर्चयेत् । दक्षिणभागेऽष्टविघेशान्स्मृत्वाष्ट विप्रान्समर्चयेदित्युच्यते । ततः 'षोडशैव तु' इत्युक्त्वा स्मरणीयत्वेन देवतानिर्देशं विना षोडश विप्रा विघेशैः सह दक्षिणभागे पूज्यत्वेन निर्दिश्यन्ते । पटलेऽस्मिन्द्वादशश्लोके 'मूर्तिविघेशदानं तु' इति दर्शनादत्र मूर्तीनामपि पूज्यत्वं ज्ञायते । परं तु का वा ता मूर्तय इति न प्रतीयते । ततः पूर्वनिर्दिष्टांस्तत्तन्मन्त्रैरर्चयित्वा, तेभ्यो विप्रेभ्यो वस्त्रप्रावरणानि पञ्चाङ्गभूषणानि च दद्यात् । ततः प्रत्येकं नूतनवस्त्रे खारिप्रमाणतिलान्निक्षिप्य, तद्वस्त्रं कांस्यपात्रे विन्यस्य तत्पात्रमिक्षुखण्डेन नवफलेन च सह हेमशृङ्गां रौप्यखुरामरोगामेकां गां च तेभ्यो विप्रेभ्यो दानं कुर्यात् । तुलारोहविध्युक्तवत् सामान्यपूजां होमं, परमेश्वरविषये सहस्रकलशादिभिः स्नपनं महापूजां च विदध्या-



दित्युच्यते । ततोऽत्र रुद्रसूर्यविघेशमूर्तिदानेष्वेकं वा कुर्यादिति पक्षान्तरमुच्यते । ततोऽत्रानुक्तं तुलारोहदानविध्युक्तवदिति कथ्यते । एवमेकनवतितमपटलार्थसंग्रहः ।

द्विनवतितमे पटले सहस्रगोदानविधिर्निगद्यते । तत्र प्रथमं सिद्धये सहस्रसंख्यानां गवां दानं वक्ष्यामीति प्रतिज्ञा । ताः सवत्साः सगुणा एव गावः दानाय संग्राह्याः । तासु गुणवत्तरा अष्टौ गाः संपूज्य, तासां शृङ्गेषु निष्कप्रमाणस्वर्णेन ... राजतं खुरं, कण्ठे निष्केण स्वर्णेन पट्टं च बद्ध्वा, ताभ्यस्तृणं दद्यादित्युच्यते । वेदिकामण्डलकुण्डान्वितं मण्डपं तुलारोहविध्युक्तवत् कल्पयेत् । तुलारोहविध्युक्तवदत्र शिवपूजा होमश्च विधीयताम् । परमशिवाय सहस्रकलशादिभिः स्नपनं महापूजा च कर्तव्या । ततः शिवाय शिवविप्रेभ्यश्च दक्षिणायुता गावो देया इत्युक्त्वा दक्षिणा प्रतिपाद्यते । ततो दानकाले ... पठनीयं स्तोत्रमुच्यते । अन्ते चात्रानुक्तं यत्कर्म तत्तुलारोहविधिप्रकारेण कर्तव्यमिति सूच्यते । एवं द्विनवतितमपटलार्थसंग्रहः ।

त्रिनवतितमे पटले हिरण्याश्वदानविधिर्भण्यते । तत्र प्रथमं विजयार्थमिहागमे प्रोच्यमानं हिरण्याश्वदानमयुताश्वमेधफलदमित्यभिमतमित्युच्यते । ततोऽष्टोत्तरसहस्रेण तदर्धेन तस्याप्यर्धेन वाष्टोत्तरशतेन वा सुवर्णेन लक्षणान्वितमश्वं निर्माय तत्र रजतेन पञ्चकल्याणचिह्नाङ्कं कारयेत् । ततस्तुलारोहदानविध्युक्तप्रकारेण वेदिकामण्डलकुण्डान्वितं विधाय तन्मध्ये सर्वालंकारसंयुक्तं तं सुवर्णनिर्मितमश्वमुच्चैःश्रवा इति नाम निर्दिश्य न्यसेत् । मण्डलाभ्यर्चनं होमं कलशस्नपनादिकं तुलारोहविधिवत्कृत्वा सुरेन्द्रबुद्ध्या गन्धादिभिः समभ्यर्च्य विप्रेभ्यः पञ्चनिष्कं सुवर्णं प्रदाय तमश्वं विनिवेदयेदित्युच्यते । दीनान्धकृपणानाथांश्च भोजनादिभिस्तोषयेदित्यभिधीयते । एवं त्रिनवतितमपटलार्थसंग्रहः ।

चतुर्नवतितमे पटले कन्यादानविधिः कथ्यते । तत्र प्रथमं सर्वदानोत्तमं कन्यादानं वक्ष्यामीति प्रतिज्ञा । ततो यजमानः सर्वलक्षणसंपन्नां दोषवर्जितां विभिन्नगोत्रप्रभवां स्वानुकूलदिनोद्भवां कन्यां तत्पित्रोः संवादपुरःसरमुभयोश्चित्तं समवलोक्य, धनादिकं दत्त्वा, स्वीकृत्य, तां पुत्रीकृत्य, पुनः संस्नाप्य, वस्त्रैर्भूषणैर्गन्धमालाभिः संभूष्यानेन विधिना दानं कुर्यादित्युक्त्वा, कन्यादानविधिप्रकारोऽभिधीयते । तत्र तुलारोहविध्युक्तप्रकारेण वेदिकाकुण्डमण्डलान्वितं मण्डपं विधाय तद्विध्युक्तप्रकारेणैव देवेशं संपूज्य होमं च कुर्यात् । ततो दैवज्ञेनोदितं शान्तं शिवभक्तिसमन्वितं वरमीश्वरबुद्ध्या गन्धपुष्पमालादिभिः पञ्चाङ्गभूषणैश्च संपूज्य, तस्मै वराय वासोभूमिधनान्वितां गृहोपकरणोपेतां दासीदाससमन्वितां कन्यां सश्रद्धं शिवं संस्मृत्य दद्यादिति कन्यादानविधौ क्रियाकलापः प्रत्यपादि । अन्ते चैवं यः कन्यादानं कुर्यात्स यावन्ति कन्यारोमाणि तावद्वर्षशतं सुखी भवेदिति फलश्रुतिश्च दृश्यते । एवं चतुर्नवतितमपटलार्थसंग्रहः ।

पञ्चनवतितमे पटले हिरण्योक्षदानविधिः संक्षेपेण प्रतिपाद्यते । तत्र सहस्रेण पञ्चशतेन पञ्चाशदुत्तरद्विशतेन पञ्चविंशत्युत्तरशतेनाष्टोत्तरशतेन वा निष्केण सुवर्णेन सलक्षणं वृषं विधाय, तस्य ललाटे स्फटिकेनार्धचन्द्राभमाभरणं, राजतं खुरं, पद्मरागेण कर्णौ, गोमेदेन ककुदं कण्ठे रत्नचित्रां घण्टामालां च कुर्यात् । अन्यद् वृषाङ्गं किङ्किणीमाल्यावृतं विदध्यादित्युच्यते । ततस्तुलारोहदानविध्युक्तप्रकारेण वेदिकाकुण्डमण्डलान्वितं मण्डपं कृत्वा तन्मध्ये वृषं पश्चिमास्यं विन्यसेत् । वृषगायत्र्या तं पूजयेत् । तुलारोहविध्युक्तप्रकारेणैव शिवपूजां होमं च विदध्यात् । ततस्तं वृषं शिवाय शिवभक्तेभ्यश्च दद्यात् ।

ततः समिदाज्यचरूपेतं शान्तिहोमं वा कुर्यादिति विकल्पोऽभिधीयते । ततोऽनुक्तमिह यत्कर्म तत्तुलाभारविधिवद् गुरु समाचरेदिति हिरण्योक्षदानविधौ क्रियाकलापः प्रादर्शि । एवं पञ्चनवतितमपटलार्थसंग्रहः ।

षण्णवतितमे पटले गजदानविधिरुच्यते । सहस्रेण पञ्चशतेन पञ्चाशदुत्तरद्विशतेन पञ्चविंशत्युत्तरशतेन वाष्टोत्तर-शतेन वा निष्केण सुवर्णेन रजतेन वा गजं सलक्षणं कुर्यात् । ततस्तुलारोहदानविध्युक्तप्रकारेण वेदिकामण्डलकुण्डान्वितं मण्डपं विधाय तन्मध्ये गजेन्द्रं विन्यस्य गन्धपुष्पादिनार्चयेत । तुलारोहदानविध्युक्तवदेव शिवपूजां होमं च कुर्यात् । श्रद्धासमन्वितं गजेन्द्रं शिवाय शिवभक्तेभ्यश्च दद्यात् । अत्रानुक्तं सर्वं तुलाभारविध्युक्तवदनुष्ठेयमिति सूच्यते । एवं षण्णवतितमपटलार्थसंग्रहः ।

सप्तनवतितमे पटले लोकपालाष्टकदानविधिर्निगद्यते । तुलारोहदानविध्युक्तदेशे काले तथा तद्विध्युक्तप्रकारेणैव निर्मिते वेदिकामण्डलकुण्डान्विते मण्डपे तद्विध्युक्तवदेव शिवपूजां होमं च विधाय, सर्वलक्षणसंयुतानष्टौ शैवान्समाहूय, नववस्त्रो-परि सौम्यमुखमासीनांस्तान् गन्धपुष्पाद्यैर्लोकेशवाचकैर्मन्त्रैरर्चयेदित्युच्यते । अत्रैकस्मिन्स्थण्डिले कुण्डे वा होममाचरेदिति पक्षान्तरं सूच्यते । ततस्तेभ्यः शैवेभ्यो वस्त्रं प्रावरणं कम्बलं वाहनसहितं दद्यात् । भूषणैः सह शतनिष्कसमन्विता दक्षिणा दातव्येत्युच्यते । अत्रानुक्तं यत् किंचित्कर्म तत्तुलाभारवदाचरेदिति सूच्यते । अन्ते च लोकेशदानं सर्वसंपत्समृद्धिदं परचक्रप्रमथनं गजवाजिविवर्धनं पुत्रदं राष्ट्रवृद्धिकरं गोब्राह्मणहितावहं भवेदित्युच्यते । एवं सप्तनवतितमपटलार्थसंग्रहः ।

अष्टनवतितमे पटले सर्वदानोत्तमविधिः प्रतिपाद्यते । अत्र तुलारोहदानोक्तविधिवन्मण्डपं वेदिकाकुण्डमण्डलान्वितं कुर्यादित्युक्त्वा प्रपायां वा विधिमेनं समाचरेदिति विकल्पश्च सूच्यते । मण्डलमध्ये देवदेवेशं ब्रह्मविष्णुसमन्वितं गन्धाद्यैरर्चये-दित्युच्यते । ततः कुण्डे समाहितैः शेषहोमः कर्तव्य इत्युक्त्वा तत्र मन्त्राः प्रतिपाद्यन्ते । ततो ब्रह्मारम्भपश्चतुर्वेदविदो माद्याः । तेभ्यो द्विजेभ्यो ब्रह्मविष्णुशिवानुद्दिश्य यथान्यायं पञ्चाङ्गभूषणोपेतं सद्वस्त्रावरणान्वितं पृथक् पृथगनुत्तमं शतमष्टोत्तरं सुवर्णं दापयेत् । अत्रानुक्तं यत्कर्म तत्सर्वं पूर्वोक्तविधिना समाचरेदिति सूच्यते । एवमष्टनवतितमपटलार्थसंग्रहः ।

कामिकागमस्योत्तरभागात्मकोऽयं ग्रन्थः ५०११ कल्यब्दे मद्रपुरीस्थचिन्ताद्रिपत्तने शिवज्ञानबोधयन्त्रशालायाम् अकाप्पमुदलियार् महाशयैर्ग्रन्थलिप्यां प्रकाशितः । तस्य ग्रन्थस्याधुना दुर्लभत्वात् सकलदेशजनानां पठनसौकर्याय च सोऽय-मुत्तरकामिकाख्यो ग्रन्थो देवनागरीलिप्यां संशुद्ध्य दक्षिणभारतार्चकसंघाध्यक्षैः श्रीमद्भिः चे. स्वामिनाथशिवाचार्यैः प्रकाश्यते । अस्योपोद्घातस्तथास्मिन्ग्रन्थे विद्यमानानाम् (९८) अष्टनवतिपटलानामर्थसंग्रहोऽपि निवेशितः ।

अष्टाविंशतिमूलागमेषु प्रधानभूतस्यास्य कामिकागमस्य भागद्वयं पूर्वकामिकोत्तरकामिकाख्यमेतावता महता प्रयत्नेन प्राकाशि । ग्रन्थस्यास्य मुद्रणाय प्रतिलिपिकरणेन तथा मुद्रणसमये मुद्रणदोषपरिष्कारादिकरणेन च बहूपकृतवतां श्रीमतां रामानुजय्यङ्गार्–संबन्धशिवाचार्यवर्याणां चोपकारः सदा स्मरणीयः । आस्तिकजनानामुपकाराय महतो ग्रन्थस्यास्य प्रकाशकानां श्रीमतां स्वामिनाथशिवाचार्यवर्यैसन्ततीनामायुरारोग्यादिसकलसंपत्समृद्धिमामहेशोऽनुगृह्णीतामिति प्रार्थयामः ।

**N. R. BHATT**
Head of Sanskrit Department French Institute of Indology
PONDICHERRY

॥ श्रीः ॥

# पटलानुक्रमणिका

—: * :—

॥ श्रीः ॥

# ॥ कामिकागमः ॥

(उत्तरभागः)

—××—

## ॥ पश्चिमद्वारार्चनविधिः ॥

पश्चिमस्यार्चनं वक्ष्ये निष्कले सकलेऽपि वा ।
मिश्रे च गृहिणां योग्यं परार्थयजनार्थकम् ॥

राजराष्ट्रविवृद्ध्यर्थं भुक्तिमुक्तिफलप्रदम् ।
प्रातरावश्यकं शौचं कृत्वा स्नानं विधाय च ॥

सूर्यश्वेत्यादिभिर्मन्त्रैस्सन्ध्यासु तिसृषूदकम् ।
पीत्वा संमार्जयेत्तद्वद्धिरण्यवर्णेति चाद्भिः ॥

ओं भूर्भुवस्स्वादिमन्त्रेण वारत्रयमथाञ्जलिम् ।
पुनस्तेनैव मन्त्रेण दशवारं जपं नयेत् ॥

एतत्प्रतिदिनं कार्यं द्विजत्वप्राप्तिसिद्धये ।
श्रुतिस्मृत्यादिसंसिद्धमनुष्ठानं तु यद्भवेत् ॥ 5

आवश्यके तु शौचे वा स्नाने त्वाचमनेऽपि वा ।
सन्ध्याया वन्दने चापि तर्पणे होमकर्मणि ॥

गृहयज्ञादिके चान्यद् द्विजानां विहितं तु यत् ।
कर्तव्यं वा न कर्तव्यं शैवमावश्यकं मतम् ॥

स्वशास्त्रसन्ध्यामन्त्रादितर्पणं च विधाय च ।
व्रजेद्देवालयं तु पादशौचं विधाय च ॥

समाचम्य प्रविश्यान्तस्स्वासनस्थ उदङ्मुखः ।
त्रिपुण्ड्रं भस्मना कृत्वा सान्द्रेण धवलेन च ॥

करन्यासं ततः कृत्वा सुषिरं देहमध्यगे ।
ध्यात्वा ज्वलन्तं हुंकारं प्राणान् संयम्य निश्चलम् ॥ 10

फट्कारान्तं तु तेनैव रेचकेन समन्वितम् ।
पञ्चग्रन्थींस्ततो भित्वा तस्मात्प्रतिनिवृत्य च ॥

मूर्तिमन्त्रेण संगृह्य जीवं हुंकारमूर्धनि ।
कुम्भकेन समोपेतं वायुमूर्ध्वगतं नयेत् ॥

तेनैव द्वादशान्तस्थशिवेन सह योजयेत् ।
आत्मयोजनमेतत्स्यात् ततो भूतादि शोधयेत् ॥

निवृत्त्यादीनि भूतानि तान्यध्वानं समस्तकम् ।
व्याप्य व्यवस्थितानीति मत्वा तानि विशोधयेत् ॥

दहनं चाथ भूतानां परस्परविशोधनम् ।
मण्डलादिसमायुक्तं भूतशुद्धिरिहोदिता ॥ 15

शोध्योपरागरहितं कलापाशत्रयस्थितम् ।
विचिन्त्य दिव्यदेहार्थममृतप्लावनं नयेत् ॥

ध्यात्वा कुण्डलिनीं शक्तिम् अमृतैकस्वरूपिणीम् ।
तदुद्भूतामृतप्लावैस्सिक्तां दिव्यां कलां स्मरेत् ॥

ध्यात्वा हृदासनं तस्मिन् मूर्तिध्यानं समानयेत् ।
पुनराप्लावनं कृत्वा करन्यासं समारभेत् ॥

हस्तद्वन्द्वतलेऽस्त्रेण शोधयेच्च तदाश्रिते ।
तयोरस्त्राणि विन्यस्य नेत्रं करतले न्यसेत् ॥

शिवं साङ्गं च विन्यस्य भूयस्तत्र शिवं न्यसेत् ।
कवचेनावकुण्ठ्याथ सर्वकर्मसु योजयेत् ॥ 20

करन्यासस्समाख्यातोऽङ्गन्यासश्च कथ्यते ।
मूर्धादिपादपर्यन्तमङ्गब्रह्माणि विन्यसेत् ॥

मूलब्रह्माणि वा विद्वानष्टत्रिंशत्कलां न्यसेत् ।
शिवं हृदि यथास्थानं हृदयाद्यं निवेशयेत् ॥

नेत्रं नेत्रेषु विन्यस्य हेतिं दिक्षुगतं न्यसेत् ।
महामुद्रां ततः कृत्वा शिवमन्त्रमनुस्मरन् ॥

अष्टत्रिंशत्कलान्यासं हित्वा ब्रह्माणि विन्यसेत् ।
लिपिन्यासं ततः कुर्याद्रुद्रशक्तिसमन्वितम् ॥

श्रीकण्ठादिसमोपेतमक्षरन्यासमेव वा ।
केवलं मातृकान्यासं कुर्यात्तद्रहितं तु वा ॥ 25

एवं शैवतनुं कृत्वा ततोऽन्तर्यजनं नयेत् ।
पूजा होमस्समाधिस्स्याद्धृदि नाभौ ललाटके ॥

आत्मशुद्धिरियं ख्याता स्थानशुद्धिस्ततः परम् ।
हस्तास्फालनदिग्बन्धावकुण्ठैस्सा च संमता ॥

पात्रत्रयं समादाय यन्त्रिकाकारसंस्थितम् ।
पाद्यादित्रितयं तेषु कल्पयेद्विधिनामुना ॥

चन्दनोशीरसिद्धार्थदूर्वाकाश्मीरतोययुक् ।
उत्तमं पाद्यमुद्दिष्टं मध्यमं गतकुङ्कुमम् ॥

चन्दनोशीरयुक्ताम्भः पाद्यं कन्यसमुच्यते ।
वरालोशीरकर्पूरत्रुटजातिलवङ्गयुक् ॥ 30

मुरेणैव समायुक्तं श्रेष्ठमाचमनीयकम् ।
एलालवङ्गकर्पूरमुरजातियुतं समम् ॥

एलालवङ्गकर्पूरजलैस्सार्धं तु कन्यसम् ।
अद्भिःक्षीरकुशाग्रैस्तु यवाक्षततिलैर्युतम् ॥

शालिसिद्धार्थयुक् श्रेष्ठं यवसर्षपशालियुक् ।
तण्डुलैर्मध्यमं प्रोक्तं शालितण्डुलसंयुतम् ॥

अर्घ्यं कन्यसमुद्दिष्टमन्यथा च निगद्यते ।
सिद्धार्थचन्दनोशीरदूर्वायुक्पाद्यमेव च ॥

एलालवङ्गकर्पूरवरालफलसंयुतम् ।
एतदाचमनीयं वा यजेत यजनाङ्गके ॥ 35

कथितं चात्र वा ग्राह्यमन्त्रोक्तं तत्र वा भवेत् ।
यवसर्षपसद्व्रीहितण्डुलैरक्षतं भवेत् ॥

व्रीहितण्डुलसंयुक्तमक्षतं तत्प्रकीर्तितम् ।
पञ्चाङ्गमथवा त्र्यङ्गं केवलं चार्घ्यमेव वा ॥

कल्पयेद्धृदयेनैव किञ्चार्घ्ये संहितामनुः ।
द्रव्याण्यस्त्रेण संप्रोक्ष्य कवचेनावकुण्ठयेत् ॥

हृदाभिमन्त्र्य प्रत्येकं मुद्रयेदमृताख्यया ।
तिलकं चन्दनं कृत्वा पुष्पं शिरसि विन्यसेत् ॥

द्रव्यशुद्धिर्भवेदेषा प्रणवादिनमोऽन्तकम् ।
मन्त्रमुच्चारयेन्मन्त्री मन्त्रशुद्धिर्भवेदियम् ॥ 40

सामान्यार्घ्यं च संगृह्य द्वाराग्रे वृषभं यजेत् ।
गणपं भारतीमूर्ध्वे नन्दिनं जाह्नवीयुतम् ॥

महाकलेन यमुनां सव्येऽसव्ये समर्चयेत् ।
विमलं च सुबाहुं च तत्पयोश्च क्रमाद्यजेत् ॥

प्रविश्य सव्यपादेन देहल्यामस्त्रमर्चयेत् ।
वास्तोष्पतिं ततश्चेष्ट्वा पूजां पर्युषितां यजेत् ॥

अपनीय च तां लिङ्गाच्चण्डेशाय निवेदयेत् ।
पिण्डिकां शिवलिङ्गं च जलेन क्षालयेत् सुधीः ॥

लिङ्गशुद्धिरियं ख्याता शुद्धयः पञ्च चोदिताः ।
संपूज्य द्वारपान् चाथ पञ्चशुद्धिं समाचरेत् ॥ 45

विशुद्धयासनसंस्कारपचारस्कन्धसंयुतम् ।
यजनं देवदेवस्य सर्वकामार्थसाधनम् ॥

विशुद्धिः कथिता पूर्वमासनं चाधुनोच्यते ।
गणेशं च गुरुं शक्तिमनन्तं धर्मसंमुखान् ॥

अधर्मप्रमुखानन्ते छदने पद्मकर्णिके ।
वामादिनवसूर्यादिमण्डलं सेश्वरं यजेत् ॥



सिंहासनं तदन्ते च यजेत् स्वस्वमनुं स्मरन् ।
पञ्चासनात्मकं ह्येतदेकासनमुदीरितम् ॥

अनन्ताधारशक्तिभ्यां भवेदानन्तमासनम् ।
धर्माधर्मादिभिर्वर्गैश्छदनाभ्यां समन्वितैः ॥ 50

सिंहासनमिदं प्रोक्तं योगं मायाब्जमुच्यते ।
पद्मं वैमेश्वरं पद्ममण्डलं विमलासनम् ॥

स्नानावाहनकाल्यादौ पृथगेतान् प्रकल्पयेत् ।
संकल्प्यासनमेवं तु मूर्तिं तदुपरि न्यसेत् ॥

तस्मिन् ब्रह्माणि विन्यस्य चाष्टत्रिंशत्कला न्यसेत् ।
लिपिन्यासं तु वा कुर्याच्छ्रीकण्ठादियुतं तु वा ॥

अष्टत्रिंशत्कलोपेतपञ्चब्रह्माणि विन्यसेत् ।
विद्यादेहं ततो न्यस्त्वा शिवमावाहयेत्ततः ॥

स्थापनं सन्निधानं च सन्निरोधं [च कुण्ठनम्] समाचरेत् ।
स्वस्वस्थाने हृदादीनि विन्यसेदानुपूर्वकम् ॥ 55

शिवं तदुपरि न्यस्य तदेकीकरणं नयेत् ।
प्ररोचनं वा कर्तव्यं महामुद्राप्रयोगतः ॥

पाद्यमाचमनं चार्घ्यं दूर्वाद्यं विनिवेदयेत् ।
संस्कारा दश विख्याता उपचारैश्शिवं यजेत् ॥

गन्धं तु चन्दनाद्यं स्यादिष्टमानेन वा नयेत् ।
नानाविधानि पुष्पाणि नूतनानि प्रकल्पयेत् ॥

लघुचन्दननिर्यासप्रमुखैर्धूपमुच्यते ।
तैलाज्यकल्पितान् दीपान् कर्तुर्गन्धावसानन्नयेत् ॥

अनिर्वाणप्रदीपांश्च तथैव परिकल्पयेत् ।
आमन्त्रणहविः प्रोक्तं मुद्गाद्यं चाटकादिकम् ॥ 60

भूषणादि ततो दत्वा पुनर्धूपं निवेदयेत् ।
तस्मिन् मङ्गलगानैश्च सर्वतोद्यसमन्वितैः ॥

नानानृत्तसमायुक्तैस्तोषयेद्वृषभध्वजम् ।
आरात्रिकं ततो दद्याद्धूपदानावसानके ॥

भस्मना गन्धमिश्रेण स्वाङ्गुष्ठानामिकाग्रतः ।
भ्रामयित्वा ततस्त्यक्त्वा तिलकं दापयेच्छिवे ॥

दर्पणं दर्शयेच्छत्रं चामरं च निवेदयेत् ।
रात्रौ नीराजनं कुर्याद्दीपदानावसानके ॥

महाहविर्निवेद्यान्ते बलिहोमौ समाचरेत् ।
आमन्त्रणहविःकाले बलिं वा होममाचरेत् ॥ 65

उभयत्रोभयं वापि पृथग्वा परिकल्पयेत् ।
स्नपने मन्त्रगेयं वा वीणागानमथापि वा ॥

वेदाध्ययनमन्यद्वा स्तोत्रपाठादिकं च यत् ।
तदूर्ध्वे गौडभाषाद्यैर्गानं धूपान्तमाचरेत् ॥

ऊर्ध्वं द्राविडभाषाद्यैर्गानं नृत्तयुतं तु वा ।
संस्कृतं तदपभ्रंशं नानास्वरसमन्वितम् ॥

यदष्टादशभाषोत्थं गानं वा परिकल्पयेत् ।
नानादेशप्रसूतं च नर्तनं परिकल्पयेत् ॥

विशेषादुत्सवादौ च गान्धर्वैर्बहुभिर्युतम् ।
नित्योत्सवं ततः कुर्यान्नानास्त्रीभिस्समन्वितम् ॥ 70

रूपयौवनसंपन्ना योषितः कर्तृवाञ्छया ।
मम दास्यस्समाख्याता रुद्रकन्या भवन्ति चेत् ॥

तासां संख्या भवेद्ग्रामविन्यासजनसंख्यया ।
उत्सवस्स्यात्तदन्ते तु नित्योत्सवविधानतः ॥

वादकानष्टसंख्यातान् कल्पयेत् कल्पवित्तमः ।
तदन्ते शुद्धनृत्तं स्यात्तदन्ते चुल्लकोदकम् ॥

विसर्जनं ततः कुर्याल्लयाङ्गं चाथ विन्यसेत् ।
साधकेन च सिद्ध्यर्थं पूजामाहृत्य लिङ्गतः ॥

लिङ्गं संशोध्य भूयोऽपि गन्धाद्यैरर्चयेच्छिवम् ।
नैतत्प्रतिदिनं कुर्यात् किं तु साध्यावसानकम् ॥ 75

उत्तमं मध्यमं नीचं त्रिविधं स्यान्निवेदनम् ।
केवलैश्शुद्धशैवोक्तैर्मन्त्रैरुत्तममुच्यते ॥

मध्यमं शैववेदोक्तैरधमं वैदिकैर्मतम् ।
नित्ये नैमित्तिकेऽप्येतद्विधानं परिकीर्तितम् ॥

शैवमन्त्रसमो मन्त्रो नास्त्यत्र भुवनत्रये ।
तत्रापि मूलमन्त्रस्तु बीजात्मा श्रेष्ठ उच्यते ॥

प्रणवाद्याश्च ये मन्त्रा नियुताद्यक्षरात्मकाः ।
बीजमन्त्रसमुद्भूता रुद्राध्यायादयोऽपि च ॥

तदर्थं बीजमन्त्रं तु तत्स्थाने विनियोजयेत् ।
बीजाणुसदृशो नास्ति मम प्रीतिकरः परः ॥ 80

एतत्सर्वं तु सामान्यं पूर्वास्ये दक्षिणास्यके ।
कौबेरास्ये च लिङ्गे च सकले मिश्रलिङ्गके ॥

विशेषः पश्चिमद्वारे श्रूयतां पण्डितेश्वराः ।
प्राग्वदन्यत्समुद्दिष्टं विशेषः कश्चिदिष्यते ॥

द्वारस्याभिमुखं चोर्ध्ववक्त्रं देवं प्रकल्पयेत् ।
वामे वा दक्षिणे वापि स्थापनीया मनोन्मनी ॥

देवस्यन्मुखसंयुक्ता द्विहस्तैकमुखान्विता ।
ईशानमीशदेशे वा निरृतौ वा समर्चयेत् ॥

पुरुषं पूर्वदेशे वा पश्चिमे वाथ चिन्तयेत् ।
दक्षिणे चोत्तरे वापि बहुरूपं विचिन्तयेत् ॥ 85

उत्तरे दक्षिणे वापि वामदेवं स्मरेद्गुरुः ।
पश्चिमे पूर्वदेशे वा सद्यवक्त्रं स्मरन् न्यसेत् ॥

हृदयं वह्निदिग्भागे वायव्यां वा प्रकल्पयेत् ।
शिरश्चेशेऽथ नैरृत्यां शिखां पितरि वैशके ॥

कवचं वायुदिग्भागे आग्नेय्यां वा प्रकल्पयेत् ।
पूर्वस्मिन् पश्चिमे वापि चतुर्दिक्ष्वस्त्रमर्चयेत् ॥

पूर्वस्मात् पश्चिमाद्वापि विद्येशावरणं यजेत् ।
गणेशावरणं सोमाद्दक्षादारभ्य चार्चयेत् ॥

लोकेशाः प्राग्वदेव स्युर्वज्राद्याश्च तथा मताः ।
देवाग्रे वृषभः शूलं ध्वजस्थानं च गोपुरम् ॥ 90

परिवारार्चनं पूर्वदेशादारभ्य कारयेत् ।
वारुणादिनिरृत्यन्तं परिवारार्चनं तु वा ॥

नालो वामे प्रकर्तव्यस्सोमस्याभिमुखं यथा ।
चण्डेशस्त्वीशदेशे स्याद्भृङ्गराट् पितरि स्मृतः ॥

अन्यत्सर्वं समानं स्यात्पूर्वद्वारार्चनेन तु ।

इति उत्तरकामिकाख्ये महातन्त्रे पश्चिमद्वारार्चनविधिः प्रथमः पटलः

—X:X—

## ॥ दक्षिणद्वारार्चनविधिः ॥

वक्ष्ये दक्षिणवक्त्रार्चां त्रिप्रकारा तु सा स्मृता ।
लिङ्गे वा प्रतिमायां वा मुखलिङ्गे तु वा मता ॥

प्रतिमा दक्षिणास्या चेदुत्तमोत्तमसंज्ञका ।
मिश्रे तु मध्यमा प्रोक्ता लिङ्गेऽर्चा त्वधमा मता ॥

प्रतिमायां तु मध्ये यद् दक्षास्ययजनं द्विजाः ।
नृत्तमूर्तेर्विशेषेण त्वतिशोभनमिष्यते ॥

श्रेष्ठं पश्चान्मुखं लिङ्गं दक्षास्यं बेरमुच्यते ।
अव्यक्तं मोक्षदं लिङ्गं व्यक्तं भूतिप्रदायकम् ॥

भुक्तिमुक्तिप्रदं मिश्रमेवं ज्ञात्वा समाचरेत् ।
शौचमाचमनं स्नानं सन्ध्योपासनमेव च ॥ 5

कृत्वा शिवार्घ्यहस्तस्तु दक्षिणद्वारमाश्रयेत् ।
द्वारमस्त्रेण संप्रोक्ष्य द्वारपानर्चयेत् क्रमात् ॥

गणपं भारतीमूर्ध्वे मध्ये गङ्गां च नन्दिनम् ।
यमुनां च महाकालं गन्धर्वैः क्रमशोऽर्चयेत् ॥

संप्रविश्यान्तरे वास्तुगतं संपूज्य पूजकः ।
पूजयेत् पूर्ववक्त्रस्तु शिवं षड्गुणसंयुतम् ॥



लिङ्गार्चनं चेत् प्राग्वत् स्यादीशानं तु खगोचरे ।
अघोरं पुरुषं वापि दक्षिणे सम्यगर्चयेत् ॥

अघोरं वाथ सद्यं वा पश्चिमे तु समर्चयेत् ।
सद्यवक्त्रं तु वामं वा सौम्यदेशे समर्चयेत् ॥ 10

पुरुषं वाथ वामं वा पूर्वस्मिन् संप्रपूजयेत् ।
ईशानमग्निदेशे तु न्यसेत्पूर्वं मनोन्मनीम् ॥

पितृवाय्वग्निईशेषु हृदयादि व्यवस्थितम् ।
अथवा प्राग्वदेव स्याद्विद्येशा दक्षिणादितः ॥

गणेशाः पूर्वदेशे वा प्राग्वद्वा संप्रकीर्तिताः ।
पूर्वादारभ्य शक्राद्या वज्राद्याश्च तथा मताः ॥

सर्वं दक्षिणसंस्थं च बलिपीठं ध्वजादिकम् ।
प्राग्वदेव विधेयं स्यादन्यत्सर्वं समाहिताः ॥

लिङ्गार्चनं चेदेवं स्यादथ बेरार्चनं तु चेत् ।
तदुच्यते समासेन श्रूयतां मुनिसत्तमाः ॥ 15

लोहजे शैलजे वापि मृज्जे धातुजरत्नजे ।
चित्रहीने शिलाबिम्बे मूललिङ्गवदाचरेत् ॥

रत्नजे लोहजे पक्वमृण्मये बेरशोधनम् ।
अभीष्टदिवसे कुर्याच्चाष्टोर्ध्वं सपूर्वकम् ॥

मलसंमार्जनं पुण्यदिवसे स्नपनं मतम् ।
कर्मार्चायामथान्येषां मणिलिङ्गेऽथ पीठके ॥

अथवा बाणलिङ्गे वा दर्पणादौ समर्चयेत् ।
आधाराद्यनन्तं च धर्माद्यं हि चतुष्टयम् ॥

गात्रं तुर्यमधश्चोर्ध्वच्छदने पद्मकर्णिके ।
कामादनवकं सूर्यमण्डलाद्यं च साधिपम् ॥ 20

संपूज्य हृत्पुटे नेत्रमन्त्रं विशान्तं स्मरेत् ।
ईशानं सकले मूर्ध्नि पुरुषं वदने स्मरेत् ॥

अथापरं समानं स्यान्निष्कललिङ्गार्चनेन तु ।
कलान्यासस्तन्वाद्यातः प्रतिमानां विशेषतः ॥

प्रतिमालक्षणप्रोक्तं ध्यानमत्रोपलक्ष्यताम् ।
हृद्बीजात्पञ्चमे वर्णे षष्ठं बीजं नियोजयेत् ॥

मात्रात्रयसमायुक्तं मूर्ध्नि बिन्दुं नियोजयेत् ।
मन्त्रमेतत्समुच्चार्यावाहयेत् प्रतिमाहृदि ॥

न्यासमार्गेण संस्थाप्य संनिधाननिरोधने ।
विधायैवं हृदा पाद्यं पादयोस्तु निवेदयेत् ॥ 25

सिद्धार्थचन्दनोशीरदूर्वासङ्कल्पितं द्विजाः ।
एलालवङ्गकर्पूरवालफलकल्पितम् ॥

दद्यादाचमनीयं तु वक्त्रे तत्पुरुषाह्वये ।
क्षीरसिद्धार्थतस्येन्दुतिलशाल्यक्षतान्वितम् ॥

कुशपुष्पसमोपेतं दद्यादर्घ्यं तु मूर्धनि ।
यवसर्षपसद्व्रीहितण्डुलैरक्षतं भवेत् ॥

व्रीहितण्डुलसंयुक्तमच्युतं तत्प्रकीर्तितम् ।
पाद्यादिपञ्चकं ह्येतत् सकले निष्कलेऽपि च ॥

संमिश्रेऽपि विधेयं स्यादर्चने स्नपने मखे ।
पवित्रारोहणादौ च प्रोक्तं वाथ समाचरेत् ॥ 30

सर्वद्रव्यसमायुक्तं श्रेष्ठमित्यभिधीयते ।
एकहीनं तु मध्यं स्याद् द्वाभ्यां हीनं तु कन्यसम् ॥

त्रिभिर्हीनं तु नीचं स्यात्सर्वद्वारेषु योग्यकम् ।
गन्धं पुष्पं च धूपं च दीपं नैवेद्यमेव च ॥

ताम्बूलं मूलमन्त्रेण दद्यात्तु परमेश्वरे ।
बलिहोमोत्सवं नृत्तं यथाकालं समाचरेत् ॥

सन्ध्या तिथ्यर्धनाडी स्नपनयजननैवेद्यकल्पप्रकार्यं
नित्योक्तं चोत्सवान्तं भवति विधरयं शुद्धनृत्तक्रमेण ।
नाडीनामक्षिपक्षेर्दरदरदलहैर्व्योमचन्द्रेयथाव-
न्न्यूनेऽस्मिन्वचनाङ्गैस्समरशरमुनिरुत्थायेनाडयोऽथवा स्युः ॥

उत्तमोत्तमपूजा चेत्कालो यामद्वयेन तु ।
मध्यमे दशनाड्यस्स्याद्यामार्धेन कन्यसः ॥ 35

अन्तरा त्वष्टधा भक्त्वा नवधा कालमादिशेत् ।
कर्षणादिप्रतिष्ठान्तं कर्म संवत्सरोत्सवम् ॥

पवित्रारोहणं मासार्चनमङ्कुरवापनम् ।
नित्यार्चनादिकं सर्वं तन्त्रेऽस्मिन् प्रतिपादितम् ॥

समालोच्य विधेयं स्यात् सकले निष्कले शिवे ।
अनेनैव प्रकारेण न्यायेनान्वीक्ष्य देशिकः ॥

सौम्यवक्त्रेशपूजार्थं कारयेद्देशिकोत्तमः ।
अन्तरालं तु पूर्वस्यां दिशि व्यक्ते विशिष्यते ॥

किमत्र बहुनोक्तेन यस्य देवस्य यन्मुखम् ।
तस्य देवस्य सा प्राची निश्चिता द्विजसत्तमाः ॥ 40

तद्वशादपराः कल्प्या दिशो दिग्वेदिभिस्सदा ।

इति उत्तरकामिकाख्ये महातन्त्रे दक्षिणद्वारार्चनविधिर्द्वितीयः पटलः ॥

—(:—:)—

## ॥ सकलार्चनविधिः ॥

वक्ष्येऽहं सकलार्चां तु सर्वाभीष्टफलप्रदाम् ।
शौचमाचमनं स्नानं सन्ध्यावन्दनतर्पणे ॥

कृत्वा प्रविश्य हर्म्यं तु पादशौचं विधाय च ।
सम्यगाचम्य संगृह्य भसितं वारिणा सह ॥

त्रिपुण्ड्रं विधिना कृत्वा करन्यासं विधाय च ।
तत्करेण च संयोज्य शिवे ह्यात्मानमादरात् ॥

भूतशुद्धिं सुधाप्लावमात्मावाहनमेव च ।
करन्यासे च विन्यासो ब्रह्मणामीशपूर्वकम् ॥

स्वविग्रहकलान्यासे त्वीशानं मूर्ध्नि विन्यसेत् ।
पुरुषं वदने सर्वं मालामन्त्रमनुस्मरन् ॥ 5

अन्यत् पूर्वसमानं स्यादेकत्रिंशत्कला न्यसेत् ।
अन्तर्यागं ततः कृत्वा स्थानशुद्धिं ततो नयेत् ॥

विशेषार्घ्यं च संकल्प्य गन्धपुष्पाक्षतैर्युतम् ।
ईक्षणाद्यैश्चतुर्भिस्तु द्रव्यशुद्धिं तु पूर्ववत् ॥

कृत्वात्मानं समभ्यर्च्य मन्त्रशुद्धिं समाचरेत् ।
द्वारं संप्रोक्ष्य चास्त्रेण वृषमग्रे समर्चयेत् ॥

द्वारपार्श्वेऽथवापि गणपं च सरस्वतीम् ।
नन्दिनं च महाकालं गङ्गाद्यां यमुनामपि ॥

संपूज्योदुम्बरे शस्त्रं प्रविश्यान्तःपुटं पुनः ।
दत्वा पुष्पं च वास्त्वीशे दत्वार्घ्योदं शिरस्यथ ॥ 10

शिवस्येशानमन्त्रेण माल्यमपनीय च ।
शुद्धिं कृत्वा विधानेन पटाद्यैर्वोदकेन वा ॥

आधाराख्यमनन्तं च धर्मोऽधर्मादमेव च ।
अधश्चोर्ध्वच्छदे पद्मकर्णिके शक्तिपुञ्जकम् ॥

वामाद्यं हृदयोपेतं शिवासनमनुस्मरन् ।
तस्मिन्मूर्तिं समावाह्य विद्यादेहं प्रकल्पयेत् ॥

सदाशिवो महेशश्च रुद्रश्चेति त्रिधा मतः ।
शिवदेह इति प्रोक्तो विद्यादेहस्स उच्यते ॥

या तस्य विमला शक्तिश्शिवस्य समवायिनी ।
सैव मूर्तिः क्रियाभेदात् सदाशिवतनुर्मता ॥ 15

तथा माहेश्वरी मूर्तिः किन्तु सौम्यस्वरूपिणी ।
तद्वद्रौद्री समाख्याता किन्तु सोग्रस्वरूपिणी ॥

आसां कुण्डलिनी शक्तिः क्रियाख्यानं तु कारणम् ।
ब्रह्मा विष्णुश्च रुद्रश्च महेशश्च सदाशिवः ॥





एते कारणदेवास्तु क्षेत्रज्ञाः परिकीर्तिताः ।
ब्रह्मविष्ण्वोश्च मूर्तेस्तु माया कारणमिष्यते ॥

रुद्रेश्वरसदेशानां क्रियाख्या तनुकारिणी ।
रूपेण त्रिविधाः प्रोक्ता रुद्रेश्वरसदाशिवाः ॥

तथा ज्ञानमयो देहश्शिवस्य परिकीर्तितः ।
तद्देहत्रयसिद्ध्यर्थं मूर्तिमादौ प्रकल्पयेत् ॥ 20

ब्रह्मपुटेन संयोज्य तस्यां ब्रह्माणि कल्पयेत् ।
कलान्यासं ततः कुर्यात्तद्विधानमिहोच्यते ॥

सदेशे देहसिद्ध्यर्थमष्टत्रिंशत्कला मताः ।
रुद्रेशयोश्शरीरार्थमेकत्रिंशत्कला मताः ॥

अष्टत्रिंशत्कलान्यासं प्रागेव प्रतिपादितम् ।
एकत्रिंशत्कलान्यासे विशेषः कश्चिदिष्यते ॥

एकमेव शिरो वक्त्रं महेशे रुद्रविग्रहे ।
तत्रेशानेन वक्त्रेण मनुना सकलेन च ॥

मालात्मना विशिष्टं तु पूर्ववत् परिकल्पयेत् ।
ध्यात्वा सदाशिवं रूपं तच्चतुर्दशसंयुतम् ॥ 25

षष्ठस्वरसमोपेतं बिन्दुनादविभूषितम् ।
सान्तं हसंपुटं कृत्वा विद्यादेहं प्रकल्पयेत् ॥

बेरे सदाशिवे वापि लिङ्गेऽप्येवं समाचरेत् ।
महेशनृत्तमूर्त्यादिध्यानं शान्तमनुस्मरन् ॥

प्रतिमालक्षणोक्तं च महेशमनुना युतम् ।
कालान्तकगजघ्नादिरूपं रौद्रमनुस्मरन् ॥

तन्मन्त्रेण समोपेतं विद्यादेहं प्रकल्पयेत् ।
महेशरुद्रमूर्तौ च मन्त्रस्सादाशिवो यथा ॥

विद्यादेहार्थमुद्दिष्टस्सर्वतश्शिव एव च ।
आवाहस्य मनुर्मन्त्रोद्धारे प्रागेव कीर्तितः ॥ 30

तेनावाह्य शिवं देहत्रितये पूर्वकर्मणा ।
स्थापनाद्यं ततः कुर्यात् पाद्याद्यं च महेश्वरे ॥

गन्धं पुष्पं च धूपं च दीपं नैवेद्यमप्यथ ।
ताम्बूलसहितं सर्वं निष्कलार्चनवन्नयेत् ॥

पञ्चावरणसंयुक्तं चतुस्त्रिद्व्येकसंवृतौ
इष्टावरणसंयुक्तं प्रयुक्तविधिना गुरुः ॥

परिवारयुतं चेत्तु बलिं तस्मिन् समाचरेत् ।
होमं नित्योत्सवं वापि स्वप्रधाने समाचरेत् ॥

शुद्धनृत्तं च यन्नोक्तं सर्वं प्रकृतिवन्नयेत् ।
द्वारपालार्चनोपेतं बलिहोमसमन्वितम् ॥ 35

शुद्धनृत्तं च हित्वा वा कर्म सर्वं समाचरेत् ।
प्रदोषादौ नटेशस्य कुर्यान्नीराजनक्रियाम् ॥

उत्सवं स्नपनं चैव दमनारोहणक्रियाम् ।
पवित्रारोहणं सम्यक् कृत्तिकादीपमेव च ॥

संवत्सरादिलेखां च वसन्ताख्यं तदुत्सवम् ।
मासोत्सवं तथा मासे नवनैवेद्यकर्म च ॥

प्रायश्चित्तं च जीर्णानामुद्धारं च गुरूत्तमाः ।
देवोक्तमखिलं सर्वं देव्याश्चापि समाचरेत् ॥

किं चाषाढेऽश्विनीमासे पूर्वफल्गुनिसंगमे ।
पूरकर्मापि कर्तव्यमादिशक्तेर्द्विजोत्तमाः ॥ 40

गौरी महेश्वरे मूर्तिस्सदेशे तु मनोन्मनी ।
मनोन्मन्यणुना मूर्तिं मनोन्मन्याः प्रकल्पयेत् ॥

गौरीमन्त्रेण गौर्यास्तु षड्विंशतिकलान्विताम् ।
आदिशक्त्यणुना तस्यामादिशक्तिं प्रपूजयेत् ॥

इति उत्तरकामिकाख्ये महातन्त्रे सकलार्चनविधिस्तृतीयः पटलः

## ॥ स्नपनविधिः ॥

अथातस्संप्रवक्ष्यामि स्नपनं परमेष्ठिनः ।
अष्टम्यां वा चतुर्दश्यां विषुवायनसंक्रमे ॥

ग्रहणे मासनक्षत्रे चार्द्रायां पर्वणोर्द्वयोः ।
सुयोगे सूर्यवारे वा चोत्सवान्ते दिनत्रयम् ॥

कर्तुर्जन्मवियोगर्क्षे तस्याप्यनुदिनेऽथवा ।
राज्ञोऽभिषेकनक्षत्रे दुर्भिक्षे दुर्निमित्तके ॥

भूमिकम्पे दिशां दाहे ज्वरमार्यादिपीडने ।
प्रतिष्ठान्तेऽद्भुते सर्वरोगोत्पातग्रहे ॥

नित्ये नैमित्तिके काम्ये कारयेच्छंकरस्य च ।
स्नानं तु यथान्यायं तत्रानेकविधं भवेत् ॥ 5

अङ्कुरार्पणमादौ स्यान्महास्नपनकर्मणि ।
प्रागुक्तमण्डपे वापि वेदिकावर्जितेऽपि वा ॥

अथवा वैकल्पे तु तन्मानाद्यनपेक्षया ।
पञ्चहस्तादिषट्सहहस्तपर्यन्तकेऽपि वा ॥

चतुर्गात्रादिकेऽष्टाष्टगात्रपर्यन्तसंयुते ।
सर्वालङ्कारसंयुक्ते तोरणैरन्वितेऽपि वा ॥

नृत्तवाद्यादिसंयुक्ते गानध्वनिसमन्विते ।
अस्त्रेण शोधयेद् भूमिं वामदेवेन लेपयेत् ॥

सूत्रन्यासमघोरेण तालमात्रान्तरं यथा ।
द्वितालं शिवकुम्भस्य वर्धन्यास्तालमात्रकम् ॥ 10

त्रितालं कर्णिकामानं सर्वसामान्यमीरितम् ।
अथवोत्तरवीथ्यां स्यात् करकस्य स्थितिर्यदा ॥

तदा द्वितालमानेन कर्णिकामानमीरितम् ।
चतुर्दलं यदा पञ्चकलशस्थापनं दिशि ॥

विदिक्ष्वपि नवाख्यं स्यात् समन्तादेकमावृतम् ।
पञ्चविंशतिसंख्यात तत्समन्तत् समावृतम् ॥

एकोनपञ्चाशत्संख्यातमष्टोत्तरशते द्विजाः ।
आवृतित्रयसंयुक्तं तद्बाह्ये परिकल्पयेत् ॥

पञ्चविंशतिसंख्यातान् कलशान्मध्यमस्थितान् ।
परिहृत्य समन्तात्तु द्वाभ्यां वैकेन मार्गकम् ॥ 15

अष्टद्वारसमायुक्तं बहिश्चादावृतित्रयम् ।
मध्यमे तिथिसंख्यास्स्युर्नव कोणे व्यवस्थिता ॥

मध्यमे तिथिसंख्ये तु मध्यमत्रितयं त्यजेत् ।
अष्टोत्तरशतं होन्त् सहस्रं च नवाधिकम् ॥

चत्वारिंशच्च व्यूहं स्यात् पृथक् स्यात् पञ्चविंशतिः ।
एकद्वित्रिचतुर्भिस्तु पदैर्व्यूहान्तरं स्मृत ॥

मध्यव्यूहस्य परितश्चतुष्कुण्डं तु बाह्यकम् ।
स्वस्वसंख्यासमव्यूहे होमार्थं परिकल्पयेत् ॥

अन्तर्मार्गं समावाह्य वीथिश्शाखे संस्थिता ।
शिवव्यूहस्य परितश्चोदशैव परित्यजेत् ॥ 20

सूत्रन्याससमाख्यातसंख्याभि भविष्यति ।
अष्टोत्तरशताख्ये तु मध्यमे पञ्चविंशतिः ॥

मार्गबाह्ये तु कोणे स्यादेकविंशतिसंख्यकम् ।
शेषैर्दिक्षु चतुर्द्वारं सहस्रे पुनरुच्यते ॥

सूत्रद्वयं न्यसेत्पूर्वाग्रं याम्यसौम्यगम् ।
सार्धहस्तान्तरं हस्तमानान्तमथापि वा ॥

स्याच्चतुर्दशसंख्याना वीथ्यश्चैव क्रमेण च ।
तद्बहिर्होम इत्यस्याच्चतुर्दिक्ष्वष्ट दक्षु वा ॥

स्थण्डिलं पुरुषेण स्याच्चतुरश्रमिदं वरम् ।
त्र्यश्रं मध्यमं हीनं वृत्तमधममिति कीर्तितम् ॥ 25

हीनहीनतरं प्रधानमित्यभिधीयते ।
शालिमानमिदं तस्मात्तु नैव प्रयोजयेत् ॥



आरभ्य द्विगुणं त्वेकवृद्ध्या दशगुणावधि ।
मानं तु शिवकुम्भे स्यात् तस्यार्धं करके मतम् ॥

नवार्धे तण्डुलं विद्यात् तदर्धं तिलमानकम् ।
तिलार्धं लाजमानं स्यादष्टद्रोणं सहस्रके ॥

अष्टाधिकशिवव्यूहे शालिमानं प्रकीर्तितम् ।
हृदयेन न्यसेत् कुम्भान् स्वर्णादि विनिवेशयेत् ॥

शिवादिप्रस्थवृद्ध्या तु सप्तविंशतिमानकम् ।
शिवकुम्भस्य मानं स्यात् तदर्धं करके मतम् ॥ 30

चतुश्चाद्यैकसंख्यातप्रस्थमानप्रपूरितम् ।
कलशे वेष्टनं त्रिद्विव्योमसूत्रैः क्रमेण तु ॥

अथवा व्योमसूत्रेण त्रितयं परिवेष्टयेत् ।
कर्मणा विहितं तत्र कुम्भन्यासो हृदा मतः ॥

षट्त्रिंशद्दर्भपर्यन्तान् कुशांस्त्र्यादीनथ न्यसेत् ।
कुर्चावेशेन मन्त्रेण द्रव्यं मूलेन विन्यसेत् ॥

माणिक्यं चेन्द्रनीलं च वैडूर्यं च प्रवालकम् ।
मुक्ता च पञ्चरत्नं स्यादभावे हेम संमतम् ॥

निष्कपादं तु पादार्धं दशनाद्याष्टमापके ।
तयोरर्धं तदर्धं वा मार्गं वातिदरिद्रके ॥ 35

तस्माद्धि करकेऽर्धं स्यात् द्रव्याणि कलशेषु च ।
पाद्यमाचमनं चार्घ्यं पञ्चगव्यं च चतुर्दिशा ॥

गन्धोदं वाथ शुद्धोदं प्रथमे परिकीर्तितम् ।
कुशोदकं ततः क्षीरं दधि कोष्णं घृतं भवेत् ॥

गन्धोदं वाथ कोणेषु क्रमेणाष्टकमेव वा ।
द्वितीयस्नापनं प्रोक्तं तृतीयं च निरूप्यते ॥

मधुस्राजशकृच्चूर्णं लाजचूर्णहरिद्रकम् ।
भूर्नीक्षुसारकदलीतिलसर्षपपानगाः ॥

नालिकेरं च नारङ्गद्वयं स्यान्मातुलुङ्गकम् ।
दाडिमं त्वथवा बाह्ये मरिचक्षुद्रमादके ॥ 40

पनसाम्रकदल्युत्थनालिकेरकसर्षपान् ।
तिलबिल्वे तदन्ते तु मातुलुङ्गफलं मतम् ॥

नारङ्गद्वितयं तस्माद्यवनीवारध्वजकम् ।
सक्त्वन्ते त्वथवादौ वा क्षौद्रमित्यभिधीयते ॥

कुशं गुलं पयः पश्चात्सर्पिरं च लवङ्गकम् ।
तक्रोत्थं दधि मेधं च तिलोशीरघृतं शकृत् ॥

सक्तुकं नालिकेरं च हरिद्राचूर्णकं तथा ।
एवं त्रिविधकं नित्ये त्रितयं पञ्चविंशतेः ॥

पञ्चविंशतिमध्ये तु संत्यजेदन्तरावृतिम् ।
एवं कृते भवन्त्यत्र कलशानां तु षोडश ॥ 45

चतुर्दिक्षु च कोणेषु पाद्याद्यष्टकमीरितम् ।
अन्तरालेषु मध्यादि वसुसंख्याकमीरितम् ॥

ऊर्ध्वमेकोनपञ्चाशत् क्रमेण परिपठ्यते ।
गुलचन्दनलोहानि कुष्ठकक्कोलपुष्पकान् ॥

पत्रं कर्पूरनीरं च दान्तमांसीमुरं तृगम् ।
शमीदूर्वार्कशुक्लार्कबिल्वचम्पकशाल्मली ॥

अपामार्गं ततो विष्णुक्रान्तिर्धूर्धूरसंज्ञकम् ।
नन्द्यावर्तं सिताब्जं च चत्वारिंशन्नवाधिके ॥

अथवान्यप्रकारेण तदेव पुनरुच्यते ।
पाद्यमाचमनं चार्घ्यं गव्यं पूर्वादिदिक्षु वै ॥ 50

क्षीरं दधि घृतं क्षौद्रमाग्नेयादिविदिक्षु च ।
तक्रोलं भस्मनिर्यासं हरिबेरं च मञ्जरीम् ॥

नालिकेरं च बिल्वं च जम्बुकबोलपाटलीः ।
पुन्नागशङ्खपुष्पे च लक्ष्माख्यापनसे तथा ॥

सिंहीधुत्तूरसंज्ञे च षोडशात्र विनिर्दिशेत् ।
सदूर्वासर्षपाम्राणि नारङ्गपनसे मते ॥

कदली शतपत्रं च धातकी श्वेतलोद्ध्रकम् ।
इक्षुसारं च लाजं च चम्पकं गन्धतैलकम् ॥

नीवारकुङ्कुमतिलमाञ्जीमुरजसक्तुकम् ।
मातुलुङ्गं मलयजमगरूशीररात्रिजम् ॥ 55

पञ्चकलशौ च भ्रमाणि हित्वेशानं द्विजोत्तमाः ।
विद्येशा अष्टकलशौ स्युर्बाह्ये मूर्तीश्वरा दिशि ॥

अन्तरे वामदेवाद्याः पञ्चविंशतिसंख्यके ।
अष्टौ गणेश्वरा बाह्ये चाङ्गुष्ठप्रमुखास्तथा ॥

क्रोधाद्या वसुसंख्याताश्शतरुद्रादिकास्तथा ।
एकोनके तु पञ्चाशत्स्नपने देवता मताः ॥

कृत्वा पदानि षट्त्रिंशत् त्यजेदंशं चतुष्टयम् ।
द्वात्रिंशत् पदसंख्या स्यात् पार्श्वादीस्तत्र विन्यसेत् ॥

दक्षिणार्धे समारभ्य चोत्तरार्धसमाविधि ।
अत्रानुक्तमथैकोनपञ्चाशत्सदृशं मतम् ॥ 60

अष्टोत्तरशतं वक्ष्ये तच्च त्रिविधमुच्यते ।
चन्दनागरुकुष्ठानि कक्कोलं पुष्पपत्रके ॥

कर्पूरं ह्रिबेरं च दान्तं मांसी मुरं तृणम् ।
तृतीयावरणस्थानि द्रव्याणि द्वादशैव हि ॥

चम्पकं सहदेवी च शतपत्री च रोचना ।
बिल्वं यवशमीदूर्वातक्कोलं मेघसंज्ञकम् ॥

धात्री मोचफलं चैव लक्ष्मीभूम्यरविन्दकम् ।
रास्ना वच्या पलाशं च श्वेतार्कं करवीरकम् ॥

धातकीद्रोणधुर्दूरलोभ्रापामार्गकार्जुनाः ।
लक्ष्मीमपिप्पलीसंज्ञाविष्णुक्रान्तिनृपाह्वयाः ॥ 65

अश्वत्थं नागपुष्पं च चतुर्थे द्रव्यमीरितम् ।
तुलसी तगरं चैव तुरुष्कं तेजिनी पुनः ॥

विडङ्गं जीरकं कृष्णजीरकं च हरेणुकम् ।
श्रीवेष्टकं गन्धरसं फलिनी रक्तचन्दनम् ॥

गौरिपङ्कं व्याघ्रनकं वल्कलीं स्वर्णपुष्पकम् ।
दार्वी शुक्तिनखं दारु सिताह्वं च कुटंनटम् ॥

गुग्गुलुं चैव मृद्वीका सितेति गिरिकर्णिका ।
वटशृङ्गेन्द्रियाह्वं च फणिजंम्बु मनश्शिला ॥

शङ्खिनी भृङ्गराजश्च नीवारं गौरिकं तथा ।
आम्रं मोचरसं जातिः पाटली मार्जनं पुनः ॥ 70

पञ्चमावरणं ह्येतदन्यथा च निगद्यते ।
शमीदूर्वार्कबिल्वं च चम्पकं शङ्खपुष्पकम् ॥

अपामार्गं तथा विष्णुक्रान्तिर्धुत्तूरमेव च ।
नन्द्यावर्तं ततः प्रोक्तं श्वेतपद्मं ततो मतम् ॥

पुन्नागं जातिपुष्पं च पाटली सहदेविका ।
शतपत्रं च लक्ष्मीः स्याद् भूपद्मं धातकी पुनः ॥

तुलसी करवीरं च कृष्णवल्ली च मल्लिका ।
गोक्षुरा च शतावेरी ततस्तस्माद् कृताञ्जलिः ॥

महाद्रोणं पुनर्द्रोणं महाभद्रा च भद्रिका ।
इन्द्रवल्ली रुद्रपर्णी धान्यन्ते तु हरीतकी ॥ 75

व्याघ्रनख्या च मञ्जिष्ठं सरलं भद्रकोष्ठके ।
नवनीतं द्राविडाह्वं सर्जं तक्कोलसंज्ञकम् ॥

चञ्चलातिबला चैव बला सिंही प्रियङ्गुकम् ।
लोद्ध्रं च केसरं नागपुष्पं जम्बु कपित्थकम् ॥

अश्वत्थो गुग्गुलुश्चैव जीरकं कृष्णजीरकम् ।
क्षुतैलं कुङ्कुमं मेघमगरुं कृष्णरोचनम् ॥

श्रीवेष्टको गन्धरसः पिप्पली हस्तिपिप्पली ।
कृष्णागरुं च तगरं ततः प्रोक्ता मनश्शिला ॥

रक्तचन्दनसंज्ञं च लवङ्गं रात्रिचूर्णकम् ।
कषायं मार्जनं चान्ते स्नापयेद्धृदयाणुना ॥ 80

चतुःक्षीरकुजोद्भूतत्वक्सारस्स्यात् कषायकः ।
आम्रजम्बूतरुत्वक्सारो वा परिकीर्तितः ॥

दूर्वातिलकुशाग्रैस्तु मार्जनं त्वभिधीयते ।
अतिक्रान्तमिदं स्यादेकाशीतिघटस्थितौ ॥



पाद्यमाचमनञ्चार्घ्यं गव्यं दिक्षु विदिक्षु च ।
दधिपयोघृतक्षीरमग्नेः प्रभृति विन्यसेत् ॥

तिलं श्रीवृक्षपत्रं च चन्दनं मेघसंज्ञकम् ।
चम्पकं ह्रिबेरं च सर्षपन्नागकेसरम् ॥

तक्कोलं च फलं कुष्ठं कक्कोलं लोहसंज्ञकम् ।
लवङ्गपत्रकर्पूरान् बाह्ये षोडश विन्यसेत् ॥ 85

तृतीयावरणे सक्तून् अङ्कभूतघटेष्वपि ।
असित रात्रिचूर्णं च शकृच्चूर्णं क्रमेण तु ॥

धात्री च नालिकेरं च लिकुचं मातुलुङ्गकम् ।
तद्बाह्येऽग्न्यादिकोणेषु चतुरस्तस्तु विन्यसेत् ॥

तुलसी च सहदेवी च विष्णुक्रान्ति क्रमेण तु ।
कदल्याँ समायुक्तं चतुर्नवसु विन्यसेत् ॥

गुञ्जादिनिष्कपर्यन्तं पाद्याद्यङ्गप्रमाणकम् ।
एकद्वित्रिचतुःप्रस्थ पञ्चगव्यादिमानकम् ॥

गव्यमानं तथा प्रोक्तं पात्रमध्ये तथापि वा ।
आज्यतैलप्रमाणं च तथैव परिकल्पयेत् ॥ 90

कर्पूरकुङ्कुमादीनां मानमिष्टं प्रदीयताम् ।
मध्ये विद्येश्वराः पूज्याश्शतरुद्रा बहिर्मताः ॥

एवं त्रिविधरीत्या तु शतमष्टोत्तरं मतम् ।
नवसंख्यैर्नवव्यूहैः काष्ठाद्वितयमध्यगैः ॥

अष्टद्वारासमायुक्तैरेकाशीतिस्तु गम्यते ।
अष्टोत्तरसहस्राख्यमधुनात्र निगद्यते ॥

वराल्तु टङ्कपूरत्वगेलोशीरजातयः ।
एभिर्युक्तं शिवाम्भस्स्याच्छिवमन्त्राभिमन्त्रितम् ॥

तेनैव पूरयेत् कुम्भं वर्धनीं कलशानपि ।
पाद्यमाचमनं चार्घ्यं पञ्चगव्यं कुशोदकम् ॥ 95

क्षीरं दधि घृतं चैव प्रथमावरणे न्यसेत् ।
क्षौद्रं यवं गुलं चैव तिलं रम्भाफलं तथा ॥

सर्वं नालिकेराद्यं रजनी मातुलुङ्गकम् ।
लाजादाडिमसक्त्वाद्यान् पनसं पद्मचूतकम् ॥

पञ्चत्रिंशतिमध्यस्थद्रव्याण्येतानि षोडश ।
रत्नलोहजधातूनां बीजगन्धोदकं क्रमात् ॥

पूर्वस्मिन् संस्थितं ज्ञेयं कोणद्वयविवर्जितम् ।
मृन्मार्जनं परिमुखं मार्जनं पत्रपुष्पयुक् ॥

दक्षिणे पश्चिमे ज्ञेयं मान्याम्रफलतोययुक् ।
कषायाद्यंबोदकोपेतमुत्तरे पुनरुच्यते ॥ 100

कान्तमूलोदकं गन्धकूर्चं शान्त्युदकं फले ।
माणिक्यं चेन्द्रनीलं च वैडूर्यं च प्रवालकम् ॥

मुक्ता वज्रं ततः पुष्परागं स्फटिकखण्डकम् ।
मरकतं च रत्नानि नवरत्नानि पञ्चकम् ॥

पञ्चरत्नमिति ज्ञेयमाद्याभावे द्वितीयकम् ।
रत्नोदकमिति प्रोक्तं लोहोदकमतः परम् ॥

सुवर्णं रजतं ताम्रमायसं त्रपु सीसकम् ।
आरकूटं ततः कांस्ययुक्तं लोहोदकं स्मृतम् ॥

सौराष्ट्रमञ्जनं श्यामा हरितलं मनश्शिला ।
गैरिकं रोचना चान्ते धातूदकमिदं मतम् ॥ 105

शालिकोद्रवनीवारप्रियङ्गुतिलसर्षपाः ।
श्यामाकषाष्टिकयवैर्बीजोदकमिहोदितम् ॥

नवनीतं च कर्पूरं त्वगेलापत्रसंयुतम् ।
चन्दनं लघुकुष्ठं च वरालोशीरमुस्तकाः॥

कुङ्कुमं हरिबेरं च कक्कोलं जातिरेव च ।
एभिस्तु चूर्णितैर्युक्तं गन्धोदकमिति स्मृतम् ॥

पर्वते न नदीतीरे वल्मीके कर्कटावटे ।
वृषशृङ्गे च सत्क्षेत्रे समुद्रे गजदन्तके ॥

अष्टमृद्भिः समायुक्तं मृदम्भः परिकीर्तितम् ।
गोक्षुरं सहदेवी च विष्णुक्रान्तिः कृताञ्जलिः ॥ 110

शिरीषेन्दीवरं रात्रिरेभिर्मार्जनमुच्यते ।
दूर्वाङ्कुरश्च पद्मं च कुशाग्रं गौरसर्षपः ॥

भद्रा कृताञ्जलीयुक्तं परिमार्जनमुच्यते ।
तुलसी बिल्वपत्रं च तमालं च तपस्विनी ॥
अपामार्गशमीयुक्तं पत्रतोयं समीरितम् ।
पद्मं रक्तोत्पलं पश्चात् पाटली चम्पक तथा ॥
पुन्नागकुरवं नागनन्द्यावर्तं च मल्लिका ।
श्वेतार्कश्च कुरुबयुक्त पुष्पतोयमिहेरितम् ॥
कुष्ठं कुटन्नटं लोहं चन्दनं कुङ्कुमं तथा ।
कर्पूरोशीरसंयुक्तं गन्धोदकमिहेरितम् ॥ 115
शूलं कपालो हरिणो पिनाकं परशुस्तथा ।
पाशोऽक्षमालहमाश्च तैरस्त्रोदकं भवेत् ॥
पनसो नालिकेरश्च मातुलुङ्गद्वयं ततः ।
नारङ्गद्वयरम्भाभिर्युक्तमस्मिन् फलोदकम् ॥
पलाशोदुम्बराश्वत्थमधूकाः प्लक्षपाटली ।
जम्बूत्वगसनसमायुक्तं कषायोदकमीरितम् ॥
अभ्रकत्रितयं पश्चान्माक्षिकत्रितयं ततः ।
गन्धत्रयसमायुक्तमष्टतोयमिति स्मृतम् ॥
सूर्यकान्तस्तथास्कान्तो भ्रामकश्चन्द्रकान्तकः ।
निकृन्तः पञ्चभिर्युक्तं कान्तोदकमिति स्मृतम् ॥ 120
उशीरं हरिबेरं च पीवरी पुष्करं तथा ।
श्रीखण्डश्चेति पञ्चभिर्युक्तं मूलोदकं स्मृतम् ॥
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
एभिर्द्रव्यैस्समायुक्तं ब्रह्मकूर्चमिति स्मृतम् ॥
मयूरशिखिभूर्जत्वग्रोचनाभृङ्गराजकम् ।
कृताञ्जलिश्च पञ्चभिर्युक्तं स्याद्वल्कलोदकम् ॥
अग्निकोणात् क्रमात्तैलं क्षीरं दधि घृतं न्यसेत् ।
चत्वारिंशत्सु मध्यस्थकलशद्रव्यमीरितम् ॥
लक्ष्मी भद्रा कुशो दान्तो नीवारं चम्पकं पुनः ।
विभीता गोक्षुरा चाष्टौ गर्भावरणगा मताः ॥ 125

रक्तोत्पलं शमी पश्चात् पद्मं सुरसंज्ञकम् ।
नन्द्यावर्तमपामार्गं दूर्वा च करवीरकम् ॥
यवाह्वं द्रोणपुष्पं च विष्णुक्रान्तिश्च मल्लिका ।
जातिर्बिल्वं सितार्कं च एकपत्रारविन्दकम् ॥
द्रव्याणि षोडशैतानि प्रतिव्यूहं तृतीयकम् ।
सूत्रक्रममथो वक्ष्ये शिवकुम्भं तु मध्यतः ॥
तद्वामे वर्धनी ज्ञेया रत्नान्यष्टसु विन्यसेत् ।
माणिक्यं शिवकुम्भे तु पञ्चरत्नसमन्वितम् ॥
कर्णिका बहुदेशे तु दलमध्येऽष्टदिक्षु वा ।
पाद्यादिकं सहस्रं तु तद्वहिर्विन्यसेत् क्रमात् ॥ 130
पाद्यमाचमनं चार्घ्यं पञ्चगव्यं कुशोदकम् ।
क्षीरं दधि घृतं चैव प्रथमावरणे न्यसेत् ॥
द्वितीयावरणे स्वर्णं पदे षोडशसंख्यके ।
चतुर्विंशतिसंख्याते नालिकेरफलं बहिः ॥
द्वात्रिंशत्संख्यके प्रोक्तमिक्षुसारश्चतुर्थके ।
षट्त्रिंशाष्टके प्रोक्ते पञ्चमे मधु कीर्तितम् ॥
चतुष्षष्टियुते बाह्ये नानापुष्पं च कीर्तितम् ।
द्विसप्ततिसमायुक्ते सप्तमे सर्वबीजकम् ॥
अष्टमे चतुराशीतौ विन्यसेत् कदलीफलम् ।
नवमे षण्णवत्यां तु भसितं तदनन्तरम् ॥ 135
दशमे शतसंयुक्ते पञ्चगव्यं प्रकीर्तितम् ।
चतुर्युक्ते शते पञ्चसारमेकादशाह्वये ॥
अष्टोत्तरशते बाह्ये कषायोदकमुच्यते ।
धातुलोहोदकं पश्चाच्छते षोडशसंयुते ॥
शते विंशतिसंयुक्ते बाह्ये मृद्वारि कीर्तितम् ।
सर्वगन्धं च सर्वेषु कलशेषु विनिक्षिपेत् ॥
पञ्चविंशतिसंख्येषु प्रतिव्यूहं तु मध्यमे ।
घटं वा कलशं वापि चत्वारिंशत्तु संख्यया ॥
वर्धन्यर्थं सुवर्णं च वस्त्रकूर्चादिसंयुतम् ।
प्रत्येकं विन्यसेत् सम्यग् द्रव्यं वा विनिवेशयेत् ॥ 140





उत्तमं चोत्तमं विद्याद् द्रव्यन्यासे द्विजोत्तमाः ।
उत्तमार्गेषु सर्वं चेत्तुल्यं श्रेष्ठं प्रकीर्तितम् ॥
अर्धेन मध्यमं प्रोक्तं पादात् कन्यसमुच्यते ।
विशेषा मध्यमे देवास्त्वन्यत्र शिव एव हि ॥
स च नाम्नां सहस्रैस्तु पठ्यते तद्विशेषतः ।
पठित्वा पूजयेदीशं शिवनाम्नाथ केवलम् ॥
कूटाक्षरादिसंयुक्तं चतुर्थ्यन्तसमन्वितम् ।
स्वाहान्तं वा नमस्कारप्रान्तं प्रणवपूर्वकम् ॥
अष्टोत्तरसहस्रात्तु त्यजेद्वाह्याहुतिं गुरुः ।
तत्राग्नेयादिकोणस्थं चतुर्व्यूहं समाचरेत् ॥ 145
अन्तःकोणचतुष्केषु शिवव्यूहस्य बाह्यतः ।
स्थापयेदिक्षु होमार्थमेतेषामन्तरालके ॥
तद्बाह्ये षोडशव्यूहाः पूर्ववत् संव्यवस्थिताः ।
अन्यत् सर्वं समानं स्यादष्टपञ्चशतं भवेत् ॥
अष्टसंख्यासमायुक्ते द्विशते मध्यमेऽष्टकम् ।
तद्बहिः पञ्चविंशाच्च दिग्विदिक्षु प्रकल्पयेत् ॥
बाह्यात् षोडशसंख्याताद् गृहीयाद्दिग्विदिग्गतम् ।
अष्टव्यूहं तथात्वे तु उक्तसंख्यान्वितं भवेत् ॥
द्रव्याणां तु प्रमाणं यद्विस्तारात्पुनरुच्यते ।
रत्नानि स्वस्वरूपेण शस्तानि द्विजसत्तमाः ॥ 150
दशमाषादितद्वृद्ध्या निष्कान्तं लोहमानकम् ।
लोहवृद्ध्या तु मानं स्यात् तथा पाषाणमानकम् ॥
निष्कपादादितद्वृद्ध्या पलान्तं बीजमानकम् ।
तावत्तण्डुलमानं स्यात् सितामानं तथा मतम् ॥
किन्तु नन्दपलान्तं स्याद्द्विगुणं गुलमानकम् ।
गन्धद्रव्यप्रमाणं तु धातुवत्परिकीर्तितम् ॥
फलानि पत्रचूर्णानि तद्वत्त्वाजाश्च रुक्तवः ।
तिलसर्षपहारिद्रगोशकृद्भस्ममानकम् ॥

पञ्चगव्यदधिक्षीरमानं भस्मप्रमाणकम् ।
क्षीरवद्घृतमर्धं वा पादं क्षौद्रं तथा पलम् ॥ 155
पलाभावे यथालाभं शेषमद्भिः प्रपूरयेत् ।
घृतवत्तैलमानं स्यात् सर्वं वा पात्रमानवत् ॥
अर्धं पादं तदर्धं वा पुष्पं हस्तमितं भवेत् ।
ओषधिस्तत्समा प्रोक्ता तन्मानं च तथा मतम् ॥
तथैव पात्रमानं तु मूलमानं तु गन्धवत् ।
शुष्कपुष्पफलादीनां मानं गन्धवदिष्यते ॥
मृन्मानं पूर्ववत् प्रोक्तमन्यदप्येवमूह्यताम् ।
वज्रं समस्तरत्नानां लोहानामग्निदैवतम् ॥
यवो निखिलबीजानां धातूनां हरितालकम् ।
ओषधीनामभावे तु सहदेवी प्रशस्यते ॥ 160
फलानां कदलीजातं पत्राणां बिल्वपत्रकम् ।
नीलोत्पलं तु पुष्पाणामुत्पलं वा विधीयते ॥
चन्दनं सर्वगन्धानां मृदस्युर्दर्भमूलजाः ।
त्वचामश्वत्थजा प्रोक्ता मूलानां तु कुटन्नटम् ॥
सिताभावे गुलं प्रोक्तमिक्षूदक्षौद्रयोश्च तत् ।
फलपुष्पाद्यभावे तु तत्पत्रादिकमेव वा ॥
द्रव्याण्येतानि सर्वाणि मूलमन्त्रेण विन्यसेत् ।
पिधाय बीजमुख्येन शरावैः पल्लवैस्तु वा ॥
दत्वा हृदयमन्त्रेण वस्त्राणि विविधानि च ।
वर्जयित्वा तु कृष्णानि हीनानि शरहस्ततः ॥ 165
गन्धं स्वनाममन्त्रेण पुष्पं धूपं तथैव हि ।
दीपेन सहितं मन्त्री लिङ्गमुद्रां प्रदर्शयेत् ॥
कवचेनावकुण्ठ्याथ होमकर्म समारभेत् ।
सहस्रकलशे पञ्चशते होमं समाचरेत् ॥
कुण्डे वा स्थण्डिले वापि सर्वलक्षणसंयुते ।
कृत्वा कुण्डादिसंस्कारमग्निकार्योक्तवर्त्मना ॥

समिदाज्यान्नलाजांश्च तिलं वै होमयेत् क्रमात् ।
पलाशोदुम्बराश्वत्थवटाः पूर्वादितः क्रमात् ॥

शमीखदिरमायूरश्रीवृक्षाः पावकादितः ।
अष्टपक्षे तु समिधस्त्यजेत् कोणचतुष्टये ॥ 170

पञ्चपक्षे तु समिधस्त्यजेच्छम्यादिसंभवान् ।
चतुर्होमविधाने तु प्रधाने चाथ पूर्वके ॥

शतमर्धं तदर्धं वा मूलहोमः प्रकीर्तितः ।
मूलदशांशतोऽङ्गानां तथा ब्रह्मसुलोचने ॥

कृत्वा होमं प्रविश्यान्तर्द्वारपूजां विधाय च ।
प्रविश्य गर्भगेहं तु लिङ्गं संशोध्य पूर्ववत् ॥

संकल्प्य चासनं पीठे मूर्तिमावाह्य पूजयेत् ।
ब्रह्मभिस्सकलीकृत्य विद्यादेहं ततो न्यसेत् ॥

पाद्यादित्रितयं दत्वा गन्धपुष्पं सधूपकम् ।
दीपं च मूलमन्त्रेण दत्वातोयसमन्वितम् ॥ 175

नृत्तगेयसमायुक्तं शङ्खध्वनिसमन्वितम् ।
वेदस्तोत्ररवोपेतं घण्टानादसमन्वितम् ॥

जयशब्दसमोपेतं शिवकुम्भं च वर्धनीम् ।
उद्धृत्य नीत्वा देवाग्रे त्रिपादुपरि विन्यसेत् ॥

दत्वा घटस्थदेवाय देव्याः पाद्यादिकं त्रयम् ।
गन्धं पुष्पं सधूपं च दीपमर्घ्यं विधाय च ॥

अपनीय पिधानं तद् दक्षहस्तेन देशिकः ।
सकूर्चपुष्पतोयाढ्यं शिवमन्त्रं समुच्चरन् ॥

संगृह्य तत्वचित्तस्तु लिङ्गमूर्ध्नि मनुं न्यसेत् ।
देवेशीमपि तद्वामे देवस्य विनिवेशयेत् ॥ 180

शिवमन्त्रं स्मरन् कुम्भतोयेन स्नापयेच्छिवम् ।
पिण्डिकारूपिणीं देवीं स्नापयेत्तन्मनुं स्मरन् ॥

दत्वाजातेन पाद्यं तु पादयोस्तन्मुखेषु च ।
ईशानाद्यैश्च सद्यान्तैः पञ्चभिर्विनिवेदयेत् ॥

आचामं तस्य चूडान्ते शिरस्यर्घ्यं प्रदापयेत् ।
पञ्चगव्याभिषेकादौ महाघण्टारवान्वितम् ॥

उपस्नानसमायुक्तं धूपं वा विनिवेदयेत् ।
अवश्यमावृतान्ते स्यादुपस्नानं सधूपकम् ॥

नानाफलानि गन्धानि पञ्चामृतयुतानि च ।
विद्यन्ते चेत्तदा तैश्च स्नापयेत् परमेश्वरम् ॥ 185

विरूक्ष्य गन्धतोयेन स्नापयेल्लिङ्गमादरात् ।
अर्चनोक्तं समभ्यर्च्य होमं पेतं समापयेत् ॥

सकलस्नपनं चेत्तु सकलस्थापनोक्तवत् ।
आसनं संप्रकल्प्यास्मिन् कुम्भे मूर्तिमनुं न्यसेत् ॥

ब्रह्मभिस्सकलीकृत्य तत्कलास्तत्र विन्यसेत् ।
न्यस्त्वा विद्यातनुं तद्रूपं ध्यात्वा सदाशिवम् ॥

स्नपनार्थं च पाद्यादि कृत्वा हृदा गुरुः ।
गन्धं पुष्पं च धूपं च दीपमर्घ्यं विधाय च ॥

प्रदर्श्य लिङ्गमुद्रां तु कवचेनावकुण्ठयेत् ।
इष्ट्वा गौरीं च वर्धन्यां योनिमुद्रां प्रदर्श्य च ॥ 190

वर्मणा चावकुण्ठ्याथ रुद्रानावरणस्थितान् ।
पूर्वोक्तविधिना वापि क्रमेणावाह्य पूजयेत् ॥

गत्वा सकलसामीप्यमासनं मूर्तिमेव च ।
संकल्प्य सकलीकृत्य विद्यादेहमनुस्मरन् ॥

स्थापनार्थं ततः कृत्वा दत्वा पाद्यादिकं त्रयम् ।
गन्धं पुष्पं च धूपं च सदीपं विनिवेदयेत् ॥

प्राग्वद्घटं च करकं नीत्वा हृदि मनुं न्यसेत् ।
तत्तद्देवीमनुं देव्या हृदये विनिवेशयेत् ॥

स्नापयित्वा क्रमेणैव पाद्यादित्रिविभागकम् ।
देवे दत्वावशिष्टं तु देव्याश्च विनिवेदयेत् ॥ 195

पृथग्वा स्थापयित्वा तु देवेशीमभिषेचयेत् ।
पादमूलं च देवस्य गन्धाद्यैर्वाभिषेचयेत् ॥



चित्राद्ये दर्पणादौ च स्नापयेत् स्नपनोक्तवत् ।
देव्याश्चेत् स्नपनं मध्ये कुम्भं वा करकं न्यसेत् ॥

द्रव्येषु भेदो नास्त्यत्र देवताभेद इष्यते ।
शान्त्याद्याः पञ्चकलशौ सुवर्माद्या नवकल्पने ॥

धारिकाद्या महादिक्षु श्रीपाठवशमागताः ।
अनन्ताद्या विदिक्ष्वष्ट पञ्चविंशतिसंज्ञके ॥

पृथिव्याद्याः प्रधानान्तास्तत्र देवास्तु वा मताः ।
ऊर्ध्वे तु देवताः प्रोक्ताः श्रीलिङ्गान्तास्समीरिताः ॥ 200

अत्रैव स्नपनं वक्ष्ये क्षीराद्यैः द्विजसत्तमाः ।
पयोदधिघृतक्षौद्रपञ्चगव्यामृतैरपि ॥

इक्षुसारफलैस्सर्वबीजैर्लाजैश्च सक्तुभिः ।
चूर्णैर्हारिद्रकैः पुष्पैर्विशेषान्नालिकेरजैः ॥

सलिलैस्सत्फलोपेतैस्सद्घटादिषु संस्थितैः ।
गन्धोदैरौषधोपेतैः शुद्धोदैर्गन्धतैलतः ॥

गङ्गादिप्रभवैस्तोयैः पूर्वोक्तेन च कर्मना ।
स्नापयेत् परमेशानं सर्वदोषापनुत्तये ॥

सर्वाभीष्टप्रसिद्ध्यर्थं बलार्थं कान्तिहेतवे ।
सदारोग्यप्रसिद्ध्यर्थमायुष्यार्थे विशेषतः ॥ 205

सर्वसंपत्प्रसिद्ध्यर्थं राज्ञां विजयहेतवे ।
राष्ट्रदुर्भिक्षनाशाय तत्स्थदुष्टनिवृत्तये ॥

राष्ट्रक्षोभेऽद्भुतप्राप्तौ दुर्निमित्ते विशेषतः ।
वश्यार्थं सर्वलोकानां गजाश्वादिप्रवृद्धये ॥

तेषां रोगविनाशार्थं रोगानुत्पत्तिहेतवे ।
युद्धोद्योगे स्वसेनाया बलायामृतिहेतवे ॥

भयार्थं परसेनायाः क्षयार्थं तद्भ्रमार्थकम् ।
नरनारीगवादीनां रोगनाशार्थमेव च ॥

जन्मर्क्षे च दिने राज्ञामभिषेकोत्सुकेऽपि वा ।
तत्तच्चन्द्राष्टमर्क्षे वा तस्य वैनाशिकोत्सुके ॥ 210

अयने विषुवे वापि ग्रहणे स्थापनादिके ।
उत्सवे च पवित्रे च दमनारोपणेऽपि च ॥

कृत्तिकादीपनक्षत्रे चान्यस्मिन् मासऋक्षके ।
अष्टम्यां वा चतुर्दश्यां पञ्चम्यां वा विशेषतः ॥

मार्गशीर्षे च मासेऽथ चार्द्रायां तु विशेषतः ।
प्रायश्चित्तेषु तत्कार्यं नवनैवेद्यकर्मणि ॥

जनकल्याणकाले च नराणां रक्षणार्थके ।
विशेषपूजाकाले च भक्तानामुत्सवेऽपि च ॥

देवभ्रमणकाले वा मृगयायां विशेषतः ।
कुर्यात् प्रतिदिनं वापि त्रिसन्ध्यायां गुरूत्तमाः ॥ 215

सन्ध्याद्वये वा चैकस्यां स्नपनं कारयेच्छिवे ।
प्रागुक्तवर्त्मना कश्चिद्विशेषस्तत्र गद्यते ॥

कुम्भेनैकेन वा व्योमसंस्थेन कलशेन वा ।
प्रागुक्तद्रव्ययुक्तेन वर्धनीसहितेन वा ॥

पञ्चब्रह्माधिपैः पञ्चघटैर्वा कलशैस्तु वा ।
एकद्रव्ययुतैर्वापि वर्धनीसहितैस्तु वा ॥

इष्टद्रव्यं भवेन्मध्ये तद्वान्यत् करकस्थितम् ।
एकद्रव्यं चतुर्दिक्षु भिन्नद्रव्यमथापि वा ॥

पाद्यमाचमनं चार्घ्यं पञ्चगव्यं तु वा भवेत् ।
नवकुम्भविधानेऽपि विधानं सदृशं मतम् ॥ 220

एकद्रव्यं तु वा हीने दिक्षु पाद्यादिकं तु वा ।
स्वर्णादिनिर्मिते पात्रे विधानं चैतदीरितम् ॥

प्रागुक्तत्रितयं चैतद्विशेषान्नित्यकर्मणि ।
पञ्चविंशतिसंख्यातमपि नित्ये प्रशंसितम् ॥

उत्तमोत्तमपूजायामष्टोत्तरशतावधि ।
स्नपनं वा प्रकर्तव्यं नित्याध्यायप्रचोदितम् ॥

नैमित्तिकं तदूर्ध्वस्थं पूर्वोक्तमपि शंसितम् ।
पञ्चविंशतिसंख्यादिसाष्टसाहस्रकावधौ ॥

अन्तरावरणे कश्चिद्विशेषस्त्वभिधीयते ।
हित्वा चतुष्टयं कोणसंस्थितं तद्युतं तु वा ॥ 225

स्नापयेद्देवदेवेशमुदकैः प्राग्वदेव हि ।
श्रेष्ठपूजादिसंयुक्ते स्थाने स्नपनपूर्वकम् ॥

कर्म तद्द्विधेयं स्याच्छ्रेष्ठे हीनां क्रियां त्यजेत् ।
हीनकर्मणि न श्रेष्ठाः क्रियाश्शस्ता द्विजोत्तमाः ॥

नित्यं नैमित्तिकं काम्यं स्नपनं त्रिविधं मतम् ।
नित्यनैमित्तिके कुर्यात् प्रत्यवायजिघांसया ॥

काम्यार्थं काम्यकर्मेष्टं निषिद्धं न समाचरेत् ।
कर्तव्यं वा न कर्तव्यमिति सन्देहसंगतौ ॥

करणेऽभ्युदयो श्रेयोऽकरणे दोष इष्यते ।
समश्चेल्लोकशास्त्राभ्यां विधेर्न्यायस्समीरितः ॥ 230

ताभ्यामेव निषिद्धे तु सन्दिग्धं तत्परित्यजेत् ।
क्रियामन्त्रादिभेदेन शास्त्रभेदो न वा भवेत् ॥

क्रियामन्त्रादिभेदेन तन्त्रभेदो यतस्ततः ।
तस्मात्तत्र च शैवोक्तं कर्तव्यं नान्यशास्त्रतः ॥

प्रशस्तं नोदितं तत्र शास्त्रान्तरमथाश्रयेत् ।
तद्विधानानुपपन्ने तत्राप्येष विधीयते ॥

प्रायश्चित्तादिकेऽनुक्ते स्वशास्त्रे परशास्त्रतः ।
वर्तमाने तु शास्त्रार्थे तदङ्गं सकुलवादिकम् ॥

स्वशास्त्रसिद्धं वा ग्राह्यमथ शास्त्रान्तरोदितम् ।
एवमादिकमालोच्य कारयेद्यो नृपोत्तमः ॥ 235

सोऽचिरेण तु कालेन सकलाधिपतिर्भवेत् ।
तस्याप्यायुष्यमारोग्यं मनस्संकल्पितं च यत् ॥

सर्वं तत्र भवेत्तस्य शिवे भक्तिः प्रजायते ।
विपरीतक्रियां दृष्ट्वाप्यौदासीनं करोति यः ॥

स राजा क्षयमाप्नोति नात्र कार्या विचारणा ।
तस्मादाचार्यवर्येण पञ्चगोचरवर्तिना ॥

शैवागमपरिज्ञानपारगेण क्रियावता ।
क्रिया निर्वर्तनीया स्यात् स्वस्य राष्ट्राभिवृद्धये ।

गुरोर्गुरुतरो ग्राह्यः शिवशास्त्रविशारदः ।
तेनैव स्नपनार्थं तु कारयेन्मुनिसत्तमाः ॥ 240

विशेषपूजा तेनैव वर्तनीयेष्टसिद्धये ।
पयोदधिघृतक्षौद्रप्रमुखैर्देवमीश्वरम् ॥

संस्नाप्यामलपिष्टाद्यैर्विरूक्ष्येशं सवेदिकम् ।
गन्धतोयेन संस्नाप्य वाससा परिमार्जयेत् ॥

चन्दनाद्यैस्समालिप्य पट्टाद्यैर्भूषयेच्छिवम् ।
गन्धपुष्पस्रगाद्यैश्च धूपयेत्तदनन्तरम् ॥

कर्पूरवर्तिसंयुक्तं दीपमारात्रिकं नयेत् ।
पञ्चवर्णहविष्यं वा पायसं शुद्धमेव वा ॥

नानोपदंशसंयुक्तं नानाफलसमन्वितम् ।
दत्वा तदन्ते ताम्बूलं मुखवाससमन्वितम् ॥ 245

एलालवङ्गकर्पूरजातीतक्कोलचूर्णयुक् ।
मञ्जिष्ठाखण्डसम्मिश्रं मुखवासमिदं भवेत् ॥

प्रणम्याभ्यर्च्य लब्धाज्ञो होमार्थं कुण्डमाश्रयेत् ।
समिधाज्येन चरुणा तिलेनापि समन्वितम् ॥

शतमष्टोत्तरं हुत्वा पूर्णामन्ते समाचरेत् ।
तस्माद्भस्म समादाय यजमानाय दापयेत् ॥

संप्रार्थ्य वाञ्छितं कर्म प्रणमेच्च पुनः पुनः ।
दिनमेकं समारभ्य सप्ताहान्तं समाचरेत् ॥

द्विगुणं त्रिगुणं वापि चतुष्पञ्चगुणं तु वा ।
षट्सप्तगुणसंख्यातं कर्मसिद्ध्यन्तमेव वा ॥ 250

पूजा वैशेषिकी ख्याता पूर्वोक्तफलदायिनी ।
नैमित्तिकं च नित्यान्ते कर्तव्यमविरोधतः ॥

नित्ये प्रवर्तमाने तु यदा नैमित्तिकं भवेत् ।
समाप्याल्पेन कालेन नित्यं नैमित्तिकं चरेत् ॥



सन्ध्यापरार्धकाला चेत् पूर्वार्धे विद्यते यदि ।
नैमित्तिकं स्वकाले तु कर्तव्यमविचारतः ॥

सन्ध्यामध्यल्पकालेन चापरार्धे समाचरेत् ।
तन्त्रेण वाप्यनुष्ठानमुभयत्र समाचरेत् ॥

धूपान्तं वाथ नैवेद्यपर्यन्तं नित्यकर्म च ।
विधाय प्राप्तकाले तु नैमित्तिकमथाचरेत् ॥ 255

नैमित्तिकं महच्चेद्धि समारभ्य स्वकालके ।
एकाद्यावरणान्तं तु सन्ध्याशेषं समाप्य च ॥

सन्ध्यान्ते सर्वकलशैः स्नापयेदुक्तकर्मणा ।
नैमित्तिकद्वयप्राप्तौ महदादौ समाचरेत् ॥

उभयन्ते सदृशं तच्चेत् कामचारो विधीयताम् ।
नैमित्तिकस्य कालोऽपि द्विविधः परिकीर्तितः ॥

अल्पानल्पविभागेन स्वल्पस्स्यादयनादिकः ।
ग्रहणादिर्महाकालस्स्वल्पकालोऽग्रतो भवेत् ॥

ग्रस्यमाने रवौ कुर्यान्मुच्यमाने निशाकरे ।
भविष्यदयने दक्षे त्वतीते चोत्तरायणे ॥ 260

विषुवे मध्यकाले च स्नपनार्थं समाचरेत् ।
कन्यायां मिथुने मीने धनुष्यन्ते समाचरेत् ॥

सिंहे च वृश्चिके कुम्भे वृषे चादौ समाचरेत् ।
अर्धमेकं द्वयं वापि यामं वा घटिकामपि ॥

आदौ चान्ते च गृह्णीयात् स्नपनादिषु कर्मसु ।
आचार्यं पूजयेत् पश्चाद्वस्त्रहेमाङ्गुलीयकैः ॥

उपयुक्तमिह द्रव्यं यागे स्वर्णाम्बरादिकम् ।
आचार्याय प्रदेयं स्यान्नान्यभोगाय कल्पयेत् ॥

यागावशिष्टं यद्द्रव्यं भूषणं मण्डपस्थं च ।
स्थण्डिलं चाम्बरं स्वर्णं कुम्भं वा कलशादिकम् ॥ 265

तोरणं सुकुलवाद्यमङ्गलं नवरत्नकम् ।
तद्धोमवह्नेर्वेषशेषं यन्मण्डलस्य च ॥

वस्त्रं तत्प्रपाद्यं च यदन्यदुपयुक्तकम् ।
आचार्यायैव देयं स्यात् पञ्चगोचरवर्तिने ॥

निष्कादिदशनिष्कान्ता देशिके दक्षिणा मता ।
निष्काष्टमांशं हीनं स्यादधमांशं तदर्धकम् ॥

नवधा दक्षिणा क्षुद्रकर्मे स्याद्धीनवृत्तिके ।
नित्ये तु कल्पयेद्वृद्धिं मनस्संतोषणं यथा ॥

॥ इति उत्तरकामिके महातन्त्रे स्नपनविधिः चतुर्थः पटलः ॥

---

## ॥ नित्योत्सवविधिः ॥

नित्योत्सवविधिं वक्ष्ये नित्यपूजाङ्गमुत्तमम् ।
शिवाग्रे वाथ तद्वामे वामे शुद्धमहीतले ॥

प्रासादमण्डपादौ वा गोमयेनोपलेपिते ।
प्रोक्षितेऽस्त्रेण संस्थाप्य पात्रं लक्षणसंयुतम् ॥

सौवर्णं राजतं ताम्रं कांस्यनिर्मितमेव वा ।
तिथ्यङ्गुलं समारभ्य व्योमाङ्गुलविवृद्धितः ॥

द्वित्रिंशदङ्गुलान्तं तु पात्रमानमुदीरितम् ।
वृत्तमिष्टघनोपेतं कर्णिकादलशोभितम् ॥

तत्पात्रे रससप्ताष्टनवदिग्रुद्रभाजिते ।
एकद्वित्रिचतुष्पञ्चषड्भागैः कर्णिका भवेत् ॥ 5

शेषेण दलमाख्यातं विकाराष्टदलं मतम् ।
अर्धत्रिपादमात्रं वा द्विमात्रं कर्णिकोच्छ्रयम् ॥

तद्वदोष्ठसमोपेतं केवलं पात्रमेव वा ।
कुड्डपद्वयमारभ्य कुड्डपाधाढकावधि ॥

तण्डुलं कल्पयेदन्नं लिङ्गार्थं वाक्षतार्थकम् ।
मध्वाज्यमिश्रितं चान्नं प्रक्षिपेत् पात्रमध्यमे ॥

तेनान्नलिङ्गं कर्तव्यं भूतमात्रप्रमाणतः ।
एकाङ्गुलात्तु दैर्घ्यं स्याद्यावदष्टादशाङ्गुलम् ॥

अङ्गुलत्रयमारभ्य तिथिमात्रं तु विस्तरम् ।
अग्रं द्वित्रिचतुष्पञ्चमात्रं षण्मात्रमेव वा ॥ 10

नैमित्तिकार्थं नित्यार्थमन्नलिङ्गमुदाहृतम् ।
त्रिकालमन्नलिङ्गं वा प्रातर्मध्याह्नयोस्तु वा ॥

मध्याह्ने वाथ पूर्वाह्णे पुष्पलिङ्गमुदाहृतम् ।
प्रदोषे चाक्षतं लिङ्गं तत्र पाशुपतं यजेत् ॥

चन्द्रशेखरसंयुक्तं तद्विहीनकमेव हि ।
त्रिधा पाशुपतो ज्ञेयो मिश्रशान्तोग्रभेदतः ॥

सौम्यस्सौम्येक्षणोपेतो द्विचतुर्हस्तसंयुतः ।
विद्युन्मालानिभस्स्वेतो जटामकुटमण्डितः ॥

दक्षेऽभयाक्षमालायुगितरे वरपाशयुक् ।
वरदाभयपाणिर्वा सर्वलक्षणसंयुतः ॥ 15

हित्वाक्षमालां पाशं च पद्मं घण्टां क्रमेण वा ।
योजयेत् सौम्यमूर्तिस्स्यादुग्रमूर्तिरथोच्यते ॥

शूलमूलभये दक्षे शूलाभवरदेऽन्यतः ।
रौद्रदृष्टिं ज्वलत्केशं व्यत्यासकरशूलकम् ॥

त्रिशूलाक्षकरं वापि त्रिधा रौद्रं स्मरन्यजेत् ।
एवं रौद्रं तु मिश्रं स्यात् परशुं शूलमावहेत् ॥

दक्षे पाशं मृगं वामे त्वन्यथा वा निगद्यते ।
त्रिशूलमभयं सव्ये पाशं च वरदप्रदम् ॥

दधद्द्विधा समाख्यातं मिश्रं पाशुपतं त्रिधा ।
पुष्पाक्षतान्नलिङ्गेषु पूजनीयस्स्वमन्त्रतः ॥ 20

अथवा प्रतिमाकारो विधेयस्तु प्रमाणतः ।
सपीठे गोलकाकारे विपीठे वा तमर्चयेत् ॥

अन्नलिङ्गप्रमाणे तु मूलाग्रसमविस्तरे ।
हस्तावधिप्रमाणान्ते सर्वलक्षणलक्षिते ॥

स्थलिकामानदण्डेन सहितं वा समर्चयेत् ।
इन्दुशेखरमूर्तिस्स्यात् प्रतिमालक्षणेन तु ॥

पादुके त्र्यङ्गुले तस्मादङ्गुलाङ्गुलवर्धनात् ।
तिथिमात्रावसानं तु तयोर्दैर्घ्यं प्रकीर्तितम् ॥

दैर्घ्यानुसारतः कार्यो विस्तारस्सार्धं उच्छ्रयः ।
अष्टांशाधिको मध्ये मानेन नवमानकः ॥ 25

तयोस्तु वृषभः पूज्यस्त्वनन्तो वा प्रकीर्तितः ।
समन्ताल्लोकपाः पूज्याः पूजादाववसानके ॥

नवान्नलिङ्गसंयुक्तमथ नित्योत्सवं नयेत् ।
सर्वैरेतैस्समायुक्तं नित्योत्सवमथाचरेत् ॥

द्वाभ्यां त्रिभिश्चतुर्भिर्वा पूर्वाह्णे च प्रदोषके ।
मध्याह्ने केवलः पूज्यो देवः पाशुपताह्वयः ॥

रङ्गे वा शिबिकायां वा परिचारकमूर्धसु ।
आरोप्यालङ्कृतान्देवान्वितानेन समन्वितम् ॥

छत्रचामरसंयुक्तं नानाध्वजसमन्वितम् ।
गीतनृत्तसमायुक्तं वाद्यध्वनिसमन्वितम् ॥ 30

धूपदीपसमायुक्तं प्रदक्षिणं समाचरेत् ।
आद्यं प्रदक्षिणं कुर्यान्मल्लिणीतालसंयुतम् ॥

वृषस्य ब्रह्मतालं स्यादग्नेस्तालं तु भृङ्गिणी ।
मातृणां चण्डवाद्यं स्याद्विघ्नराजस्य ढक्करी ॥

षण्मुखस्योद्घटं चैव ज्येष्ठायाः कुञ्चितालकम् ।
तटप्रहारं दुर्गायाश्चण्डके विषमचिह्नकम् ॥

ग्रामे वा नगरे वापि तथा प्राकार एव वा ।
द्वितीयभ्रमणं ह्येतन्महापीठप्रदक्षिणम् ॥



एकं वापि द्वयं वापि त्रयं स्याच्छत्ररीयुतम् ।
अथवा बलीपीठं तु ब्रह्मतालसमन्वितम् ॥ 35

गणतालेन संयुक्तं द्वयं कुर्यात् प्रदक्षिणम् ।
पैशाचे त्वेकमेवं स्याच्छत्ररीतालसंयुतम् ॥

गोपुरे वाद्यहीनं वा शङ्खध्वनिसमन्वितम् ।
इन्द्रस्य समतालं स्यात् गान्धारस्वरसंयुतम् ॥

बहवाणं भवेदग्नौ कोळीगानसमन्वितम् ।
दक्षिणे भृङ्गिणीतालं कौशिकेन समन्वितम् ॥

मल्लतालं समाख्यातं नैर्ऋत्यां नट्टभाषया ।
पश्चिमे नवतालं तु कामरध्वनिसंयुतम् ॥

वायव्यां बलितालं तु तक्केशीस्वरसंयुतम् ।
सौम्यायां कोटिकः प्रोक्तस्तर्करागसमन्वितम् ॥ 40

शालापाणिसमायुक्तं शांकरे ढक्करी मता ।
एवं प्रदक्षिणं कृत्वा तृतीयं धाम संविशेत् ॥

प्रक्षालिताङ्घ्रयस्सर्वे प्रविशेयुश्शिवालयम् ।
अथवा मण्डपादौ तु पीठसंस्थानमूर्तिषु ॥

पाद्याद्यैरुपचारैस्तु पूजयित्वा प्रवेशयेत् ।
लिङ्गादेवं समाहृत्य लिङ्गदक्षे निवेशयेत् ॥

शिवस्य पादौ वा पूज्यौ पादुके दक्षवामगे ।
अन्येषामपि देवानां देवीनां मूलबिम्बवत् ॥

रूपान्तरं वा स्थाप्यायसिद्धं नित्योत्सवार्थकम् ।
संपाद्य तेन नित्यं तु नित्योत्सवमथाचरेत् ॥ 45

तदन्नमन्नलिङ्गादि पूजनीयं स्ववाहनम् ।
पादुकाद्वितये पूज्यमन्यत्सर्वं समानकम् ॥

॥ इति उत्तरकामिके महातन्त्रे नित्योत्सवविधिः पञ्चमः पटलः ॥

---

## ॥ महोत्सवविधिः ॥

उत्सवं संप्रवक्ष्यामि यथावदनुपूर्वकम् ।
ध्वजारोहावरोहान्ता क्रिया उत्सव उच्यते ॥

ध्वजाङ्कुरो ध्वजाङ्गं स्याद् ध्वजात्पूर्वं तु तन्नयेत् ।
तीर्थर्क्षमादौ निश्चित्य तत्पूर्वे त्रिगुणेऽपि वा ॥

द्विगुणे तद्दिने वाऽपि ध्वजारोहणमारभेत् ।
मासभं तीर्थनक्षत्रमार्द्रर्क्षं सर्वमासके ॥

राज्ञां जन्मावसानर्क्षमभिषेकर्क्षमेव वा ।
माघमासे तु षष्ठ्यन्तं पर्वान्तं सर्वमासके ॥

विषुवायनपर्यन्तं ग्रहणान्तं तु तीर्थकम् ।
भूताष्टम्यन्तमन्येषां स्वस्वतीर्थावसानकम् ॥ 5

त्रिगुणे द्विगुणे वापि तद्दिने वाह्नि रात्रिके ।
अधिवासनपूर्वं तु ध्वजमारोपयेद् गुरुः ॥

पञ्चहस्तादि विश्रान्तं ध्वजदैर्घ्यं प्रकल्पयेत् ।
मानमेतत् समाख्यातं शिरःपुच्छान्तरे द्विजाः ॥

तत्संयुक्तं च वा प्राग्वं चतुस्सप्तसमावधि ।
भागं कृत्वैकभागेन पटविस्तार उच्यते ॥

विस्तारेण समः पुच्छस्त्रिपादं वार्धमुच्यते ।
विस्तारार्धं शिरो ज्ञेयं पुच्छद्वयसमन्वितम् ॥

वेत्रद्वयसमायुक्तं तन्मध्ये वृषभं लिखेत् ।
छायादिशुभसंयुक्तं स्थितं वा शयनान्वितम् ॥ 10

श्वेतं वा रक्तवर्णं वा पीतवालसमन्वितम् ।
रक्तशृङ्गसमायुक्तं तद्वत्खुरसमन्वितम् ॥

ग्रामाभिमुखसंस्थानं प्रमादिभ्रमणे वृषम् ।
विश्वामित्रादिषट्त्रिंशन्मात्रोत्सेधसमन्वितम् ॥

जाल्यायांशसमायुक्तं त्रिवर्णनयनान्वितम् ।
सर्वलक्षणसंयुक्तं वर्णमालासमन्वितम् ॥

मानमात्राङ्गुलाभ्यां स्याद्ध्वजदण्डः पटो वृषः ।
पद्मासनसमायुक्तं पार्श्वे दीपद्वयान्वितम् ॥

चामरद्वयसंयुक्तं छत्रसंवृतमस्तकम् ।
पूर्णकुम्भयुतं वापि त्रिशूलेनयुतं न वा ॥ 15

एवं वृषं समापाद्य कृत्वा नेत्रविमोक्षणम् ।
अस्त्रतोयेन संप्रोक्ष्य शिवाग्रे मण्डपेऽपि वा ॥

मनोरमेऽन्यदेशे वा स्थण्डिलद्वयसंयुते ।
स्थण्डिकोर्ध्वे न्यसेत्पात्रं त्रिपाद्युपरि संस्थितम् ॥

ध्वजं नवघटं वस्त्रहेमरत्नं सकूर्चकम् ।
सापिधानं ससूत्रं च मध्यमे वृषभाधिपम् ॥

कलशैरष्टसंख्यातैस्सापिधानैस्सवस्त्रकैः ।
सलोकपैस्सकूर्चैस्तु वृतं वृषभपूर्वकम् ॥

आधाराद्यमनन्तं च धर्माद्यं च चतुष्टयम् ।
वृषासनपदं चोक्त्वा चतुर्थ्यन्तं हृदान्वितम् ॥ 20

प्रणवादि नमोन्तं च कृत्वोक्षासनमत्र हि ।
वकारं हृत्पुटं कृत्वा वृषमूर्तिं प्रकल्पयेत् ॥

ऊर्ध्वे ब्र[illegible] विन्यस्य मूलं तत्र कल्पितं न्यसेत् ।
संकल्[illegible]हृदादींश्च क्रमेण विनिवेशयेत् ॥

तत्त्वतत्त्वेश्वरोपेतं मूर्तिमूर्तीश्वरान्न्यसेत् ।
आवाहनादिकं पूर्वं प्रमुखं वृषमूलतः ॥

कृत्वा वृषभगायत्र्या गन्धाद्यैः क्रमशोऽर्चयेत् ।
मध्यकुम्भेऽपि संपूज्य लोकपान् परिपूजयेत् ॥

कुण्डे वा स्थण्डिले वापि पूर्ववत्परिकल्पिते ।
निरीक्षणादिसंस्कारैश्शिवाग्निं संप्रकल्पयेत् ॥ 25

तन्मध्ये वृषमावाह्य साङ्गं संतर्पयेत्तदा ।
समिधाज्येन चरुणा शतेनाष्टोत्तरेण च ॥

तत्त्वतत्त्वेश्वरादींश्च होमयेत्तदनन्तरम् ।
पूर्णां दत्वास्य मूलेन सर्वकामप्रपूरणीम् ॥

संपूज्य गन्धपुष्पाद्यैर्मुद्गान्नं तु निवेदयेत् ।
पटस्थाय घटस्थाय वृषायासनरूपिणे ॥

प्रातस्संपूज्य गन्धाद्यैः पटं कुम्भं यथाक्रमम् ।
मुखवासं च ताम्बूलं वृषभाय निवेदयेत् ॥

पुनः पूर्णाहुतिं दत्वा सर्वमङ्गलसंयुतम् ।
सर्वातोद्यसमायुक्तं नृत्तवाद्यसमन्वितम् ॥ 30

रङ्गे वा शिबिकायां वा समारोप्य वृषध्वजम् ।
त्रिशूलेन समायुक्तं देवेशेन युतं न वा ॥

ग्रामप्रदक्षिणं नीत्वा प्रविशेदालयं प्रति ।
दण्डं संस्थापयेत्पश्चात् सर्वलक्षणसंयुतम् ॥

ध्वजारोहदिने वापि अधिवासदिनेऽपि वा ।
धामोच्चतारसदृशो द्विगुणस्त्रिगुणोऽपि वा ॥

एकादितलपर्यन्तं गोपुरान्तमथापि वा ।
षट्सप्तवसुहस्तेन दण्डः स्यादधमत्रये ॥

रुद्रद्विगुणमध्यस्थकरसंख्यामितिस्तु वा ।
मध्ये कनीयसे चेत्तु खातं चेत्तद्बहिष्कृतम् ॥ 35

सर्वस्थूलैकवृक्षो वा त्वक्सारः क्रमुकादिकः ।
पलाशखदिराश्वत्थवटचन्दनदारवः ॥

सालं मधूकं तालं वा सारात्मकमथापि वा ।
वैणवं जातिवृक्षं वा शमीबिल्वमथापि वा ॥

चम्पको वा द्विरष्टादित्रिगुणावधिनाहयुक् ।
स्वभावनाहसंयुक्तस्त्वक्सारद्रुमनिर्मितः ॥



[illegible]जदण्डस्समाख्यातो ध्वजयष्टिश्च कथ्यते ।
[illegible]भागादिनवांशान्तं दण्डदैर्घ्यं विधाय च ॥

एकांशेन विधातव्या ध्वजयष्टिर्गुरूत्तमाः ।
पञ्चाङ्गुलं समारभ्याङ्गुलवृद्ध्या षोडशाङ्गुलम् ॥ 40

यावत्तावत्परीणाहमुपदण्डस्य कल्पयेत् ।
पञ्चांशाद् द्वादशांशान्तं मूलनाहं विधाय च ॥

एकांशेनोनमग्रं स्यात्तथा दण्डाग्रमिष्यते ।
दण्डोक्तो वेणुवृक्षो वा ध्वजयष्टिमहीरुहः ॥

उभयोर्योगसिद्ध्यर्थं स्कन्धत्रयमथाहरेत् ।
स्कन्धद्वयं वा तद्दैर्घ्यं द्वादशाङ्गुलमानतः ॥

षट्त्रिंशन्मात्रपर्यन्तं स्कन्धदैर्घ्यं प्रकल्पयेत् ।
सप्ताङ्गुलं समारभ्य गायत्र्याङ्गुलकावधि ॥

चतुस्त्रिद्व्यङ्गुलं वापि मानमेषां प्रकीर्तितम् ।
स्कन्धविस्तार उद्दिष्टो मूलाग्रे तु त्रिभागतः ॥ 45

अर्धेन वा त्रिपादेन दर्व्याकारो यथा तथा ।
मूलाग्रसुषिरोपेतो दण्डयष्ट्यनुरूपतः ॥

अर्धच्छिद्रमथस्कन्धप्रान्ते यष्ट्यग्रदेशके ।
दण्डप्रान्ते विधेयं स्याद्वलयं स्कन्ध एव वा ॥

बृहत्स्कन्धत्रिभागार्धं त्रिपादगुणमानतः ।
षडङ्गुलं समारभ्य षडङ्गुलविवृद्धितः ॥

दण्डखातप्रमाणान्तं दण्डाग्राद्वलयस्थितिः ।
तदर्धं वलयादूर्ध्वं यष्ट्यग्रं परिकीर्तितम् ॥

भूप्रविष्टप्रमाणं यद्दण्डाग्रे यष्टिदैर्ध्यकम् ।
कल्पयेन्महदल्पं वा खातं चेत्तद्बहिष्कृतम् ॥ 50

दण्डाग्रावधिसंस्थाप्यो वलयः स्कन्ध एव च ।
पञ्चविंशतिमात्रादि त्रित्र्यङ्गुलविवर्धनात् ॥

द्विगुणान्तं विधेयं वा भूमानं भूगतं द्विजाः ।
एकाङ्गुलं समारभ्य पादमात्रविवृद्धितः ॥

त्रिमात्रान्तो विधेयस्स्याद्वलयः कीलसंयुतः ।
वल्याकाश एषो वा वल्यस्याथाथावलम् ॥

रज्जुर्वलयमध्ये स्याज्ज्येष्ठाद्यङ्गुलनाहयुक् ।
ध्वजारोहक्रियायोग्यदैर्घ्येण च समन्वितः ॥

तन्तुजस्त्रिप्रदिष्टस्स्यादशक्तौ बन्धनार्हकः ।
एवं रज्जुं समापाद्य शुद्धिं दण्डे विधाय च ॥ 55

संवेष्ट्य दर्भमालाभिरूर्ध्वादिक्षक्रमेण तु ।
शतदर्भकृतं कूर्चं यष्ट्यग्रे विनिवेशयेत् ॥

अस्त्रमन्त्रेण संप्रोक्ष्य शिवतत्त्वादिकं न्यसेत् ।
साधिपं च त्रिधा दण्डं विभज्यामात् क्रमेण तु ॥

स्कन्धत्रये च तान्येव वल्ये रविमर्चयेत् ।
रज्जुस्शक्तिस्समाख्याता शिवस्स्याद् दण्डनायकः ॥

गन्धाद्यैरर्चयेद्देवं ततस्स्थापनमारमेत् ।
रत्नन्यासं ततः कुर्याद्दण्डमूले निवेशयेत् ॥

कूर्मं वा वृषभं वापि दण्डमूले निवेशयेत् ।
हैमं गुञ्जादिनिष्कान्तमानं देवालयाननम् ॥ 60

अधोमुखं च दण्डाधस्स्वस्वमन्त्रार्चितं द्विजाः ।
तदूर्ध्वे स्थापयेद्दण्डं यष्टिरग्रे यथा भवेत् ॥

देवालयाननो दण्डो वृषाग्रे पृष्ठतोऽपि वा ।
तथैव गोपुरस्यापि महापीठान्तिकेऽपि वा ॥

अन्तर्मण्डलसालादिमध्ये गोपुरमध्यतः ।
नव पञ्चैकदण्डो वा वसुदिक्षु चतुर्ष्व ॥

प्रधानस्त्वग्रदेशस्थो ध्वजास्तत्संख्यया मताः ।
अष्टदिक्षु च विधेशाश्चतुर्दिक्षु नरादिकाः ॥

दण्डाधिपास्समाख्याताः पटेषु वृष एव हि ।
दण्डमूले तु कर्तव्या वेदिका सा त्वनेकधा ॥ 65

हस्तमात्रं समारभ्य त्र्यङ्गुलादिविवृद्धितः ।
द्विहस्तमानपर्यन्तं वेदिकाविस्तरो मतः ॥

समोत्तुङ्गा त्रिपादा वा अष्टांशात् सप्तपञ्चसु ।
चतुस्त्र्यंशार्धतुङ्गं वा वेदिका परिकीर्तिता ॥

त्रिमेखलायुता वापि प्रत्येकं वसुमात्रतः ।
द्वित्र्यङ्गुलक्षयाद्वापि मेखलामानमीरितम् ॥

मेखलारहिते पीठे मूले स्यादुपवेदिका ।
द्व्यङ्गुलात् पादवृद्ध्या तु षडङ्गुलसमावधि ॥

पादार्धार्धत्र्यङ्घ्रिसमा उत्सेधाः परिकीर्तिताः ।
वेद्यूर्ध्वेऽब्जं प्रकर्तव्यं चतुरङ्गुलमानतः ॥ 70

व्योमाङ्गुलविवृद्ध्याष्टादशाङ्गुलसमावधि ।
पद्मोत्सेधस्समाख्यातो विस्तारो वेदिकासमः ॥

एकैकाङ्गुलवेशात्तु रुद्रमात्रसमावधिः ।
पद्मवेशस्समाख्यातः पद्मं स्यात् कर्णिकायुतम् ॥

कर्णिकानिर्गमो दण्डात् पादवृद्ध्यैकमात्रतः ।
गुणाङ्गुलावधिः कार्यस्तद्वदुत्सेध उच्यते ॥

चतुरष्टदलं पद्मं विकारदलमेव वा ।
वृत्तं वा चतुरश्रं वा विधेयं दलवेष्टनम् ॥

तथोपदलसंयुक्तं तद्वियुक्तं तु वा भवेत् ।
एवं संपाद्य पीठं तु कारयेच्छिल्पिमोक्षणम् ॥ 75

पुण्याहं वाचयित्वा तु अस्त्रेणाभ्युक्षणादिकम् ।
दर्भैर्दण्डं समावेष्ट्य वृषकुम्भं च तत्पटम् ॥

त्रिशूलेन समायुक्तं मङ्गलाङ्कुरशोभितम् ।
धामप्रदक्षिणवशान्नीत्वा दण्डस्य सन्निधिम् ॥

आधाराख्यमनन्तं च कूर्मं तु विनिवेशयेत् ।
कोणमध्ये च धर्मादीनधर्मादीन् प्रकल्पयेत् ॥

दलेष्वष्टसु वामाद्याः कर्णिकायां मनोन्मनीम् ।
दण्डे सदाशिवं चेष्ट्वा गन्धपुष्पादिभिः क्रमात् ॥

त्रिवर्गसहिता सा च स्नपनोक्तविधानतः ।
बध्वा वृषपटं रज्ज्वा वृषगायत्रिमन्त्रतः ॥ 80

क्षुद्रघण्टां समायोज्य शस्त्रमन्त्रमनुस्मरन् ।
कुम्भाद्बीजं समादाय वृषरूपं स्मरन् गुरुः ॥

वृषेन्द्रहृदये न्यस्त्वा गन्धपुष्पादिभिर्यजेत् ।
आरोपयेद्वृषं शीघ्रं वृषमूलेन देशिकः ॥

आदौ स्पृष्ट्वा स्वयं चान्यं प्रेरयेद्रोहणाय वा ।
अधोमुखे वृषे राज्ञश्शान्तिर्भूम्यां विशेषतः ॥

ऊर्ध्वभागे वृषे राज्ञो जयो देवादितृप्तये ।
आग्नेयेन्दुशर्वपूर्वासु ध्वजस्य गमनं शुभम् ॥

क्षेमारोग्यजयाः पुष्टिः क्रमेण फलमीरितम् ।
तापो मृत्युर्महारोगो वह्निकोणात् फलं भवेत् ॥ 85

वायौ भयं विजानीयात् पुच्छेऽप्येवं फलं भवेत् ।
आरोहणे निरुद्धे चेत् पटे देशिकदोषतः ॥

दोषशान्तिं तदा कुर्यात् बहुरूपमनुस्मरन् ।
शतमष्टोत्तरं ब्रह्म समिदाज्यान्नसंयुतम् ॥

वृषकुम्भस्थतोयेन प्रोक्षयेद्दण्डमूलकम् ।
वृषविघ्नेश्वरानष्टौ पूर्वादिषु दलेषु च ।

तत्तत्तोयैर्दलानष्टौ क्रमेण प्रोक्षयेद्गुरुः ।
गन्धपुष्पादिनाभ्यर्च्य मुद्गान्नं विनिवेदयेत् ॥

पुण्याहकालादारभ्य यावन्नैवेद्यदानकम् ।
सर्वातोद्यसमायुक्तं गानध्वनिसमन्वितम् ॥ 90

चतुर्दिङ्नर्तनं कुर्याद्विशेषाच्छुद्धनर्तनम् ।
अतः प्रभृति तीर्थान्तमवरोहावसानकम् ॥

एककालं त्रिकालं वा द्विकालं पूजयेद्वृषम् ।
यत्रैतत् क्रियते राष्ट्रे ध्वजयष्टिनिवेशनम् ॥

नाकालमृत्युस्तत्रास्ति नालक्ष्मीः पापकृत्स्वपि ।
नोपसर्गभयं तत्र न परागमविभ्रमः ॥

विपरीता न मतयो रोगिणामपि भूयसा ।
स्वकालवर्षी पर्जन्यस्सुभिक्षं विजयी नृपः ॥



[illegible] सर्वपापानि पयस्विन्यः पयोभृतः ।
[illegible] गोघ्नो दृष्ट्वा ध्वजनिवेशनम् ॥ 95

[illegible] पापनिर्मोक्षं मन्त्रकर्तुः कुलद्वयम् ।
[illegible] रात्रौ कर्तव्यं तु यथाविधि ॥

[illegible] कुर्याद्देवदेवस्य सन्निधौ ।
[illegible] कुर्यात्स्थले भेर्यां गुरूत्तमाः ॥

[illegible] भेरीं तत्सन्निधौ न्यसेत् ।
[illegible] पूर्वस्थितं दक्षाननान्विताम् ॥

[illegible] त्रिशूले देवता न्यसेत् ।
[illegible] ब्रह्मा दक्षिणपत्रके ॥

[illegible] पालिकायां तु पार्वती ।
[illegible] तदास्ये विघ्नराजकः ॥ 100

[illegible] ज्ञेयो भास्करो दण्डमध्यमे ।
[illegible] तु चण्डेशो लक्ष्मीः पूर्वदलाग्रके ॥

[illegible] दक्षे तु ज्येष्ठा पश्चिमदिग्दले ।
[illegible] तु कौबेर्यां शूलमूले मता इमे ॥

[illegible] पिन्याष्टादशगणाश्च ये ।
[illegible] मेर्यां तद्देवता न्यसेत् ॥

[illegible] मध्ये रुद्रं समर्चयेत् ।
[illegible] वक्त्रे विष्णुं वाममुखे यजेत् ॥

[illegible] सूर्यमितरे चन्द्रमर्चयेत् ।
[illegible] नवकीले नवग्रहान् ॥ 105

[illegible] न्यस्त्वा चर्मसूत्रेषु वासुकिम् ।
[illegible] पूर्वं मस्तकेऽभ्यर्चयेत् क्रमात् ॥

[illegible] नैवेद्यान्तैः पृथग्मुदा ।
[illegible] कुर्यादस्त्रमन्त्रमनुस्मरन् ॥

[illegible] पूर्वं द्वितीयं द्विप्रहारतः ।
[illegible] त्रयं चैकप्रहारतः ॥

सन्ताड्य वादकं प्रोक्ष्य मन्त्रं पञ्चाक्षरं स्मरन् ।
वस्त्रं गन्धं च माल्यं च सोत्तरीयं ससूत्रकम् ॥

तद्धस्ते कुसुमं दद्यात् तन्मन्त्रं समनुस्मरन् ।
भेर्यां पुष्पं विनिक्षिप्य देशिकानुज्ञया तदा ॥ 110

भेरीं स्कन्धे समारोप्य वादयेत् सर्वतालवित् ।
गन्धारादिस्वरोपेतं समतालादितालकम् ॥

गीतनृत्तसमायुक्तमन्नलिङ्गसमायुतम् ।
प्रतिमासहितं वापि चण्डेश्वरयुतं तु वा ॥

संगृहीत्वाखराजानं वितानच्छत्रसंयुतम् ।
धूपदीपसमायुक्तं घण्टारवसमन्वितम् ॥

प्रविश्य नागाराद्यं तु ब्रह्मस्थानादितः क्रमात् ।
इन्द्रस्थानादितो वापि बलिं दद्यात् स्वनामतः ॥

बलिदानावसाने तु तालस्वरसमायुतम् ।
नर्तनेन समायुक्तं कारयेत् स्वस्वदिक्षु च ॥ 115

ब्रह्मणि ब्रह्मतालं स्यात् मेघरागस्वरान्वितम् ।
समतालं च गान्धारं कोल्लीवद्रावणं ततः ॥

भृङ्गिणीकौशिकं नद्दभाषया मल्लतालकम् ।
श्रीकामरं नवाख्येन तक्केश्या वलितालकम् ॥

कोटिकं तर्क्करागेण शालापण्या तु ढक्करी ।
पूर्वादिदिक्षु संयोज्यं पूर्वतालं यथा तथा ॥

ध्वजारोहणपूर्वं स्यादुत्सवं त्रिगुणे दिने ।
भेरीताडनपूर्वं चेत् तद्दिनाद्द्विगुणे मतम् ॥

देवस्य सन्निधौ कृत्वा स्थण्डिलानां चतुष्टयम् ।
न्यस्त्वास्त्रमूर्तिमादौ तु तदग्रे विन्यसेत् पटम् ॥ 120

तदग्रे वृषकुम्भः स्याद् वृषविघ्नेश्वरान्वितः ।
तदग्रे विन्यसेद्भेरीं सर्वलक्षणसंयुताम् ॥

क्रमेणैतान् समभ्यर्च्य गन्धपुष्पादिभिः क्रमात् ।
भेरीकुम्भान्तरे होमं स्थण्डिले कल्पयेत्तु वा ॥

प्रागुक्तविधिना चेष्ट्वा तत्त्वादीन् विनिवेशयेत् ।
त्रिशूले देवताह्वानं कृत्वा प्रागुक्तकर्मणा ॥

भेरीं सन्ताड्य संप्राप्य त्रिशूलं वृषभान्वितम् ।
अस्त्रलिङ्गसमायुक्तं सर्वतोद्यसमन्वितम् ॥

ग्रामप्रदक्षिणं कृत्वा देवतावाहनान्वितम् ।
बलिप्रदानकालान्ते ध्वजस्थानं प्रविश्य च ॥ 125

ध्वजस्यारोहणं कुर्यात् प्रागुक्तविधिना गुरुः ।
रात्रावेतत् समुद्दिष्टं भेरीताडनपूर्वकम् ॥

ध्वजस्य भ्रमणं चाह्नि कुर्याद्वा संस्कृतस्य च ।
देवताह्वानकाले तु वर्जयेद् वृषभभ्रमम् ॥

ततोऽङ्कुरार्पणं रात्रौ यागारम्भदिने मतम् ।
तदर्थमङ्कुरं कुर्यात् तत्पूर्वे वर्जयेत्तु वा ॥

ग्रामप्रदक्षिणं तीर्थाङ्कुरस्यावश्यकं मतम् ।
अन्येषामपि सर्वेषां कारयेत् वर्जयेत्तु वा ॥

अङ्कुरार्पणपूर्वे तु सायाह्नसमये मृदम् ।
संगृह्य वापयेद्रात्रौ बीजान्यङ्कुरसिद्धये ॥ 130

तद्दिने चैतदिष्टं स्याद्भेरीताडनपूर्वकम् ।
अन्यत् सर्वं समुद्दिष्टमङ्कुरार्पणपूर्वके ॥

तदात्रावेव कर्तव्यो यागारम्भश्शिवस्य तु ।
केत्वङ्कुरो नवाहे स्यात् सप्ताहे चोत्सवाङ्कुरः ॥

एवं निश्चित्य पूर्वेद्युरस्त्रराजं तु वाचयेत् ।
यागशालां ततः कुर्यादग्रे वा त्वग्रपार्श्वयोः ॥

वामेऽवामे तथा पञ्चशाल्यनामिष्टदेशके ।
मध्यागारे विशेषेण पञ्चहस्तप्रमाणतः ॥

एकहस्तविवृद्ध्या तु तिथिहस्तसमावधिः ।
पङ्क्तित्रयसमायुक्तां पञ्चपङ्क्तिसमन्विताम् ॥ 135

समानपङ्क्तयो वा स्युर्मात्रादेकांशवर्धनात् ।
नवाङ्गुलान्तमानेन स्वधिकाः पञ्चपङ्क्तयः ॥

एकपङ्क्तियुतां वापि चतुर्द्वारमहीयसीम् ।
एकद्वारयुतां वापि मण्डपाकारसंस्थिताम् ॥

शालाकूटनिभां वापि नवपञ्चाग्निसंयुताम् ।
एकाग्निसहितां वापि वितानध्वजसंयुताम् ॥

दर्भमालासमायुक्तां मुक्तादामप्रलम्बिताम् ।
नालिकेरफलोपेतां सर्वमण्डनमण्डिताम् ॥

मध्यमे वेदिकोपेतां वसुमात्रप्रमाणतः ।
एकाङ्गुलविवृद्ध्याष्टाविंशत्यङ्गुलकावधिः ॥ 140

वेदिकोत्सेध उद्दिष्टो विस्तारस्य त्रिभागतः ।
अथवा पङ्क्तिमानेन चोपवेदीसमन्विताम् ॥

मुष्टिरत्निमितं कुण्डं करमानं तु वा भवेत् ।
युगाश्रं वर्तुलं वापि त्रिमेखलसमन्वितम् ॥

मण्डपे मालिकादौ वा कुर्याद्यागाधिवासनम् ।
एवं सर्वं च संपाद्य शिल्पिमोचनमाचरेत् ॥

पुण्याहं वाचयित्वान्ते वास्तुहोमं समाचरेत् ।
भूपरिग्रहणं वापि सर्वाध्वरशिरोयुतम् ॥

स्थण्डिलं वेदिकामध्ये कुर्याल्लक्षणसंयुतम् ।
द्रोणाद्द्रोणविवृद्ध्या तु नवद्रोणावसानकम् ॥ 145

तदर्धतण्डुलोपेतं तदर्धतिलसंयुतम् ।
तद्वल्लाजसमोपेतं मध्यमे नलिनं लिखेत् ॥

विचित्रकर्णिकोपेतं प्रज्वलद्दलशोभितम् ।
तिललाजादिरेखाढ्यं दर्भवेष्टनसंयुतम् ॥

पञ्चाद्येकविवृद्ध्या तु तत्त्वदर्भान्तसंख्यया ।
तन्मध्ये स्थापयेत् कुम्भं शिवाख्यं वर्धनीयुतम् ॥

अष्टविद्येश्वरोपेतकुम्भावरणसंयुतम् ।
सर्वे ससूत्रवस्त्राढ्या हेमपङ्कजभूषिताः ॥

सापिधानास्सकूर्चाश्च पक्वबिल्वफलप्रभाः ।
स्नपनाध्यायसंसिद्धप्रमाणेन समन्विताः ॥ 150



शिवाख्ये नवरत्नं स्याद्वर्धन्यां पञ्चरत्नकम् ।
लोकेशादिषु हेमानि क्षिपेद्वाद्यघटेष्वपि ॥

आदर्शेनैवं प्रकर्तव्यं वस्त्रयुग्मं च मध्यमे ।
तोरणद्वारकुम्भांश्च लोकपालघटानपि ॥

दिशा विद्येशसहितं शिवशक्तिसमन्वितम् ।
मङ्गलाष्टकसंयुक्तं दशाख्यं विनिवेशयेत् ॥

एवं संपाद्य सर्वं तु कुर्यात् प्रतिसरक्रियाम् ।
सौवर्णं राजतं सूत्रं यद्वा कार्पासनिर्मितम् ॥

सौवर्णं राजतं चेत्प्रकोष्ठपरिणाहतः ।
स्वल्पाधिकप्रमाणाढ्यं नागराजफणान्वितम् ॥ 155

तत्पुच्छसंयुतं सूत्रं पट्टाकारसमन्वितम् ।
अनन्तस्त्वधिदेवस्स्यात् सौवर्णे राजतेऽपि वा ॥

सर्वकामप्रसिद्ध्यर्थं सूत्रमेकं मतं भवेत् ।
ग्रथितं श्रेष्ठमित्युक्तं वलयग्राहकान्वितम् ॥

क्षौमपट्टादिसूत्रोक्तं यदि तत्त्वत्रयात्मकम् ।
शान्त्यर्थं विजयार्थं तत् कलात्मकमपि स्मृतम् ॥

नवतत्त्वात्मकं कार्यमारोग्यार्थं प्रमाणतः ।
षडङ्गमूर्तिपाङ्गं चेत् पुत्रायुष्यफलप्रदम् ॥

एकद्वित्र्यङ्गुलविस्तृतं योऽयनाहप्रमाणतः ।
संशोध्य वारिणा चैवं चन्दनेनोपलिप्य च ॥ 160

भस्माधारे न्यसेद्भस्ममध्ये नेत्रमनुं स्मरन् ।
प्रत्येकं स्थण्डिलं कृत्वा तदूर्ध्वे यन्त्रिकोपरि ॥

पात्रं संस्थाप्य संपूर्य तण्डुलैरङ्कुसन्निभैः ।
द्विप्रस्थान्तैर्न तद्धीनद्रोणार्धैर्हृदयं स्मरन् ॥

तन्मध्ये विन्यसेत् सूत्रं भस्माधारसमन्वितम् ।
अभिन्नयुग्मसुश्लक्ष्णपूगसारसमन्वितम् ॥

अच्छिन्नमूलपूर्वोदग्यत्रताम्बूलिकान्वितम् ।
ताम्बूलं सूत्रसहितं स्थण्डिलोपरि विन्यसेत् ॥

पुण्याहं वाचयित्वा तु प्रोक्षयेद्धृदयेन तु ।
स्थण्डिले पूजयेच्छक्तिं यन्त्रिकायां त्रितत्त्वकम् ॥ 165

प्रधानतत्त्वं पात्रे स्याद्दण्डवत्तण्डुले मता ।
भस्माधारे उमाख्या स्याद्भसिते लकुलीश्वरम् ॥

अनन्तादींश्च सूत्रे तु गन्धाद्यैरर्चयेत् क्रमात् ।
पात्रमाच्छाद्य पट्टाद्यैर्मालां तदुपरि न्यसेत् ॥

सर्वालङ्कारसंयुक्तं सर्वतोद्यसमन्वितम् ।
ग्रामप्रदक्षिणं वाथ प्रासादस्य प्रदक्षिणम् ॥

कारयेद्वर्जयेद्वाथ देवेशं पूजयेत् ततः ।
अङ्गुष्ठानामिकाभ्यां तु गृहीत्वा वामहस्ततः ॥

आलभेद्भस्मसंयुक्तं सूत्रं दक्षाङ्गुलद्वयात् ।
मन्त्रेणानुष्टुभा नेत्रं स्मरन् सव्यप्रकोष्ठके ॥ 170

देवानां कल्पयेदत्र भसितं विनिवेशयेत् ।
सर्वास्मनाथ देवीनां वामे वा दक्षिणेऽथवा ॥

जनेभ्यो भसितं दद्याद्देशिकप्रमुखस्तथा ।
ताम्बूलं च फलप्रपनालिकेरफलान्वितम् ॥

दद्याद्देवाय भक्तेभ्यो दापयेद्वर्जयेत्तु वा ।
स्कन्दोमासहिते स्कन्दहीने वा चन्द्रशेखरे ॥

देवीयुक्ते वियुक्ते वा नृत्तरूपे विशेषतः ।
उमामहेश्वरे वापि सुखासीने महेश्वरे ॥

अन्यस्मिन् सौम्यरूपे च कल्पयेदुत्सवाय च ।
एकद्वित्रिषु सर्वत्र वाञ्छया कौतुकं मतम् ॥ 175

कौतुकं चेत् कृतं कार्यं ग्रामादीनां प्रदक्षिणम् ।
यागारम्भदिने त्वेतद्विधानं परिकीर्तितम् ॥

अन्यस्मिन् दिवसे कार्यं मध्यमे चोत्सवस्य वा ।
कौतुकं वाञ्छिते बिम्बे तद्दिनात् पूर्वरात्रिके ॥

रौद्रे शान्तेऽपि वा वेरे शिवभक्ते विनिर्मितः ।
त्रिशूले मध्यपत्रे वा तत्स्थदेवकरेऽपि वा ॥

दशायुधानां सर्वेषां सूत्रबन्धनमिष्यते ।
यागारम्भस्य पूर्वेद्युस्तद्दिने वा समाचरेत् ॥

तीर्थार्थमङ्कुरं कुर्यादनयोः पूर्वकालतः ।
देशिको मूर्तिपैस्सार्धं सकलीकृतविग्रहः ॥ 180

द्वारपूजां ततः कृत्वा यागशालां प्रविश्य च ।
ब्रह्मेष्टि भूतशुद्धिं च सकलीकरणं पुनः ॥

पाद्यादित्रितयं कृत्वा प्रोक्षयेदर्घ्यवारिणा ।
वेदिकायां ततः कृत्वा स्थण्डिले तु शिवासनम् ॥

कृत्वा शिवघटे मूर्तिं मूर्तिमन्त्रेण कल्पयेत् ।
पञ्चब्रह्माणि विन्यस्य कल्पयेत्तत्कलामयम् ॥

विद्यादेहं च संकल्प्य प्रणवं विन्यसेच्छिवम् ।
हृदयादीनि विन्यस्य पाद्याद्यैरर्चयेत्ततः ॥

एवं मनोन्मनीं न्यस्वा शक्तिमन्त्रेण पूजयेत् ।
विद्येशान् परितश्चेष्ट्वा लोकपालान् प्रपूजयेत् ॥ 185

तदस्त्राणि च संपूज्य दर्पणादीनि पूजयेत् ।
तानि वा वेदिकाबाह्ये स्थण्डिलोर्ध्वस्थलेऽपि वा ॥

अष्टदिक्षु च वा पूज्य महादिक्षु द्वयं द्वयम् ।
तदन्ते चास्त्रराजानमष्टदिक्स्थण्डिले स्थितम् ॥

एवं क्रमेण संपूज्य यायात् कुण्डान्तिकं गुरुः ।
संस्कृत्य विधिना कुण्डं शिवाग्निं विधिना नयेत् ॥

नवधा पञ्चधा कृत्वा स्वस्वकुण्डे स्वदिग्गतम् ।
न्यस्वावाह्य शिवं साङ्गं सब्रह्माङ्गं च तर्पयेत् ॥

चतुर्दिक्षु नराद्याः स्युर्हृदयाद्या विदिक्षु वै ।
स्वस्वमन्त्रैः प्रधाने तु सर्वमन्त्रैश्च तर्पयेत् ॥ 190

वेणुबिल्वयवा वापि सक्तु क्षीरं यवं गुळम् ।
तिलसर्षपमुद्गा वा होमकर्मणि संस्थिताः ॥

ब्रह्मशालियवा वापि माषशालियवैस्सह ।
तिलसर्षपमुद्गाश्च सक्तु वेणु गुळं मधु ॥

चतुर्धैवं समाख्यातं होमद्रव्यं मुनीश्वराः ।
समिदाज्यान्नलाजांस्तु चतुर्वर्गेषु होमयेत् ॥

शतमष्टोत्तरं होमं शिवेनाङ्गैर्दशांशतः ।
प्रधाने त्वन्यकुण्डेषु मूलार्धं जुहुयुः क्रमात् ॥

द्रव्यभेदेन मन्त्रास्तु कचिदुक्ताः शिवागमे ।
तन्त्रभेदेन मन्त्राणां भेदो नात्र विधीयते ॥ 195

होमान्ते तु हविर्दद्याद्धोमादौ वा हविर्भवेत् ।
तदन्ते बलिदानं स्यात् तद्विधानमिहोच्यते ॥

नित्योत्सवविधानेन कृत्वा लिङ्गं हविर्मयम् ।
तत्रेष्ट्वा चास्त्रराजं तु त्रिशूलेन समन्वितम् ॥

दशायुधसमोपेतं धूपदीपसमन्वितम् ।
घण्टारवसमोपेतं बलिद्रव्यसमायुतम् ॥

नानाच्छत्रसमायुक्तं नानावाद्यसमन्वितम् ।
प्रविश्य नगरार्थं तु देशिकश्शिष्य एव वा ॥

देवताह्वानदेशे तु बलिं दद्यात् क्रमेण तु ।
लड्डुकं मोदकं मौद्गं गुळं सक्तुं गणेश्वरे ॥ 200

पायसं रात्रिचूर्णं तु पद्मपुष्पं सलाजकम् ।
ब्रह्मप्रियमिदं देयं द्वितीयेऽहनि कीर्तितम् ॥

कृसरान्नं घृतोपेतं कदलीफलसंयुतम् ।
तृतीयेऽहनि दातव्यं भूतानां प्रीतिकारणम् ॥

रात्रिचूर्णसमोपेतं नालिकेरफलान्वितम् ।
चतुर्थेऽहनि दातव्यं गन्धर्वप्रियमेव च ॥

घृतं प्रियङ्गुसंयुक्तमिन्द्रवल्लीसमन्वितम् ।
पञ्चमेऽहनि दातव्यमिन्द्रप्रियकरं भवेत् ॥

वेण्वन्नं घृतसंयुक्तं पनसोत्थफलान्वितम् ।
षष्ठेऽहनि प्रदातव्यमृषीणां प्रीतिसिद्धये ॥ 205

गुळान्नं घृतसंयुक्तं बृहतीफलसंयुतम् ।
सप्तमेऽहनि दातव्यं श्रियः प्रीतिकरं भवेत् ॥



माषोदनं घृतोपेतमजमांससमन्वितम् ।
अष्टमेऽहनि दातव्यं राक्षसप्रीतिसिद्धये ॥

शुद्धान्नं दधिसंयुक्तं लाजपुष्पसमन्वितम् ।
नवमेऽहनि दातव्यं शिवप्रीतिकरं भवेत् ॥

अथवान्यप्रकारेण देवताद्रव्यमुच्यते ।
शुद्धान्नं दधिसंयुक्तं लड्डुकापूपसंयुतम् ॥

फलैश्च गुळसंयुक्तं गणेशस्य प्रियं भवेत् ।
फलैश्च रजनीचूर्णं घृतान्नं दधि सक्तु च ॥ 210

भूतेभ्यः कृसरः प्रोक्तस्तेन तेभ्यो बलिर्भवेत् ।
पद्ममूलकुशाग्रं च शाल्यन्नं घृतमिश्रितम् ॥

कदलीफलसंयुक्तमृषिभ्यो बलिमाचरेत् ।
इन्द्रवल्ली हरिद्रा च प्रियङ्गु घृतसंयुतम् ॥

चतुर्थेऽहनि दातव्यं शक्रस्यास्य तु तृप्तये ।
पायसं रात्रिचूर्णं च पद्मपुष्पं सलाजकम् ॥

पञ्चमेऽहनि दातव्यं ब्रह्मप्रीतिकरं भवेत् ।
गुळान्नमाज्यसंयुक्तं बृहतीफलसंयुतम् ॥

षष्ठेऽहनि प्रदातव्यं विष्णुप्रीतिविवृद्धये ।
कृसरान्नं घृतोपेतं नालिकेरफलान्वितम् ॥ 215

सप्तमेऽहनि दातव्यं शिवप्रीतिकरं भवेत् ।
वेण्वन्नं दधिसंयुक्तं कदलीपनसान्वितम् ॥

अष्टमेऽहनि दातव्यमीश्वरप्रीतिसिद्धये ।
शुद्धान्नं दधिसंयुक्तं लाजपुष्पसमन्वितम् ॥

नवमेऽहनि दातव्यं सर्वेशप्रीतिहेतवे ।
नवानां दिवसानां तु देवद्रव्याणि च द्विजाः ॥

कथितान्यत ऊर्ध्वं तु कथ्यते द्वादशाहके ।
मुद्गान्नं लड्डुकं सर्पिः कदलीगुळसंयुतम् ॥

प्रथमेऽहनि दातव्यं विघ्नमन्त्रमनुस्मरन् ।
रक्तान्नं मांससंयुक्तं कृसरापूपसंयुतम् ॥ 220

घृतमत्स्यसमायुक्तं जपाकुसुमसंयुतम् ।
द्वितीयेऽहनि दातव्यं पैशाचं मन्त्रमुच्चरन् ॥

पायसं सक्तु पुष्पं च पद्मपुष्पसमन्वितम् ।
तृतीयेऽहनि दातव्यं ब्रह्ममन्त्रमनुस्मरन् ॥

कृसरान्नं घृतं सक्तुलड्डुकैश्च समन्वितम् ।
चतुर्थेऽहनि दातव्यं गान्धर्वं मन्त्रमुच्चरन् ॥

इन्द्रवल्लीहरिद्रान्नं सघृतं लाजसंयुतम् ।
पञ्चमेऽहनि दातव्यं भूतमन्त्रमनुस्मरन् ॥

गुळान्नं घृतसंयुक्तं नालिकेरफलान्वितम् ।
षष्ठेऽहनि प्रदातव्यं स्कन्दमन्त्रमनुस्मरन् ॥ 225

कुशाग्रं घृतसंयुक्तं शुद्धान्नं दधिसंयुतम् ।
सप्तमेऽहनि दातव्यमृषीणां मन्त्रमुच्चरन् ॥

क्षीरान्नं शालिपिष्टं च इक्षुखण्डसमन्वितम् ।
अष्टमेऽहनि दातव्यं नागमन्त्रमनुस्मरन् ॥

दधिकान्नं गुळोपेतं मातुलुङ्गफलं तथा ।
नवमेऽहनि दातव्यमैन्द्रमन्त्रमनुस्मरन् ॥

गुळान्नमाज्यसंयुक्तं कदलीपनसान्वितम् ।
दशमेऽहनि दातव्यं विष्णुमन्त्रमनुस्मरन् ॥

रक्तान्नं मांससंयुक्तमपूपं तिलचूर्णयुक् ।
एकादशाहे दातव्यं राक्षसं मन्त्रमुच्चरन् ॥ 230

शाल्यन्नं दधिसंयुक्तं गुळखण्डसमन्वितम् ।
द्वादशेऽहनि दातव्यं शिवमन्त्रमनुस्मरन् ॥

सप्ताहे वाथ पञ्चाहे त्रिदिने व्योमरात्रके ।
पूर्वं त्वक्त्वापरं प्रोक्तं दिनद्रव्यं च देवताः ॥

दिनदेवबलिद्रव्यं कथितं मुनिसत्तमाः ।
पूर्वं ब्रह्मादिदेवेषु द्रव्यैरेतैर्बलिर्भवेत् ॥

दिनाधिपतितृप्त्यर्थं शुद्धान्नं दधिसंयुतम् ।
दद्याल्लोकेशतृप्त्यर्थं लोकपालादिमन्त्रतः ॥

वृषादिपरिवारेषु ध्वजे ब्रह्मादिषु क्रमात् ।
बलिं दत्वा तदन्ते तु बलिपीठे बलिं क्रमात् ॥ 235

ध्वजादिबलिपीठान्तमथवा बलिरीरितः ।
ब्रह्मादिबलिपीठान्तं शक्रात् पीठान्तमेव वा ॥

तत्तद्दिनाधिदेवानां बलिपीठे बलिस्तु वा ।
दिनदेवादितृप्त्यर्थं शुद्धान्नेन बलिस्तु वा ॥

लोकेशेभ्यो बलिर्वापि दिनदेवेषु वा मतः ।
दिनदेवबलिद्रव्यैर्लोकपालेऽथ वा बलिः ॥

दिनानामपि सर्वेषां दिनं प्रति बलिद्वयम् ।
कुर्याद्वाथ तयोरेकं बलिर्दिवसयोस्तु वा ॥

सायंप्रातर्बलिं दद्याद् तत्काले वा तदन्तके ।
बेरयात्रा प्रकर्तव्या यानक्रम इहोच्यते ॥ 240

प्रथमे वृषयन्त्रं स्याद्द्वितीये भ्रमणार्हकम् ।
डोलायन्त्रं तृतीये स्याद्वाजियन्त्रं ततः परम् ॥

सिंहयन्त्रं ततः प्रोक्तं दीपयन्त्रं ततो भवेत् ।
मेषयन्त्रं ततो ज्ञेयं रथयन्त्रं ततो भवेत् ॥

अन्योन्यं चारुरूपाणि कार्याणि द्विजसत्तमाः ।
बेराण्यनेकरूपाणि तदन्ते कथितानि च ॥

तदन्ते बलिदानं स्याद्बलिपीठसमन्वितम् ।
अग्नलिङ्गसमायुक्तं त्रिशूलेन समायुतम् ॥

दशायुधसमायुक्तं गोलकालिङ्गसंयुतम् ।
रथस्थितगणेशानां तदन्ते नन्दिकेश्वरे ॥ 245

रथे वा शिबिकायां वा सर्वालङ्कारसंयुतम् ।
एतैस्सर्वैर्विहीनेऽग्रे कल्पश्चैश्च समन्वितः ॥

तदग्रे वृषभः पश्चाद् नृत्तार्थं सुखरञ्जकम् ।
तदन्ते देवदेवेशरथस्सर्वाङ्गसुन्दरः ॥

रथाग्रोभयहस्ताभ्यां भूषिताभ्यां विशेषतः ।
धृतचामरहस्ताभ्यां रुद्रकन्याभ्यां विराजितः ॥

नवरत्नोज्ज्वलच्छ्वेतछत्रेणोपरिगामिना ।
मदन्तिकगतेनैव शैवाचार्येण शोभितः ॥

मत्पृष्ठभागसंस्थेन मत्कर्मनिरतेन च ।
परिचारकसंज्ञेन मद्भक्तेनाप्रमादिना ॥ 250

पद्मकुड्मलसन्नद्धपाशसंबन्धहस्तया ।
पुरुषाकारधारिण्या शोभितो रुद्रकन्यया ॥

मद्दास्या वाथ सर्वाङ्गसुन्दर्या स्यन्दनस्य च ।
तदन्ते देवदेवेशीरथस्तद्वद्विभूषितः ॥

तदन्ते चण्डनाथस्य प्रथमवाद्यसमन्वितः ।
षोडशप्रतिमादीनि यान्यन्यानि शिवस्य तु ॥

शिवभक्ताश्च ये ख्यातास्तेषां रूपाण्यनेकधा ।
तान्यग्रगाणि नेयानि पृष्ठतो वा द्विजोत्तमाः ॥

एषामिष्टं तु यद्ग्राह्यं बल्यङ्गैः कौतुकं विना ।
नानावाद्यसमायुक्तं गजाश्वाद्युष्ट्रसंयुतम् ॥ 255

वीथिसम्मार्जनोपेतं जलसेकसमन्वितम् ।
गृहं प्रतिकृतालेपचूर्णचित्रसमन्वितम् ॥

मङ्गलाङ्कुरसद्दीपवर्धनीकुम्भवारियुक् ।
कदलीपूगसंयुक्तं पट्टवस्त्रादिशोभितम् ॥

दर्भमालासमायुक्तं मुक्तादामविभूषितम् ।
उपरिष्टादधस्तात्तु तळं प्रति तळं प्रति ॥

विन्यसेद् दीपदण्डांश्च रात्रौ चेद्दीपमाळया ।
गृहालङ्कार उद्दिष्टो गृहहीनस्थलेऽपि च ॥

नानाध्वजसमोपेतं नानावाद्यसमन्वितम् ।
नानागानसमोपेतं नानानृत्तसमन्वितम् ॥ 260

नानाच्छत्रसमोपेतं छत्रचामरसंयुतम् ।
तालवृन्तसमोपेतं धूपदीपसमन्वितम् ॥

यानं प्रतिदिनं कुर्यादह्नि रात्रौ महोत्सवे ।
रथादौ शिबिकादौ वा परिवारकमूर्धसु ॥



यानकाले तु ताम्बूलं देयं नानाफलानि च ।
भक्ष्यापूपादिकं देयं दत्वा काण्डपटादिकम् ॥

योग्यायोग्यविभागेन दग्धार्द्रविषये क्रमात् ।
दग्धं सर्वं द्विजैस्सिद्धमार्द्रं शूद्रैस्तु वा मतम् ॥

त्रिवक्र् सत्वक् कृतं युक्त्या वीक्षणादिविशोधितम् ।
शङ्खध्वनिसमायुक्तं पाद्याचमनसंयुतम् ॥ 265

प्रच्छन्नपटमावर्ज्य निर्माल्यापनये कृते ।
दत्वोष्णहारान् सर्वेभ्यो मद्भक्तेभ्यः क्रमेण तु ॥

आगन्तुकेभ्यस्त्वन्येभ्यस्तत्तद्भक्त्यनुसारतः ।
प्रवेश्यास्थानकूटाग्रमासनस्थाय शम्भवे ॥

दत्वा पाद्यादिकं नित्यं स्नपनं शान्तिहोमयुक् ।
कार्यं तक्षादिसंस्पृष्टरथादिस्पर्शशान्तये ॥

चण्डाल्यागणदग्धदोषनिवृत्त्यर्थं विशेषतः ।
आवश्यकमिदं ज्ञेयं प्रतियानं गुरूत्तमाः ॥

शान्तिहोमं विना वाथ अशक्तौ स्नपनं नयेत् ।
पञ्चप्राकारबाह्ये तु मम याने प्रकल्पिते ॥ 270

विधाय स्नपनं वाथ पञ्चखारिसमन्वितैः ।
चत्वारिंशन्मितैर्भारैर्जलैर्वाथ तदर्धतः ॥

पादेन वाथ तन्न्यूनैः स्नापयेद्देवमादरात् ।
मृगयायां विशेषेण स्नपनं परिकल्पयेत् ॥

स्वकालविहितं चैतदिष्टदं परिकीर्तितम् ।
प्रातस्सन्ध्यार्चनं नित्यं यागमण्डपवेशनम् ॥

रथाद्यारोहणं यानं ततो मध्याह्नपूजनम् ।
रथे चेद्धूपदानान्तं नैवेद्यान्तं शिवालये ॥

यात्रार्थस्नपनं पश्चात्ततो नैमित्तिकार्चनम् ।
विनोददर्शनं चान्ते प्रदोषपूजनं ततः ॥ 275

पुनर्होमो विनोदश्च ततो ग्रामप्रदक्षिणम् ।
यात्रार्थस्नपनं पूजा नृत्तगेयादिदर्शनम् ॥

ततो धामनिवेशश्च देव्या सह निवेशनम् ।
काले षोडशसंख्याते यामार्धपरिनिष्ठिते ॥

कृतप्रतिसरस्यैता देवस्य विहिताः क्रियाः ।
स्वकालेऽनुष्ठितास्त्वेताः क्रियास्सर्वार्थसाधकाः ॥

पूर्वपूर्वग्रहेऽपुष्टिः पृष्ठपृष्ठग्रहेऽशुभः ।
तस्मात् सर्वप्रयत्नेन पूर्वकाले समाचरेत् ॥

स्वकाले वाथ दोषः स्यात् पृथक्काले समाचरेत् ।
यानकाले बलेः काले पूर्वकालेऽथवा मतः ॥ 280

परिवारोक्तमार्गेण बलिपीठं समाचरेत् ।
मार्दं वार्क्षं तु वा पीठं लौहं वा भूविलेपनम् ॥

यागमण्डपवेशं च हित्वान्तर्वेशनं तु वा ।
तत्र ताम्बूलदानाद्यं वर्जयेद्वाथ कारयेत् ॥

उक्तकालपरित्यागे शान्तिहोमं च कारयेत् ।
रात्रौ नीराजनं कार्यं धूपदीपावसानके ॥

प्रभूतं तु हविर्देयाद्यानकालावसानके ।
एवं प्रतिदिनं कुर्याद्विशेषस्त्वधुनोच्यते ॥

ग्रामादौ तद्बहिर्वापि कल्पिते मण्डपादिके ।
नीत्वा देवं समाराध्य विनोदालोकनं ततः ॥ 285

प्रविश्य धाम वा नो वा नयेद्ग्रामं समस्तकम् ।
प्रवेशे वाथ वृष्ट्यादावेवमेव समाचरेत् ॥

भविष्यद्वृष्टिशङ्कायामन्धकारे महत्यपि ।
शान्तिहोमो विधेयस्स्यादवशिष्टप्रदक्षिणे ॥

यागारम्भदिने वाथ तीर्थदानदिनेऽपि च ।
सकलं भ्रामयेद्ग्रामं प्रायश्चित्तं न चोच्यते ॥

ग्रामप्रदक्षिणे हीने दिशाहोमं तु कारयेत् ।
निर्मले नभसीन्दोश्च दर्शनेऽवश्यमेव च ॥

बेरयात्रा प्रकर्तव्या बलिं नित्यं समाचरेत् ।
तीर्थाहः पञ्चमे पूर्वे चतुर्थे वा समाचरेत् ॥ 290

तैलाभ्यङ्गं च तद्द्वारे रात्रिचूर्णयुतं तु वा ।
ताम्बूलदानसहितं देवे भक्तेषु च क्रमात् ॥

अन्यत्रापि च कर्तव्यं ध्वजारोहेऽपि वा मतम् ।
देवाग्रे स्थापयेत्तैलं स्थण्डिले यन्त्रिकोपरि ॥

अस्त्रमन्त्रेण संप्रोक्ष्य संहितामनुनालभेत् ।
कवचेनावकुण्ठ्याथ यजेद्गन्धादिभिर्हृदा ॥

शिवतत्त्वादिभिस्तैलं मूल्युक्तैर्नमोऽन्तकैः ।
सपुष्पं निक्षिपेन्मूर्ध्नि रात्रिचूर्णमनुक्रमात् ॥

ललाटात् पादबाह्वन्तं देव्याः कण्ठान्तमाचरेत् ।
तत्र वान्यत्र वा स्नानं कृत्वा मौद्गं निवेदयेत् ॥ 295

तीर्थाह्नात् पूर्वदिवसे तत्पूर्वे वा समाचरेत् ।
नटेशभ्रामणं कुर्यात् तदर्थं पूर्वरात्रके ॥

कौतुकं पूर्वविधिना कारयेन्नृत्तमूर्तये ।
सर्वाभरणयुक्ताय पूजिताय विशेषतः ॥

तस्मादन्यत्र कूटे वा रङ्गे वास्थानमण्डपे ।
सर्वालङ्कारसंयुक्तं कृत्वा धामप्रदक्षिणम् ॥

तत्काले वा प्रभाते वा देवदेवं प्रवेश्य च ।
विनोददर्शनं चापि कारयेद्द्विजसत्तमाः ॥

प्रातःस्नानादिकं कृत्वा भूषयेद्भूषणार्हकैः ।
नानागरुसुगन्धं च कर्पूरेण विमिश्रितम् ॥ 300

धामप्रदक्षिणं कृत्वा सवातोद्यसमन्वितम् ।
स्थण्डिलोपरि संस्थाप्य पुण्याहं वाचयेत्ततः ॥

संप्रोक्ष्यार्घ्याम्भसास्त्रेण मन्त्रयेच्छर्वशम्बरैः ।
गन्धादिभिस्समभ्यर्च्य कवचेनावकुण्ठयेत् ॥

समिदाज्येन चरुणा तिललाजगुलैस्तु वा ।
मूलेन शतहोमस्स्यादस्त्रहोमो मतो न वा ॥

पञ्चाग्निसंस्कृतियुक्तो होमस्सर्वार्थसाधकः ।
प्रायश्चित्तं त्वघोरेण कृत्वा पूर्णासमन्वितम् ॥

सद्योजातेन संस्पृश्य गन्धमूलेन दापयेत् ।
सवत्सां गां सुवर्णं च कांस्यपात्रं सुवस्त्रयुक् ॥ 305

तिलमाज्यमथान्यद्वा दद्यादाचार्यतुष्टये ।
जलदानसमोपेतं यात्रादानमिदं मतम् ॥

अथान्यद्वा हरिद्रां च लवणं तिलसर्षपौ ।
ताम्बूलं तण्डुलं चैव गन्धाज्यतिलतैलकम् ॥

शिवदानमिति ख्यातं कर्तुरिष्टप्रदायकम् ।
योगिनां ध्यानयुक्तानां शिवज्ञानार्थवेदिनाम् ॥

तत्पूजादानमिष्टं स्यात् सर्वेषां प्राणिनामपि ।
उष्णीषाद्यं प्रदेयं स्याद्विशेषेषु दिनेषु च ॥

प्रतिदानं तु देयं स्याज्जलोपेतं तु तद्भवेत् ।
उष्णीषाद्यं प्रदातव्यं दद्यादाचार्यधीमतः ॥ 310

आचार्यश्शिव एव स्यादनयोरन्तरं न हि ।
यः पश्येदनयोर्भेदं सोऽधोगतिमवाप्नुयात् ॥

सर्वागमज्ञं शान्तं च शिवलिङ्गार्चनारतम् ।
नित्यहोमादिभिर्युक्तं शिवार्थाग्निप्रकल्पकम् ॥

ग्रहकल्पादिसंयुक्तं भिक्षाप्रदननिन्दितम् ।
किमत्र बहुनोक्तेन देशिकस्त्वीदृशो यदा ॥

तुष्टो यत्र तदा तस्य पुरुषार्थगतिर्द्विजाः ।
सत्यं सत्यं पुनस्सत्यं त्रिसत्यं सत्यमेव हि ॥

तद्वित्तमायतं येन त्रिजगच्चोर उच्यते ।
देवस्वादपि निस्तार्यं कल्पकोटिशतैरपि ॥ 315

तस्मात् पापं परिज्ञाय बहुधा देशिकस्य च ।
तद्दत्तं श्रद्धया ग्राह्यं तच्छ्राव्यं तारकं यतः ॥

यात्रादानमिदं कार्यं नैवेद्यादि निवेदयेत् ।
पूर्वे वान्ते भवेल्लिङ्गप्रतिष्ठादौ च संमतम् ॥

अन्यत्रापि च कर्तव्यं राज्ञां विजयसेतवे ।
सर्वदानोत्तमं ह्येतद्ग्रहणादौ विशिष्यते ॥



सर्वालङ्कारसंयुक्तं मुरवेण समन्वितम् ।
शैवाचार्यसमोपेतमारोप्य शिबिकोत्तमम् ॥

पञ्चप्राकारमध्ये वा तद्बाह्ये वा प्रदक्षिणम् ।
कृत्वा यानक्रमं प्रोक्तं सर्वमङ्गलसंयुतम् ॥ 320

राजवेषधरैः पुंभिर्नानानृत्तसमन्वितैः ।
आरूढशिबिकैर्दक्षैः पुष्पोदैर्गन्धतोयकैः ॥

अग्रतः पृष्ठतो वापि कृतसेवासमन्वितैः ।
वर्जयेदाथ मुरवं राजवेषधरान्वितम् ॥

प्रवेश्य भवनं पश्चात् स्नापयेत् पूर्वकर्मणा ।
कौतुकं च परित्यज्य गन्धपुष्पादिभिर्यजेत् ॥

तदन्ते बेरयात्रादि तत्पूर्वे वा प्रकीर्तितम् ।
रात्र्यन्ते रथमारोप्य देवदेवं नटेश्वरम् ॥

पूर्वयानक्रमेणैव ग्रामादीनां प्रदक्षिणम् ।
कृत्वा निवेशयेदन्तः पुनस्स्नपनमाचरेत् ॥ 325

अन्येष्वपि च बेरेषु विधानं सदृशं मतम् ।
तीर्थाह्नः पूर्वदिवसे तत्पूर्वे वा द्विजोत्तमाः ॥

युद्धारम्भक्रियोपेतमृगयात्रावसानकम् ।
अन्येन चोत्सवार्थेन बेरेण पुनराचरेत् ॥

विशेषस्नपनं तस्य विधेयं पूर्वकर्मणा ।
तद्रात्रौ कौतुकं कुर्यात् तीर्थार्थं पूर्वकर्मणा ॥

तीर्थार्थं साधयेद्रात्रौ कलशान्नवसंख्यया ।
ससूत्रान् सापिधानांश्च सकूर्चान् पल्लवान्वितान् ॥

सवस्त्रान्वा विवस्त्रान्वा प्रधाने वस्त्रमेव वा ।
रात्रौ वा साधयेत्तीर्थं स्नाने तत्समयेऽपि वा ॥ 330

प्रातः प्रागुदयात्पूर्वं तीर्थकार्यं समाचरेत् ।
तीर्थस्थानं च संप्राप्य शुद्धिं कृत्वा महीतले ॥

स्थण्डिलद्वितयं कुर्याच्छूलार्थं कलशार्थकम् ।
पश्चिमे स्थापयेच्छूलं तदग्रे कलशान्न्यसेत् ॥

पुण्याहं वाचयित्वा तु देवनाहूय पूर्ववत् ।
त्रिशूले सर्वतीर्थं च सर्वं दुर्गासमन्वितम् ॥

मध्ये मनोन्मनीयुक्तं गन्धपुष्पादिभिर्यजेत् ।
तज्जलैः स्नापयेच्छूलं नद्यादावन्तः प्रविश्य च ॥

तीर्थसंग्रहणं कुर्याद्गङ्गाद्यावाहनेन च ।
हे देवि गङ्गे यमुने नर्मदे च सरस्वति ॥ 335

सिन्धो गोदावरि त्वं च कावेर्यत्र जलाशये ।
सन्निधीभव शर्वस्य तीर्थार्थमिदमुत्तमम् ॥

रवेरस्तमनं यावत् तीर्थानां पापशुद्धये ।
तीर्थसङ्ग्रहणं कृत्वा तन्मध्ये प्राक्शिरोऽन्वितम् ॥

त्रिशूलं स्नापयेदप्सु शिवमन्त्रमनुस्मरन् ।
जलाद्धुतीर्थं शूलं तु जलतीरे निवेशयेत् ॥

तीर्थसङ्ग्रहणं कृत्वा तीर्थं देवालयेऽपि वा ।
अवगाहनहीनं तु नयेद्दूरजलाशये ॥

सर्वालङ्कारसंयुक्तं प्रविशेदालयं प्रति ।
होमं च बलिदानं च कृत्वा प्रागुक्तकर्मणा ॥ 340

चूर्णोत्सवं ततः कुर्याद्देवस्यास्थानमण्डपे ।
स्थण्डिलद्वितयं कुर्याद्देवदेवस्य सन्निधौ ॥

त्रिशूलं पश्चिमेऽन्यत्रोलूखलं विनिवेशयेत् ।
तन्मध्ये विन्यसेद्रात्रिमथ तच्चूर्णसिद्धये ॥

वस्त्रेणावेष्ट्य तन्मध्ये रात्रिचूर्णं तु वा क्षिपेत् ।
त्रिशूलं पूजयित्वादौ ततो रात्र्यधिवासनम् ॥

संकल्प्योलूखले शक्तिमाधाराख्यां प्रकल्पयेत् ।
मुसले पूजयित्वेशं कुर्याद्घृतशिरोर्पणम् ॥

दूर्वापुष्पसमोपेतैर्व्रीहितण्डुलकादिभिः ।
संमुखं विमुखं वापि शूलं देवस्य कीर्तितम् ॥ 345

तदन्मुसलमुद्दिष्टं तथैवोलूखलं भवेत् ।
सवस्त्रं वा विवस्त्रं वा मुसलं परिकीर्तितम् ॥

मुसलं पूर्वमभ्यर्च्योलूखलं तदनन्तरम् ।
शिवतत्त्वादितो वा स्यादात्मतत्त्वादितोऽपि वा ॥

दूर्वाप्रधानं कर्तव्यं गुरुणा वा नियोगिना ।
राज्ञा देव्या च तस्याश्च तन्नियुक्तैर्महात्मभिः ॥

पुरोहितमुखैर्देयं ततो माहेश्वरैर्जनैः ।
रुद्रकन्याभिश्च दासीभिः कर्तव्यं राजसन्निधौ ॥

नो चेद्राजनियुक्ताभी रुद्रकन्याभिरेव वा ।
दासीभिर्वाथ भक्तैर्वा योग्यैरन्यैः क्रमेण च ॥ 350

दूर्वादानं प्रकर्तव्यं विशुद्धैर्देशिकाज्ञया ।
अन्यस्मिन्नपि देवस्य देव्या वा कौतुकान्तरे ॥

तदादौ स्नानकालादौ कर्तव्यं मङ्गलार्थकम् ।
तदन्ते चूर्णयेद्रात्रिं त्रिःकृत्वा चास्त्रमुच्चरन् ॥

दूर्वादानक्रमेणैव चूर्णयेद्रात्रिमादरात् ।
तच्चूर्णं तन्मनुं स्मृत्वा तस्मादादाय निक्षिपेत् ॥

नानाविधेषु पात्रेषु लिङ्गार्थं प्रतिमार्थकम् ।
उत्सवप्रतिमार्थं च त्रिशूलार्थं विशेषतः ॥

परिवारार्थमेकं च भागं संकल्पयेत्क्रमात् ।
अवशिष्टं जनार्थं च संग्रहेत्कलशादिषु ॥ 355

केवलं गन्धतैलं वा पृथक्पात्रेषु कल्पयेत् ।
संप्रोक्ष्य हेतिना पश्चाद्धृन्मन्त्रेण समर्चयेत् ॥

अमृतीकृत्य गोस्तन्या दद्यात्ताम्बूलपूर्वकम् ।
रात्रिचूर्णं च देयं स्यात् प्रागुक्तविधिना द्विजाः ॥

चूर्णोत्सवं त्रिशूलेन ग्रामादावाल्येऽपि च ।
कारयेच्छीघ्रगत्या तु समर्थैः परिचारकैः ॥

महातीर्थं प्रकर्तव्यं समुद्रादौ महाजले ।
नाल्पोदके विधातव्यं तत्र कौतुकतीर्थवत् ॥

किं तु बेरसमोपेतं प्रपादिपरिमण्डिते ।
कलशस्थापनोपेतं देवताह्वानसंयुतम् ॥ 360

त्रिबेरं वापि कर्तव्यं तीर्थकार्ये द्विजोत्तमाः ।
तीर्थसंग्रहणं पूर्वं न कृते तु जलान्तरे ॥

तीर्थसंग्रहणं कृत्वा महातीर्थं समाचरेत् ।
विमोच्य कौतुकं सर्वं भक्तेभ्यो विनिवेद्य च ॥

महातीर्थं प्रकर्तव्यं शूलबेरसमन्वितम् ।
त्रिशूलसहितं वापि नानादेवालयागतैः ॥

त्रिशूलैर्देवतोपेतैस्सहितं वा समाचरेत् ।
अथवा पञ्चचक्राभ्यां सहितं वा समाचरेत् ॥

महामोटीसमायुक्तं रात्रौ वा तीर्थमाचरेत् ।
अह्नि तीर्थं प्रकर्तव्यं मध्याह्ने तीर्थमुत्तमम् ॥ 365

पूर्वाह्णे मध्यमं तीर्थमपराह्णेऽधमं भवेत् ।
छिन्नेन्दुग्रहणं तीर्थं रात्रौ वा वरमिष्यते ॥

तत्र मोटीसमायुक्तमुत्तमोत्तममिष्यते ।
तिथिप्रधानं सामुद्रमन्यदृक्षप्रधानकम् ॥

तिथिनक्षत्रसंयोगयुक्तं दुर्लभमुच्यते ।
पूर्वाह्णे वा पराह्णे वा तिथिऋक्षसमन्वितम् ॥

समुद्रे वाथ नद्यादौ कार्यं मध्यन्दिने वरम् ।
नक्षत्रमाधिक्यं त्वह्नि संप्राप्तं तिथिरेव वा ॥

वारद्वयगते ऋक्षे तिथौ वा योगसंभवे ।
तीर्थर्क्षद्वयसंप्राप्तावेकमासे परं वरम् ॥ 370

तत्रापि योगयुक्तं चेत् पूर्वं संप्राप्तमेव वा ।
यस्मिन्मासे तु यदृक्षे पूर्वं तीर्थमनुष्ठितम् ॥

तस्मिन्मासे तु तदृक्षे पश्चादपि समाचरेत् ।
लिङ्गे स्वायम्भुवे चेत्तु दैविके चार्षकेऽपि वा ॥

मानुषे पूर्वतीर्थर्क्षे मासर्क्षे तद्द्विमासके ।
नक्षत्रे वा तिथौ वापि तीर्थकार्यं द्विजोत्तमाः ॥

जलमध्ये ततस्तीर्थं कारयेद्देशिकोत्तमाः ।
द्विधावगाहनं प्रोक्तं बेरयोगवियोगतः ॥



वियोगे तीरदेशे तु बेरस्नपनमेव वा ।
कारयेत् पूजयेत्पश्चाद् गन्धाद्यैरुपचारकैः ॥ 375

नैवेद्यं दापयेत्तत्र नो चेद्देवालयेऽपि वा ।
आरामादौ च देवेशं तोषयेत् सर्वमङ्गलैः ॥

ग्रामप्रदक्षिणोपेतमथवा तद्विवर्जयेत् ।
सर्वभक्तजनोपेतं तैर्विहीनं तु वा भवेत् ॥

पूर्णाहुतिं ततो हुत्वा सर्वमङ्गलसंयुतम् ।
ग्रामप्रदक्षिणोपेतं विशुद्धैः परिचारकैः ॥

ग्राहयित्वा तु देवेशं देव्या विघ्नेश्वरैर्युतम् ।
गर्भगेहे सुसंस्थाप्य लिङ्गे पीठे त्वनुक्रमात् ॥

देवं देवीं च विन्यस्य विघ्नेशान् परितो न्यसेत् ।
तत्तत्तोयैश्च संप्रोक्ष्य शुद्धोदैस्स्नापयेद्विभुम् ॥ 380

ततः संपूजयेद्देवं यथाविभवविस्तरम् ।
ध्वजावरोहणं तस्यां रात्रौ श्रेष्ठमुदाहृतम् ॥

तृतीये पञ्चमे वापि सप्तमे नवमेऽपि वा ।
एकादशाहे विश्वर्क्षे कुर्यात् पञ्चदशाहके ॥

कुर्यात् सप्तदशाहे वैकोनविंशत्यहेऽपि वा ।
मूर्तिहोमयुतं कुर्याद्दिशाहोमं तदूर्ध्वतः ॥

ध्वजादितीर्थपर्यन्तं दिनसंख्या स्थिता यदि ।
पुनरुत्सवमारभ्य तीर्थान्तं सर्वमाचरेत् ॥

ध्वजावरोहणर्क्षे तु शुद्धाख्यं स्नपनं नयेत् ।
लिङ्गे बेरे वृषे शूले ध्वजे स्नपनमाचरेत् ॥ 385

अर्चनोक्तं समभ्यर्च्य मालाभिर्धाम भूषयेत् ।
गर्भगेहं समारभ्य गोपुरान्तं स्वशक्तितः ॥

कालागरुद्रवैर्धूपैर्धूपयेद्देवमन्दिरम् ।
नैवेद्यं विविधं दद्यात् तोषयेद्देवमादरात् ॥

चण्डपूजां ततः कुर्याद्धोमेन सहितं न वा ।
ततो ग्रामबलिं दद्यादत्नलिङ्गसमन्वितम् ॥

त्रिशूलेन समायुक्तं चण्डनाथयुतं तु वा ।
भेरिकामर्दलोपेतं पटहैः काहलैर्युतम् ॥

श्रीखण्डशङ्खसंयुक्तं बलिकाले तु घोषणम् ।
कृत्वा विसर्जयेद्देवान् ब्रह्मादीन् ग्रामवर्तिनः ॥ 390

ध्वजे वादौ बलिं दद्यात् तदन्ते च ध्वजं पुनः ।
अवतार्य पटस्थं च योजयेद्वृषभं वृषे ॥

ध्वजावरोहणस्यादौ चान्ते वा बलिरिष्यते ।
आचार्यं पूजयेत् कर्ता वस्त्रहोमाङ्गुलीयकैः ॥

अङ्कुरार्पणकाले च ध्वजारोहणकालके ।
यागाधिवासने होमप्रारम्भे सन्ध्ययोर्द्वयोः ॥

अथवा चैकसन्ध्यायाः प्रारम्भे वावसानके ।
नृत्तमूर्त्युत्सवे तीर्थे शुद्धस्नपनकालके ॥

दक्षिणां दापयेत्पश्चात् त्रिविधा सा च संमता ।
अधमा पञ्चनिष्का च द्विगुणा मध्यमा भवेत् ॥ 395

त्रिगुणा चोत्तमा ज्ञेया देशिकस्य तु दक्षिणा ।
तदर्धसंख्यया प्रोक्ता दक्षिणा त्वन्यसत्क्रमे ॥

श्रेष्ठे तु द्विगुणा प्रोक्ता त्वन्यथा वा निगद्यते ।
निष्कमर्धं तदर्धं वा प्रत्यहं दक्षिणा मता ॥

भक्तोत्सवं ततःकुर्यात् पश्चाद्वात् पूर्व एव वा ।
उत्सवादौ च मध्ये वा भक्तानामुत्सवो मतः ॥

वत्सरोत्सवकाले च यदा मासोत्सवो भवेत् ।
बलिहोमादिसंयुक्तो बेरयात्रादिसंयुतः ॥

वर्जयेद्वा नयेद्बेरं यात्रामात्रमथापि वा ।
मासोत्सवद्वयप्राप्तावेवमेव समाचरेत् ॥ 400

मासोत्सव इह प्रोक्तस्त्वेकाहोत्सववद्द्विजाः ।
कुर्यादेकमनेकं वा मास्येकस्मिन्तदुत्सवम् ॥

अङ्कुरार्पणपूर्वं वा तद्वियुक्तमथाचरेत् ।
एकाहमुत्सवं कुर्याद्भेरीताडनपूर्वकम् ॥

स्थण्डिलद्वितयं कृत्वा शूलमेकत्र विन्यसेत् ।
तदग्रे स्थापयेद्भेरीं पुण्याहं वाचयेत्ततः ॥

अस्त्रं भेरीं च संप्रोक्ष्य भेरीं संताडयेत् क्रमात् ।
ततः प्रतिसरं बद्ध्वा देवे शूले यथाक्रमम् ॥

ग्रामप्रदक्षिणं कृत्वा यागशालां प्रवेश्य च ।
स्थण्डिले स्थापयेच्छूलं वेद्यर्धे स्थण्डिले शुभे ॥ 405

विन्यसेच्छिवकुम्भं च वर्धनीसहितं गुरुः ।
समन्तात् स्थापयेदष्टौ घटान्वा कलशानथ ॥

पुण्याहं वाचयित्वा तु प्रोक्षयेदस्त्रवारिणा ।
हेमाब्जं निक्षिपेत् कुम्भे वर्धन्यां वस्त्रवेष्टितम् ॥

उभयं च विधातव्यं सूत्रकूर्चपिधानयुक् ।
फलपल्लवसंयुक्तं कुम्भे शम्भुं मनोन्मनीम् ॥

वर्धन्यामष्टविद्येशान् कलशेषु समर्चयेत् ।
द्वाराणि द्वारपान्नन्दिप्रमुखान् कलशेषु वा ॥

स्थण्डिले तान् समभ्यर्च्य तोरणैरष्टमङ्गलैः ।
संयुक्तं तद्विहीनं वा दशायुधयुतं न वा ॥ 410

कुण्डे वा स्थण्डिले वापि होमकर्म समाचरेत् ।
पञ्चस्वप्येकस्मिन् पूर्वद्रव्यसमन्वितम् ॥

ततो ग्रामबलिं दद्याद्बिम्बेन सहितं तु वा ।
एवं रात्रौ प्रकर्तव्यं प्रातर्यागेश्वरान्यजेत् ॥

कृत्वा होमं बलिं कुर्याद्वेरेण च समन्वितम् ।
आलयं संप्रविश्यान्ते कुर्याच्चूर्णोत्सवं गुरुः ॥

ततस्तीर्थं प्रकर्तव्यमत्रानुक्तं तु पूर्ववत् ।
प्रातर्वा कारयेत्सर्वं भेरीताडनवर्जितम् ॥

सद्योऽधिवासनं कृत्वा प्राग्वत् सर्वं समाचरेत् ।
चूर्णोत्सवविहीनं वा विधानमिदमाचरेत् ॥ 415

आलये बलियाने च स्यातां तीर्थं विहाय वा ।
बेरयात्रा प्रकर्तव्या सायाह्ने वा प्रदोषके ॥

तीर्थोर्ध्वं चेद्बेरयात्रा बलिकाले प्रवेरतः ।
बेरयात्रा विधेया वा ऽन्यथा च नेगद्यते ॥

बलिहोमादिकं हत्वा भ्रमणं के ले तु वा ।
देवस्य कौतुकं कुर्याद्दिनेष्वेतदपीरितम् ॥

कर्तुर्वाञ्छावशात्कल्पकालेष्वेतच्च वा मतम् ।
कर्तृजन्मावसानर्क्षे चार्द्रानक्षत्र एव वा ॥

चतुर्दश्यामथाष्टम्यां पर्वण्युभयपक्षयोः ।
अयने विषुवे राहुदर्शने दमनोत्सवे ॥ 420

पवित्रे मासपूजायां कृत्तिकादीपरोहणे ।
संवत्सरादिलेखायां नवतोयागतावपि ॥

पूर्वफाल्गुननक्षत्रे नवनैवेद्यकर्मणि ।
अन्यस्मिन्मङ्गले कार्ये कुर्यादेकाहमुत्सवम् ॥

एवं प्रलब्धसंयुक्तं भुक्तये नो चेद्विमुक्तये ।
वारपूजा प्रकर्तव्या रविवारादितः क्रमात् ॥

पञ्चगव्यामृतैर्वापि स्नापयेत् स्नपनाङ्गकैः ।
पुष्कलैर्गन्धपुष्पाद्यैः पूजयेत् परमेश्वरम् ॥

स्थलपद्ममपामार्गं श्रीपर्णं तुलसी तथा ।
गोक्षुरं बिल्वपत्रं च विष्णुक्रान्तिः क्रमेण तु ॥ 425

अर्कवारादिवारेषु पत्राण्येतानि योजयेत् ।
माणिक्यमर्कवारे स्यात् चन्द्रवारे तु मौक्तिकम् ॥

प्रवालं कुजवारे तु बुधे मरकतं भवेत् ।
सुरेड्ये पुष्परागं स्याच्छुक्रे वज्रमिति स्मृतम् ॥

इन्द्रनीलं च सौरे स्यात् सर्वाण्यन्यानि यानि च ।
सर्ववारेषु योग्यानि भूषणानां विधिर्मतः ॥

तद्वर्णाभानि पुष्पाणि वस्त्राणि च नियोजयेत् ।
तत्तद्वर्णाभनैवेद्यं तत्तद्वारे निवेदयेत् ॥

वारपूजावसाने तु वारोत्सवमथाचरेत् ।
अर्कवारोत्सवं वापि कारयेदिष्टसिद्धये ॥ 430



ग्रहपीडाविनाशार्थमारोग्यार्थं विशेषतः ।
जगत्क्षोभविनाशार्थं बाधा येन ग्रहेण च ॥

तद्वारपूजा कर्तव्या तद्वारोत्सवसंयुता ।
तत्तद्वारविभेदेन गन्धादिग्रहणं न वा ॥

संवत्सरोत्सवः प्रोक्तस्तथा मासोत्सवोऽपि च ।
वारोत्सवश्च विप्रेन्द्रा विशेषस्तत्र कथ्यते ॥

पूर्वाह्णे ब्राह्मणानां तु मध्याह्ने क्षत्रियस्य तु ।
सायाह्ने वैश्यजातेस्तु चतुर्थस्यार्धरात्रके ॥

ध्वजस्यारोहणं कुर्याद्ध्वजारोहणपूर्वकम् ।
भेरीताडनपूर्वं वा बीजनिर्वापपूर्वकम् ॥ 435

ब्राह्मणादित्रयाणां वा शूद्रे वाङ्कुरपूर्वकम् ।
नगरे ध्वजपूर्वं वा मङ्गले भेरिपूर्वकम् ॥

पत्तनेऽङ्कुरपूर्वं वा तद्वच्छूद्रे प्रकीर्तितम् ।
चतुस्सहस्रकादूर्ध्वं वैप्रे ग्रामे महत्तरे ॥

पुरादौ सङ्करो नोक्त उत्सवानां द्विजोत्तमाः ।
सप्तषट्पञ्चवेदैस्तु तालैर्वा ध्वजदण्डके ॥

ध्वजस्य वेदिकां कुर्याच्छूद्रादीनां विलोमतः ।
ध्वजे ध्वजो न कर्तव्यः कर्तव्यो वृषभध्वजः ॥

उत्सवे चोत्सवो नेष्ट इष्टः शैवोत्सवो द्विजाः ।
सर्वानुकूलनक्षत्रे ध्वजारम्भादिको वरः ॥ 440

श्वेतो रक्तश्च पीतश्च ब्राह्मणादित्रये मतः ।
शूद्रस्य पीतः सर्वेषां श्वेतो वा परिकीर्तितः ॥

आरम्भस्तु पटे मूर्ध्ना पुच्छस्स्यादवसानयुक् ।
ध्वजप्रदक्षिणे काले गच्छेदग्रे गुरुर्न वा ॥

गान्धारः पूर्वदिग्भागे दक्षिणे कौशिको भवेत् ।
पश्चिमे कामरो ज्ञेयस्तक्करागस्तदुत्तरे ॥

एवं च दिग्विभागेन स्वरांस्तु परिकल्पयेत् ।
ध्वजारोहणकाले तु चतुर्ष्वेकतमोऽपि वा ॥

ध्वजारोहादितीर्थान्तं रात्रौ ग्रामबलिस्तु वा ।
अथवा ध्वजमूले तु देवानां बलिरेव वा ॥ 445

नित्योत्सवयुतस्थाने चोत्सवेऽन्यत्र वापि वा ।
ब्रह्मणादिविभेदेन सौम्यादारभ्य कुण्डकम् ॥

प्रदक्षिणक्रमाद्वापि कुर्यादेकाग्निकल्पने ।
चण्डरूपधरो ब्रह्मचारी संमृष्टभोजनः ॥

आत्मानं चण्डकं ध्यात्वा छिन्द्याद्वा ध्वजदण्डकम् ।
उत्सवं वा पवित्रं वा कल्पयेदुभयं तु वा ॥

केत्वङ्कुरो नवाहे स्यात् सप्ताहे चोत्सवाङ्कुरः ।
तीर्थाङ्कुरं तु तत्संख्ये सर्वं सर्वत्र वा मतम् ॥

मध्याह्ने ध्वजपूजा च सोमकुम्भे जलस्य च ।
निक्षेपश्चाथ तत्पूजा रात्रौ वाथ विधीयते ॥ 450

कृतकौतुकबेरस्य तद्ग्रामान्निर्गमोऽपि वा ।
मृगया चेष्टकाले तु कर्तव्या द्विजसत्तमाः ॥

सौरश्चान्द्रो द्विधा प्रोक्तो वत्सरः कामिकागमे ।
सौरः श्रेष्ठ इह प्रोक्तश्चान्द्रो मध्यम उच्यते ॥

सावनस्त्वधमः प्रोक्तस्तेन कार्यं तु नेष्यते ।
उत्सवादिषु कालेषु प्रतिष्ठार्थं न कारयेत् ॥

विधाय शान्तिहोमं तु प्रतिष्ठार्थं तु वा नयेत् ।
अथवान्यप्रकारेण उत्सवं तु विधीयते ॥

ध्वजमेकं समारोप्य ध्वजारोहणपूर्वकम् ।
तस्मिन्नेव दिने विप्राः मन्दीभूते दिवाकरे ॥ 455

श्रावयेत्तीर्थदिवसं गजाद्यारोहितेन च ।
चण्डालेन सदारेण कुर्याद्घोषयुतेन च ॥

तद्यात्रावेव कर्तव्यं भेरीताडनपूर्वकम् ।
बेराग्रे शूलसंयुक्ते देवानावाह्य पूर्ववत् ॥

आश्राव्य तीर्थदिवसं ग्रामादिबलिवर्जितम् ।
ग्रामन्येव विधयैवं तस्माद्गत्वा जलाशयम् ॥

स्थण्डिलद्वितयं कृत्वा जलतीरे गुरूत्तमः ।
एकत्र स्थापयेच्छूलमन्यत्र कलशान्न्यसेत् ॥

नवकैः स्नापयेच्छूलं तच्छूलमवगाहयेत् ।
प्रविश्य देवतास्थानं तद्दिनाद्वा दशाहके ॥ 460

यागारम्भं पुनः कुर्यादङ्कुरार्पणपूर्वकम् ।
एकहोमसमायुक्तं ग्रामादिबलिमाचरेत् ॥

बेरयात्रासमायुक्तं दिवसं प्रत्यहर्निशम् ।
पञ्चमे दिवसे तत्र सिकता अस्त्रमन्त्रिताः ॥

विकिरेत् सदनं सर्वमन्तर्बाह्यविकल्पितम् ।
अष्टादशदिने प्राप्ते बीजनिर्वापमाचरेत् ॥

तीर्थार्थं तन्निशायां तु धाम्नस्त्वष्टदिशास्वपि ।
ध्वजानष्टौ समारोप्याङ्किता˘ल्लोकेशवाहनैः ॥

तदस्त्राङ्कान् वृषाङ्कान्वा मूर्तिपैश्च समन्वितत् ।
ततः प्रभृति कर्तव्यं होमकर्म विशेषतः ॥ 465

तदन्ते बलिदानं स्याद्बेरयात्रासमन्वितम् ।
एवं नवदिनं कृत्वा दशमे तीर्थमाचरेत् ॥

ध्वजानामष्टसंख्यानां तत्रात्रावरोहणम् ।
कृत्वा तद्दिनमारभ्य नानावाद्यसमन्वितम् ॥

नानागानसमायुक्तं नानावाद्यसमन्वितम् ।
ग्रामप्रदक्षिणं कृत्वा परिवेषक्रमं नयेत् ॥

सप्ताहमेवं कृत्वान्ते सर्वारम्भं विवर्ज्य च ।
स्नापयेन्मौनमास्थाय सप्ताहं तदनन्तरम् ॥

चण्डेश्वरं पुरो नीत्वा बेरयात्रामनन्तरम् ।
बलिहोमविहीनं तु नयेत् सप्ताहदरात् ॥ 470

चण्डपूजासमायुक्तं होमस्नपनसंयुतम् ।
तदन्ते कारयेत्तीर्थं त्रिशूलेन समन्वितम् ॥

ध्वजावरोहणं कुर्यात् तद्रात्रौ पूर्वकर्मणा ।
बेरयात्राविहीनं वा विभिमेनं समाचरेत् ॥

नवाह्नलिङ्गं कृत्वा वा दिक्पालस्त्रार्थमेव वा ।
तैस्त्रिशूलेन वा कुर्याद्ग्रामादौ वा बलिक्रियाम् ॥

नित्योत्सवाह्नलिङ्गानि दश वा परिकल्पयेत् ।
द्वादशाब्दावसानान्तध्वजस्थापनमेव वा ॥

जीर्णादिदोषे तं त्यक्त्वा ध्वजमन्यं निवेशयेत् ।

॥ इति उत्तरकामिके महातन्त्रे महोत्सवविधिः षष्ठः पटलः ॥

---

## ॥ नीराजनविधिः ॥

नीराजनविधिं वक्ष्ये स च रात्रौ विधीयते ।
प्रदोषादौ विधेयो वा धूपदीपावसानके ॥

उत्सवादौ च कर्तव्यमन्यस्मिन्मङ्गलेऽपि च ।
तदर्थं स्थण्डिलं कुर्यान्मण्डलं वा समाचरेत् ॥

गर्भेऽर्धमण्डपे वापि स्नपनाख्ये तदग्रके ।
महानसे वा चान्यस्मिन् प्रोक्षयेदस्त्रमन्त्रतः ॥

पात्राण्याहृत्य शुद्धानि दीपाधारयुतानि च ।
पात्राणि च विधेयानि बलिपात्रोक्तकर्मणा ॥

दीपाधारांश्च तन्मध्ये कारयेदेकमात्रतः ।
पादाङ्गुलविवृद्ध्या तु नवाङ्गुलसमावधि ॥ 5

विस्तारस्तत्समो वापि तदर्धं वोच्चमिष्यते ।
वसुधा मध्यमे भक्ते नवधा मानमीरितम् ॥

ओष्ठो यवद्वयादर्धवृद्ध्या मात्रावसानकः ।
पात्रमानघनं वार्धं मध्ये सुषिरसंयुतम् ॥

पद्माकारं च वा कुर्यात् पालिकापादसन्निभम् ।
धुत्तूरकुसुमाकारं शरावाकारमेव वा ॥



चतुरष्टदलोपेतं सर्वालङ्कारसंयुतम् ।
एकपात्रे नयेदेकदीपाधारं तु पञ्च वा ॥

नव वा कारयेत्तांश्च संसक्तान् सान्तरांस्तु वा ।
पिष्टेनान्नेन वा दीपधारा देवार्थमेव च ॥ 10

देव्यर्थं प्रतिमार्थं च विशेषान्नृत्तरूपिणः ।
एकत्र तिलमन्यत्र सर्षपं लवणं तथा ॥

कार्पासबीजमन्यत्र गोमयं पिष्टमेव च ।
कर्मकहविष्यं च वटाश्वत्थदलानि च ॥

चतुर्दिक्षु च कोणेषु क्रमेण परिकल्पयेत् ।
मध्यमे दीपपात्रं तु पञ्च वा परिकल्पयेत् ॥

गन्धमर्घ्यं च पुष्पं च भस्म चाग्नेयकोणतः ।
सर्वत्र दीपान्वा कुर्याच्चवसंख्यान् समुज्ज्वलान् ॥

घृताद्रांस्तैलसंयुक्तान् ब्रह्माङ्गसहितान्न्यसेत् ।
लोकपाला विरिञ्चेन मूर्तयो मूर्तिपास्तु वा ॥ 15

वसवो वह्निसंयुक्ता वामद्याः शक्तयः पराः ।
कलाभूतानि देव्याश्च ब्रह्माद्याः कारणेश्वराः ॥

पात्रदेवास्समाख्याताः वह्निर्वा दीपदेवताः ।
प्रस्थपादादि तद्वृद्ध्या चाढकान्तमुदाहृतम् ॥

तिलादीनां प्रमाणं तु पात्राणां कर्तुरिच्छया ।
संस्कारैस्सर्वसामान्यैस्संस्कृत्योक्तक्रमेण च ॥

वह्निबीजमनुस्मृत्य दीपं दीपेन योजयेत् ।
सर्वतोद्यसमायुक्तं शङ्खध्वनिसमन्वितम् ॥

गाननृत्तसमायुक्तं धारयेत्तान् यथाक्रमात् ।
स्त्रीभिर्वा वाहयेद्दीपानथवा परिचारकैः ॥ 20

देवाग्रे स्थापयित्वा तांस्त्रिराद्युपरि पूजयेत् ।
दत्त्वा पाद्यमजातेन दद्यादाचमनं हृदा ॥

गन्धादिनार्चयेत् सर्वान् स्वबीजेन हृदादिना ।
त्रिवारमेकवारं वा भ्रामयेच्छिवमूर्धनि ॥

संगृह्य तानि हस्ताभ्यां दीपपात्राणि पूजयेत् ।
आत्मतत्त्वादिभिर्मन्त्रैर्दद्याच्छिष्यकराम्बुजे ॥

सोऽपि संगृह्य तं दीपं सप्रणामं निवेशयेत् ।
सितं पूतं सुगन्धं च निर्माल्यकमनन्तरम् ॥

गृहीत्वा भस्महस्तेन भ्रामयित्वा शिवोपरि ।
त्रिवारं दीपमध्ये तु निक्षिप्य तदनन्तरम् ॥ 25

अङ्गुष्ठानामिकाभ्यां तु तिलकं पञ्चवक्त्रके ।
ललाटेषु क्रमात् कुर्याद्धृदि बाह्वोरनुक्रमात् ॥

पीठेऽपि तिलकं कुर्यात् देवीवामप्रदेशके ।
देवी व्यक्तस्वरूपा चेत् तिलकं च पुरो भवेत् ॥

कण्ठप्रदेशे मूलेन हृदयेनाथ वा नयेत् ।
बेरे ललाटहृद्बाहुप्रदेशे तिलकं नयेत् ॥

तद्भस्मना समादाय स्वल्पं चण्डेश्वरादिषु ।
भक्तेष्वन्येषु लोहादिकृतबेरेषु दापयेत् ॥

ततो भक्तजनेभ्यश्च दद्याद्देशिकपूर्वकम् ।
सर्वालङ्कारसंयुक्तं पात्राण्याहृत्य पूर्ववत् ॥ 30

सम्प्लाल्यन्यथ निर्माल्यान्यादाय शिवमन्दिरात् ।
पीठाग्रे वृषभाग्रे वा गोपुरस्यान्तिकेऽपि वा ॥

वृक्षमूलेऽथवान्यस्मिन्निक्षिपेत्ताननुक्रमात् ।
द्रव्याणि गुरवे दद्याद्दहेद्वा तेन वह्निना ॥

तिलादीनां प्रमाणं तु यथेष्टं वा प्रकीर्तितम् ।
राज्ञामपि च कर्तव्यं किन्त्वग्निस्तत्र देवता ॥

राजाभिषेककालादौ कुर्याद्विजयहेतवे ।
देशिकस्याभिषेकेऽपि किन्तु दीपविवर्जितम् ॥

तण्डुला विहितास्तत्र रात्रौ चेद्दीपसंयुतम् ।

॥ इति उत्तरकामिके महातन्त्रे नीराजनविधिः सप्तमः पटलः ॥

## ॥ कृत्तिकादीपावलिविधिः ॥

दीपावलिं प्रवक्ष्यामि शृणुध्वं द्विजसत्तमाः ।
मासे तु कार्तिकाख्ये तु नक्षत्रे कृत्तिकाह्वये ॥

पूर्णायां वाथ तद्योगे सर्वकामप्रसिद्धये ।
रव्यस्तमयवेलायां दीपारोहणमाचरेत् ॥

कर्तुरष्टमराश्यादिलग्नदोषनिरीक्षणम् ।
विष्टिवैनाशिकर्क्षादिप्रेक्षणं तत्र संमतम् ॥

रवेरस्तमयात्पूर्वं यामपादावसानकम् ।
कालस्तदूर्ध्वं यामार्धपर्यन्तः काल एव वा ॥

एवं निश्चित्य कालं तु कारयेदङ्कुरार्पणम् ।
दीपारोपणपूर्वेद्युरधिवासनमारभेत् ॥ 5

देवाग्रे स्थापयेद्दण्डं प्रतिगोपुरमेव वा ।
अष्टदिक्षु चतुर्दिक्षु त्रिष्वेकत्र च वा द्वयोः ॥

दीपदण्डप्रमाणं तु ध्वजदण्डप्रमाणवत् ।
स दण्डो नालिकेरो वा तालः क्रमुकवेणुजौ ॥

ध्वजदण्डोक्तदण्डो वा तत्र कीलांश्च योजयेत् ।
द्वादशाङ्गुलमारभ्य व्योमाङ्गुलविवृद्धितः ॥

पञ्चाशत्करजान्तं तु दण्डात्कीलविनिर्गमः ।
द्विमात्रात् पादवृद्ध्या तु षडङ्गुलसमावधिः ॥

विस्तारः स्याद्घनं तस्य त्र्यंशमर्धं त्रिपादकम् ।
दण्डप्रोता भवेयुर्वा लग्ना वा कील्यादयः ॥ 10

नवकीलं समारभ्य व्योमकीलविवृद्धितः ।
सप्तविंशतिकीलान्तं दिश्येकस्यां नियोजयेत् ॥

तिसृष्वन्यासु दिक्ष्वेवं कीलांश्च विनिवेशयेत् ।
त्रिकालं वा चतुष्कीलमिष्टमानसमन्वितम् ॥

तदग्रे स्थापयेत् पात्रधारणार्थं विशेषतः ।
दारूद्भवानि चक्राणि प्रतिकीलं तु योजयेत् ॥

दीपिकाः प्रतिचक्रं तु वसु द्वादश षोडश ।
योजयेद्वा बहिश्शुष्कैर्नालिकेरदलादिभिः ॥

छादयेद्वाथ चक्राणि तन्निश्छिद्रं यथा भवेत् ।
एकहस्तविशालं तु द्विगुणायतसंयुतम् ॥ 15

दक्षिणे कल्पयेद्द्वारं दण्डारोहणसिद्धये ।
कल्पमेतत् समाख्यातमनुकल्पमथोच्यते ॥

हित्वा चक्राणि सर्वाणि प्रतिकीलं तु दीपिकाः ।
योजयेदुपकल्पं स्याद्धोमकूटविवर्जितम् ॥

दण्डं विहाय यत्क्लृप्तमकल्पमिति कथ्यते ।
दीपकूटान्नयेद्दिक्षु विदिक्ष्वपि तदन्तरे ॥

प्रतिदेवं तु कर्तव्या दीपिका बहुसंख्यया ।
स्थापयेद्दीपदण्डांश्च मालाकारेण वा बहून् ॥

तोरणकारतो वापि वृत्ताकारेण वा बहून् ।
प्रभाकारांश्च वा कृत्वा तत्र दीपांश्च योजयेत् ॥ 20

प्रासादे गोपुरे साले परिवाराल्यादिषु ।
मण्डपे बलिपीठादौ कूपे वाथ गृहेऽपि वा ॥

वृषे महानसे कुर्यात् पुष्पमण्डपिकादिषु ।
बहिर्वा कल्पयेद्दीपान् ग्रामादिष्वपि सर्वतः ॥

दीपावलिरियं कार्या स्वधिवासनपूर्वकम् ।
अस्त्रेण शोधयेद्दण्डं प्रणवेन तु पूजयेत् ॥

षट्चतुष्पञ्चतालेनावटं भूमौ समाचरेत् ।
स्थापयित्वा तु पूर्वेद्युस्तन्मूले वेदिकां नयेत् ॥

ध्वजदण्डे यथा वेदी किन्तु पद्मयुता न वा ।
शिल्पिनं मोचयित्वान्ते पुण्याहं वाचयेत्ततः ॥ 25

दीपेन पूजयेद्दण्डं गन्धपुष्पादिसंयुतम् ।
बध्वा प्रतिसरं चान्तः प्रविश्येदं समाचरेत् ॥

आलये मण्डपे वापि यागमण्डप एव वा ।
मनोरमे शुभेऽन्यत्र गोमयेनोपलेपिते ॥

स्थण्डिलं तत्र सङ्कल्प्य शस्त्रेण प्रोक्षयेद्गुरुः ।
नव वा पञ्च पात्राणि वैकं वा तत्र विन्यसेत् ॥

नीराजनविधौ देवास्ते सर्वेऽत्रापि संमताः ।
पात्रे प्रणव इत्युक्तश्चन्दनाद्यैस्समर्चयेत् ॥

कुण्डं वा स्थण्डिलं वापि तत्पूर्वस्मिन्प्रकल्पयेत् ।
शिवाग्निं तत्र संपाद्य शिवं साङ्गं च तर्पयेत् ॥ 30

समिधाज्येन चरुणा ततः कार्पासबीजतः ।
क्षीरेण शतमर्धं वा तदर्धं वा समाचरेत् ॥

मूलेनाङ्गैर्दशांशेन वह्निबीजमनुस्मरन् ।
शतमष्टोत्तरं हुत्वा पूर्णामन्ते विधाय च ॥

देवं साङ्गं विसृज्याथ दीपानारोपयेद्गुरुः ।
तैलेनाज्येन वा पूर्णं पात्रं सर्वात्मकं स्मरन् ॥

वह्निबीजमनुस्मृत्य मध्यादिभ्यः क्रमेण तु ।
गन्धपुष्पादिभिस्त्विष्ट्वा शिवाग्निं च विसर्जयेत् ॥

गृहीत्वा मध्यपात्रं तु दीपं दीपिकया गुरुः ।
सर्वालङ्कारसंयुक्तं तरुणाख्यं तु दीपकम् ॥ 35

दण्डोर्ध्वे स्थण्डिले वापि हृदयेन निवेशयेत् ।
होमान्ते दीपदण्डस्य कौतुकं वा समाचरेत् ॥

ततो द्वितीयदिवसे चतुर्दिक्षु विदिक्षु च ।
चतुस्तोरणसंयुक्तं चतुष्कूटसमन्वितम् ॥

कूटानि पञ्चवेदाग्निहस्तानीष्टान्तराणि च ।
पूर्वस्यामथवाग्नेय्यां कूटमेकं तु वा नयेत् ॥

तोरणानि यथायोग्यन्नयेदिच्छावशेन तु ।
सर्वत्र तोरणं कूटं दर्भमालादिशोभितम् ॥

सर्वालङ्कारसंयुक्तं कदलीपूगसंयुतम् ।
एवं संपाद्य सर्वं तु मन्दीभूते दिवाकरे ॥ 40

पुण्याहं वाचयित्वा तु दण्डं गन्धादिनार्चयेत् ।
वस्त्रयुग्मेन वैकेन वेष्टयेद्दण्डमूलकम् ॥

स्वर्णादिनिर्मितं पात्रं दण्डोर्ध्वे विनिवेशयेत् ।
कार्पासबीजसाराभ्यां युक्तं तैलाज्यसंयुतम् ॥

कूटेषु कारयेद्धीमान् कुण्डेषु स्थण्डिलेषु वा ।
अधिवासनहोमेन समं होमं समाचरेत् ॥

ब्रह्माग्नीशे तु कूटे वा देशिको होममाचरेत् ।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥

अत्र होमाधिपाः प्रोक्ता दीपदण्डे सदाशिवः ।
पलाशवटशम्यर्कास्सर्वे बहेरथापि वा ॥ 45

आचार्यं पूजयेत्पश्चाद्वस्त्रकाञ्चनभूषणैः ।
पूर्णाहुतिप्रदानान्ते सर्वान्दीपान् द्विजोत्तमाः ॥

एकीकृत्य हृदा पात्रे स्थापयेद्वह्निबीजतः ।
सर्वालङ्कारसंयुक्तं मङ्गलाङ्कुरशोभितम् ॥

वितानध्वजसमायुक्तं छत्रचामरसंयुतम् ।
नानावाद्यसमायुक्तं नानानृत्तसमन्वितम् ॥

वेरेण च समायुक्तं वेरयात्रायुतं न वा ।
गृहस्थो ब्रह्मचारी वा दीपं संगृह्य पाणिना ॥

दण्डं शीघ्रं समारुह्य तदूर्ध्वे सौम्यवक्त्रयुक् ।
दीपयेदूर्ध्वपात्रे तु तस्मात् सोऽप्यवतार्य तु ॥ 50

विज्ञापयेन्महेशाय तस्मिन्काले तु चक्रगान् ।
मूर्धादिपादपर्यन्तं दीपानारोपयेत्ततः ॥

दीपारोहणकर्तारं पूजयेत् परिचारकम् ।
वस्त्राद्यैर्देशिको धीमान् उत्तराभिमुखस्थितः ॥

ज्योतिर्लिङ्गमनुस्मृत्य दहेत् कूटचतुष्टयम् ।
अथवा कूटदाहं च हित्वान्यत् सर्वमाचरेत् ॥

तोरणाधो नयेद्देवं दीपदण्डप्रदक्षिणम् ।
कारयित्वा त्रयं ग्रामं नयेद्दीपसमन्वितम् ॥

हर्म्यप्रदक्षिणं कृत्वा नयेदास्थानमण्डपम् ।
प्रासादादिषु सर्वत्र दीपानारोपयेत्तदा ॥ 55

प्रविश्य देवतास्थानं परिवेषक्रमं नयेत् ।
स्नपनं कारयेन्नो वा बेरलिङ्गे तदुक्तितः ॥

प्रभूतं तु हविर्दत्वा ताम्बूलं तु निवेदयेत् ।
पृथुकं दापयेद्देवे नाळिकेरफलान्वितम् ॥

मरीचिजीरकोपेतं गुळसारसमन्वितम् ।
अङ्कुरार्पणहीनं वा क्रियामेनां समाचरेत् ॥

गुरवे दक्षिणां दद्याद्धोतृभ्यस्तदनन्तरम् ।
अत्रैव योग्यं यद्द्रव्यं हेमकूटादिदण्डकम् ॥

तदङ्गमपरं चान्यद्देशिकाय प्रदापयेत् ।
इदं कर्म विधेयं स्याद्दाङ्गामावासकेऽपि वा ॥ 60

ग्रामादौ च विधेयं स्याद् ब्रह्मस्थानादिषु द्विजाः ।
अन्येषामपि मर्त्यानां वाहनानां क्षयेऽपि च ॥

गोशालायां विशेषेण तेषां रोगनि[illegible]व ।
यां तिथिं समनुप्राप्योदयं याति च भास्करः ॥

सा तिथिः सकला ज्ञेया शुक्ले कृष्णे द्विजोत्तमाः ।
यदृक्षं समनुप्राप्य अस्तं याति दिवाकरः ॥

तदुक्तं सकलं ज्ञेयं नक्षत्रेऽप्येवमेव तु ।
एवं ज्ञात्वा प्रयोक्तव्यं सर्वकर्म द्विजोत्तमाः ॥

॥ इति उत्तरकामिके महातन्त्रे कृत्तिकादीपावलिविधिः अष्टमः पटलः ॥

---

## ॥ मार्गशीर्षपुष्यमासविधिः ॥

मार्गशीर्षाख्यमासे तु यजेदार्द्रोडुके शिवम् ।
घृतस्नानसमोपेतं प्रागुक्तविधिना सह ॥

केवलस्नपनं वापि कारयित्वा विशेषतः ।
गन्धाद्यैरर्चयेद्देवं नानागानैश्च तोषयेत् ॥

ग्रामप्रदक्षिणं नीत्वा देवं धाम्नि निवेशयेत् ।
अथवा बलिहोमाभ्यां युक्तं रात्रौ दिवापि वा ॥

बेरप्रदक्षिणं कृत्वा सर्वालङ्कारसंयुतम् ।
चूर्णोत्सवसमायुक्तं तीर्थं कृत्वालयं नयेत् ॥

डोलारोहं ततः कुर्यात् सायाह्नसमये द्विजाः ।
सर्वालङ्कारसंयुक्तं कृत्वा स्तम्भद्वयं तथा ॥ 5

स्तम्भलक्षणसंयुक्तं तयोर्यष्टिं निवेशयेत् ।
तन्मध्ये विन्यसेद्दोलां चतुर्हस्तसमन्विताम् ॥

चतुर्बाहुसमायुक्तामूर्ध्वप्रच्छादनान्विताम् ।
नानालङ्कारसंयुक्तामथ बाहुद्वयान्विताम् ॥

एकहंसासनोपेतां पुण्याहप्रोक्षणान्विताम् ।
अस्त्रतोयेन संप्रोक्ष्य कल्पयेदासनं यथा ॥

फलकायां भजेद्धंसं हृदा हंसासने यजेत् ।
ब्रह्माणं दक्षिणे बाहौ वामबाहौ यजेद्धरिम् ॥

विष्टरे रुद्रमिष्ट्वा तु फलकोर्ध्वे शिवं यजेत् ।
वामे देवीं समभ्यर्च्य सेनानीं मध्यमे यजेत् ॥ 10

गन्धाद्यैरथवा देवीमर्चयेत् फलकोपरि ।
नानागानसमायुक्तं नानानृत्तसमन्वितम् ॥

नानावाद्यसमोपेतं तदा सन्तोषयेद्धरम् ।
अन्यत्रापि च कर्तव्यं डोलारोहणमिष्टदम् ॥



प्रत्यहं वा विधेयं स्यात् सर्वकामार्थसिद्धये ।
दोलाचलनमिष्टं स्याद्धरस्यारोहणं न वा ॥

अस्मिन्मासे सपित्रर्क्षे विशेषाज्यसमन्वितम् ।
पायसं दापयेच्छम्भोर्देव्या अपि च संमतम् ॥

पुष्यमासे तु पुष्यर्क्षे कुर्यात् क्षौद्राभिषेचनम् ।
महाहविर्निवेदान्ते बेरयात्रां प्रकल्पयेत् ॥ 15

पूर्वोक्तविधिना कर्ता फलमिष्टमवाप्नुयात् ।

॥ इति उत्तरकामिकाख्ये महातन्त्रे मार्गशीर्षपुष्यमासपूजाविधिः नवमः पटलः ॥

—:•:—

## ॥ माघमासे घृतकम्बलपूजाविधिः ॥

माघमासे तु माघर्क्षे कुर्याद्धि घृतकम्बलम् ।
कपिलं केवलं चाज्यं कृमिकीटादिवर्जितम् ॥

नीरोमं नूतनं शुद्धं सुगन्धं स्थापयेद्गुरुः ।
शस्त्रेण निक्षिपेत्तोये वारुणं बीजमुच्चरन् ॥

तदाज्यं पिण्डवत्कृत्वा कुङ्कुमागरुसंस्कृतम् ।
हरिद्राचूर्णकर्पूरचूर्णाभ्यामपि संस्कृतम् ॥

हेमादिपात्रे संस्थाप्य धूपयित्वाभिमन्त्रयेत् ।
पञ्चब्रह्मषडङ्गैश्च शिवेन तदनन्तरम् ॥

विशेषस्नपनं कुर्यात् पञ्चगव्यामृतैस्तु वा ।
विशेषपूजां कृत्वान्ते स्थण्डिले स्थापयेद्घृतम् ॥ 5

गन्धाद्यैरर्चयेद्धीमान् हृन्मन्त्रं सम्यगुच्चरन् ।
तत्पूर्वे स्थण्डिले धीमांस्तर्पयेच्छिवपावकम् ॥

पलाशसमिदाज्यान्नतिललाजसमन्वितम् ।
शतमष्टोत्तरं हुत्वा पूर्णामन्ते विधाय च ॥

घृते संपातहोमं च पवित्रारोहवर्त्मना ।
कृत्वा संस्थापयेत्पूर्वं स्थण्डिले सापिधानकम् ॥

कवचेनावकुण्ठ्याथ प्रातर्मध्याह्न एव च ।
संपूज्य पूर्ववद्देवं स्नपनादिसमन्वितम् ॥

विशेषेणार्चयित्वा तु सर्वालङ्कारसंयुतम् ।
ग्रामप्रदक्षिणं कृत्वा शिवमन्त्रं समुच्चरन् ॥ 10

लिङ्गं सर्वत्र चालिप्य पीठान्तं सर्वपीठकम् ।
गन्धाद्यैरर्चयित्वा तु कम्बलेन च वेष्टयेत् ॥

दद्यादेवं हविः शम्भोस्ताम्बूलेन समन्वितम् ।
सन्ध्यान्तरे परेद्युर्वा कम्बळं विवर्ज्य च ॥

पूर्ववत् पूजयेद्देवं गुरुः संपूजयेत्तदा ।
दक्षिणां दापयेत्तस्य यथाविभवविस्तरम् ॥

अङ्कुरार्पणपूर्वं वा रहितं वैतदाचरेत् ।

॥ इति उत्तरकामिकाख्ये महातन्त्रे माघमासघृतकम्बलपूजाविधिः दशमः पटलः ॥

---

## ॥ माघशिवरात्रिपूजाविधिः ॥

अथ वक्ष्ये विशेषेण शिवरात्रिव्रतं द्विजाः ।
श्रृण्वन्तु संयता यूयं व्रतानामुत्तमोत्तमम् ॥

अनुष्ठितं पुरा देव्या यदन्यैरप्यनुष्ठितम् ।
मया सह मुदा सार्धं रमन्तीप्सितमाययुः ॥

न बाध्यन्ते यमादेशात् किङ्करैः क्रूरदृष्टिभिः ।
यमं चापि न पश्यन्ति नरकाणि च नो ययुः ॥

श्रृणुध्वं तद्विधानं हि सर्वेषामपि संमतम् ।
माघमास्यसिते पक्षे विद्यते या चतुर्दशी ॥

तद्रात्रिश्शिवरात्रिस्स्यात् सर्वपुण्यशुभावहा ।
तस्यामेव शिवे पूजा शिवलिङ्गे शिवालये ॥ 5

कृतस्नानोपवासेन पूर्वेऽह्नि नियतेन च ।
साधकेनोपचारेण कर्तव्या श्रद्धया सह ॥

पञ्चशुद्धिं पुरा कृत्वा पूर्वोक्तविधिना ततः ।
शिवासनं प्रकल्प्यात्र मूर्तिं विद्यातनुं ततः ॥

आवाह्य सन्निधीकृत्य शिवं पाद्यादिनार्चयेत् ।
अभ्यज्य गन्धतैलेन पिष्टेनोद्वर्त्य शोधयेत् ॥

पञ्चामृतैः पञ्चगव्यैस्तत्तदुक्त्याभिषेचयेत् ।
गन्धोदकेन विधिना घृताद्यैरभिषेचयेत् ॥

पवित्रैः पञ्चभिः कुर्यात् पञ्चाङ्गैश्च क्रमेण तु ।
पिष्टेन पुनरप्येवमुद्वर्त्यामलकेन तु ॥ 10

चूर्णेनापि सपिष्टेन रजन्या धूपितेन च ।
अस्त्रेण शोधितेनैव शोधयेदुदकेन तु ॥

नालिकेरोदकेनैव तं पश्चादभिषेचयेत् ।
गन्धोदकेन मूलाङ्गब्रह्मभिश्चाभिषेचयेत् ॥

कार्पासकेन शुद्धेन वस्त्रेण परिमार्जितम् ।
लिङ्गमाच्छाद्य देवाङ्गाग्रेन शुद्धेन वाससा ॥

यामं प्रति पृथग्द्रव्यैर्गन्धाद्यैश्च समर्चयेत् ।
चन्दनागरुकर्पूरकुङ्कुमाद्यैः क्रमेण [illegible] ।

मल्लिकोत्पलपुष्पैश्च जातिपुष्पैश्च बि[illegible]कैः ।
दूर्वाक्षततिलैश्चापि संयुक्तं सम्यगर्चयेत् ॥ 15

गुग्गुल्वगरुनिर्यासससर्जसारैश्च धूपयेत् ।
दीपयेत् सुसितेनैव वर्तिनाज्यप्लुतेन च ॥

पायसं प्रथमे यामे द्वितीये कृसरं भवेत् ।
गोळमन्नं तृतीये तु शुद्धान्नं च चतुर्थके ॥

निवेद्य च ततः पश्चात् सर्वव्यञ्जनसंयुतम् ।
सघृतं गुळसंयुक्तं ताम्बूलं च निवेदयेत् ॥

धूपमारात्रिकोपेतं शिवाय विनिवेद्य च ।
होमं कुर्याद्विशेषेण कुण्डे वा स्थण्डिलेऽथ वा ॥

कुण्डकल्पेऽथवा पात्रे कुण्डसंस्कारपूर्वकम् ।
शिवाग्निं कल्पयित्वाग्नौ हृदि कल्प्य शिवासनम् ॥ 20

संपूज्य तत्र देवेशं जुहुयाज्ज्वलितेऽनले ।
समिदाज्यहविर्लाजतिलैर्मूलाङ्गब्रह्मभिः ॥

शिवाद्दशांशमन्येषां मन्त्राणामाहुतिर्भवेत् ।
दशादिदशवृद्ध्या तु यावत् पञ्चाशदाहुतीः ॥

कृत्वा पूर्णां शिवेनैव निश्छिद्रपरिपूरणम् ।
वन्दयित्वाथ तद्भस्म देवेशमभिवन्द्य च ॥

पूजयेत् पुनरप्येवं प्रतियामं पुनः पुनः ।
स्वयं कर्तुमशक्तश्चेत् स्वार्थमन्येन कारयेत् ॥

नीत्वा जागरणं रात्रौ प्रभाते विमले ततः ।
कृतनित्यक्रियः पश्चात् स्नपनं विधिपूर्वकम् ॥ 25

देवं पूर्ववदभ्यर्च्य गुरुपूजां ततो नयेत् ।
दक्षिणां च ततो दद्याद्वित्तशाठ्यविवर्जितः ॥



लिङ्गिनश्शिवभक्तांश्च ब्राह्मणानतिथीनपि ।
पूजयेच्छक्तितो भक्त्या पूजां सम्यक् समाप्य च ॥

गत्वा बन्धुजनैस्सार्धं स्वगृहं प्रति साधकः ।
पादौ हस्तौ च संक्षाल्य पारणां तु समाचरेत् ॥

॥ इति उत्तरकामिकाख्ये महातन्त्रे माघशिवरात्रिपूजाविधिः एकादशः पटलः ॥

---

## ॥ फाल्गुनमासगन्धपूजाविधिः ॥

उत्तरे फाल्गुने मासे सर्वगन्धैश्च पूजयेत् ।
विशेषस्नपनोपेतं विशेषयजनान्वितम् ॥

दिक्पालपलवृद्ध्या तु पलसाहस्रकावधि ।
प्रमाणं चन्दनस्योक्तं तदर्धमगरुर्भवेत् ॥

तत्पादं वा तदर्धं वा कुङ्कुमं स्यात्तदर्धतः ।
पादमष्टांशकं वेष्टं तदर्धं पादमेव वा ॥

कर्पूरं द्विगुणं वापि पिष्ट्वा सर्वं च धूपयेत् ।
वासितं गन्धपुष्पैश्च सर्वमन्त्रैश्च मन्त्रितम् ॥

घृतकम्बलमार्गेण संस्कृतं होममाचरेत् ।
गन्धैरालिप्य लिङ्गं तु सपीठं शिवमन्त्रतः ॥ 5

सुगन्धपुष्पमालाभिर्भूषयेल्लिङ्गपिण्डिके ।
कम्बलेन विना सर्वं घृतकम्बलवन्नयेत् ॥

सर्वरोगसमुत्पत्तावद्भुते वाञ्छितासये ।
आभिचारकृते दोषे विधानमिदमाचरेत् ॥

॥ इति उत्तरकामिके महातन्त्रे फाल्गुनमासगन्धपूजाविधिः द्वादशः पटलः ॥

---

## ॥ चैत्रमासदमनपूजाविधिः ॥

दमनारोपणं वक्ष्ये चैत्रमासफलप्रदम् ।
हरकोपात् पुरा जातो भैरवो दमनाह्वयः ॥

दान्तास्तेन सुरास्सर्वे दानवाश्च महाबलाः ।
प्रीतेनाथ शिवेनोक्तो विटपो भव भूतले ॥

दान्तत्वं समनुप्राप्य मद्भोगाय भविष्यसि ।
पूजयिष्यन्ति ये मर्त्या देवं त्वत्पल्लवादिभिः ॥

ते यास्यन्ति परं स्थानं दमनस्य प्रभावतः ।
ये पुनर्न करिष्यन्ति दामनं पर्व मानवाः ॥

तेषां तु चैत्रमासोक्तं दत्तं पुण्यफलं मया ।
सप्तम्यां वा त्रयोदश्यां गत्वा दमनकान्तिकम् ॥ 5

शोधयित्वास्त्रमन्त्रेण पूजयेत्संहिताणुभिः ।
अथ संबोधयेदामं शिववाक्येन मन्त्रवित् ॥

हरप्रसादसंभूत त्वमत्र सन्निधीभव ।
शिवकार्यं समुद्दिश्य नेतव्योऽसि शिवाज्ञया ॥
एवं दमनमामन्त्र्य संरक्ष्य भवनं व्रजेत् ।
यदि दूरं समानीय समूलं मृत्तिकान्वितम् ॥
पुनरारोप्य मृत्पूर्णे पात्रे संसिच्य वारिणा ।
गृहेऽप्यामन्त्रणं कार्यं पूर्वोक्तविधिना बुधः ॥
सायाह्नसमये प्राप्ते निदध्यादधिवासनम् ।
आह्नस्य यागवस्तूनि कृतस्नानादिसत्क्रियः ॥ 15
यथाविधि समभ्यर्च्य भानुशङ्करपावकान् ।
पश्चिमे देवदेवस्य तस्य मूलं मृदायुतम् ॥
सद्योजातेन मनुना दीपितं हृदयेन वा ।
वामेन शिरसा वापि नालं धात्रीमथोत्तरे ॥
दक्षिणे भस्मपात्रं च शिखयां रूपिणाथ वा ।
पुंसा वा वर्मणा प्राच्यां सपुष्पं दन्तधावनम् ॥
फलं मूलेन गायत्र्या ऐशान्यां गन्धसंयुतम् ।
पञ्चाङ्गमञ्जलौ कृत्वा दाम पुष्पाक्षतान्वितम् ॥
विज्ञापयेज्जगन्नाथं दमनारोपणं प्रति ।
आमन्त्रितोऽसि देवेश प्रति काले मया प्रभो ॥ 20
कर्तव्यं च यथालाभं पूर्णं पर्व तवाज्ञया ।
इति विज्ञाप्य देवस्य मस्तके कुसुमाञ्जलिम् ॥
संयोज्य शिवमात्रेण विदधीत जपादिकम् ।
शेषं पात्रे विनिक्षिप्य द्वितीयेन पिधाय तत् ॥
पवित्रकविधानेन कवचेनावकुण्ठयेत् ।
एवं सुरक्षितं कृत्वा शिवाय विनिवेदयेत् ॥

हविस्तदनु भुञ्जीत यदि वा पवनाशनः ।
शिवाग्रे जागरं कृत्वा ध्यानगानजपादिभिः ॥
प्रातःस्नात्वा जगन्नाथमष्टपुष्प्या विसर्जयेत् ।
नित्यां नैमित्तिकीं चैव कृत्वा पूजां विशेषतः ॥ 25
दमनैः पूजयेद्देवं पञ्चाङ्गैरपि खण्डितैः ।
शेषमञ्जलिनादाय दूर्वापुष्पाक्षतान्वितम् ।
ध्यायन्नभिमुखं देवं पञ्चवक्त्रं सदाशिवम् ।
आत्मविद्याशिवैस्सर्वैश्शिवावैरीश्वरान्तकैः ॥
पवित्रकविधानेन क्रमेण शिवमर्चयेत् ।
पूर्वोक्तैरात्मतत्त्वाद्यैर्द्विचतुष्पट्स्वरान्वितैः ॥
सबिन्दुकैश्च सान्तैश्च पवित्रमनुनाचरेत् ।
चतुर्थाञ्जलिमन्त्रस्तु प्रणवं शिवमन्त्रकम् ॥
मखेश्वराय च मखं पूरयेति च वीप्सितम् ।
शूलपाणि चतुर्थ्यन्तं नमस्कारान्तमाचरेत् ॥ 30
प्रणम्य शिवमभ्यर्च्य पावकं च विधानवित् ।
विज्ञापयेच्छिवं पश्चाद्वाञ्छितार्थफलप्रदम् ॥
भगवन्नतिरिक्तं वा हीनं वा यन्मया कृतम् ।
सर्वं तदस्तु संपूर्णं पर्व दामनकं मम ॥
एवं दामविधिं कृत्वा कुर्वीत गुरुपूजनम् ।
परितोषकरं पश्चाद् दीक्षितानपि तर्पयेत् ॥
गृहस्थो ब्रह्मचारी वा य एनं कुरुते विधिम् ।
पूजाजपादिकं तस्य सफलं चैत्रमासजम् ॥

॥ इति उत्तरकामिके महातन्त्रे चैत्रमासदमनपूजाविधिः त्रयोदशः पटलः ॥

---



## ॥ चैत्रमासवसन्तोत्सवविधिः ॥

तस्मिन्मासे विधेयः स्याद्वसन्तोत्सव इष्टदः ।
पूर्वेद्युः कौतुकं बध्वा नानावृक्षसमाकुले ॥
नानामाल्यसमाकीर्णे नानाफलविचित्रिते ।
नानागानसमोपेते नानावाद्यसमन्विते ॥
नानानृत्तसमायुक्ते नानायन्त्रसमन्विते ।
प्रकीर्णपुष्पप्रकारे नानागन्धसमायुते ॥
पताकाभिस्समाकीर्णे ज्वलद्दीपैश्च दीपिते ।
आस्थानमण्डपोपेते जलक्रीडासमन्विते ॥
देवोद्याने नयेद्देवं सर्वालङ्कारसंयुतम् ।
ग्रामप्रदक्षिणोपेतं मन्दीभूते दिवाकरे ॥ 5
परिवेषक्रमं तस्मिन् कृत्वा देवं विशेषतः ।
पूजयेदुपचारैस्तु गन्धधूपस्रगादिभिः ॥
सेवार्थमागतं स्मृत्वा वसन्तं कुसुमायुधम् ।
देवस्य दक्षिणे वामे नानागन्धादिभिः क्रमात् ॥
कुम्भयोरर्चयेत्तौ तु हेमवस्त्राद्युपेतयोः ।
स्थण्डिलद्वितये वापि नानापुष्पसमन्विते ॥
वस्त्रेणाच्छाद्य नैवेद्यं पायसं विनिवेदयेत् ।
ताम्बूलं दापयेदन्ते तोषयेत्तौ विशेषतः ॥
नृत्तवाद्यसमोपेतैर्दिव्यगानैर्वपोह्य च ।
एवं कालं तु देवेशं नयेद्देवालयं पुनः ॥ 10
स्नपनं कारयेच्चैव विशेषेणार्चयेच्छिवम् ।
एवं देवं विशेषेणाभ्यर्चयेच्छिवमादरात् ॥
एवं यः कुरुते मर्त्यस्सर्वान् कामानवाप्नुयात् ॥

॥ इति उत्तरकामिके महातन्त्रे चैत्रमासवसन्तोत्सवविधिः चतुर्दशः पटलः ॥

---

## ॥ वैशाखमासशीतकुम्भविधिः ॥

ततो वक्ष्ये विशेषेण शीतकुम्भमनुक्रमात् ।
विशाखर्क्षे तु वैशाखेऽप्यहे वा विधीयते ॥
सर्वारिष्टविनाशार्थं सर्वाद्भुतनिवृत्तये ।
प्रायश्चित्तादिके कार्ये ग्रामदाहादिके नयेत् ॥
चतुष्पाद्रोगसमये ज्वरमार्यादिसंभवे ।
शीतकुम्भविधिः कार्यस्तद्दोषस्यापनुत्तये ॥
यज्ञयोग्यैर्द्रुमैः कृत्वा त्रिपादीं लिङ्गमूर्धनि ।
वस्वङ्गुलं समारभ्याङ्गुलवृद्ध्या करान्तकम् ॥
यथान्तरं तथा कृत्वा संप्रक्षाल्याम्बुना गुरुः ।
वस्त्रेणाच्छाद्य पादांश्च ब्रह्माणं दक्षिणे यजेत् ॥ 5
विष्णुं वामे वृषं पृष्ठे त्रिषु पादेषु देवताः ।
मध्यमायां न्यसेदूर्ध्वफलकायां स्वमन्त्रतः ॥
एवं कृत्वा त्रिपादीं च विन्यसेल्लिङ्गमूर्धनि ।
मण्डपे स्थण्डिलं कृत्वा वसुद्रोणादिशालिभिः ॥
तण्डुलैस्तिललाजैश्च तत्र कुम्भं निवेशयेत् ।
चतुर्द्रोणेन संपूर्णं श्रेष्ठं द्रोणत्रयेण तु ॥
मध्यमं खारिसंपूर्णं कन्यसं सूत्रवेष्टितम् ।
पक्वबिम्बफलाकारं सवस्त्रं कूर्चसंयुतम् ॥
कनकाब्जसमायुक्तं पञ्चरत्नोदरं शुभम् ।
पृष्ठे सुषिरसंयुक्तं हेमनाळसमन्वितम् ॥ 10

एकद्वित्र्यङ्गुलिसंयुक्तनिष्क्रमानवृतेन तु ।
युगाङ्गुलसदैर्घ्येण सूक्ष्मप्रसुषिरेण तु ॥

पिधानेन समोपेतं पल्लवेन समन्वितम् ।
उपकुम्भं तदग्रे तु वस्त्रहेमादिसंयुतम् ॥

पृष्ठरन्ध्रविहीनं तु दक्षिणे तस्य विन्यसेत् ।
आसनं च ततः कृत्वा मूर्तिमावाहयेद्घटे ॥

श्रामिश्च कलोपेतैर्विद्यादेहं प्रकल्पयेत् ।
प्रणवं शिवमावाह्य गन्धाद्यैः सम्यगर्चयेत् ॥

प्रधाने चोपकुम्भे च क्रियामेनां समाचरेत् ।
गन्धोदं वा मधु पयस्सर्वार्थं विनियोजयेत् ॥ 15

प्रायश्चित्तेऽद्भुतेऽन्यस्मिन् दुरितानां क्षयार्थकम् ।
पञ्चगव्यं विनिक्षिप्य शुद्धोदकमथापि वा ॥

गन्धं स्याच्चन्दनं भस्मसहितं वाथ कल्पयेत् ।
अथवाचमनीयार्थं कल्पितो गन्ध एव वा ॥

नीरोमजन्तुकं द्रव्यमुपकुम्भे विनिक्षिपेत् ।
हृदा संपूज्य गन्धाद्यैस्ततो होमं समाचरेत् ॥

नवपञ्चैककुण्डेषु समिदाज्यान्नसंयुतम् ।
तिललाजसमायुक्तं मधुसस्येन्द्रसंयुतम् ॥

समिधो वञ्जुलोत्थास्स्युस्सर्वा वारुणमन्त्रतः ।
आज्येनामृतबीजेन संपुटेन शिवेन च ॥ 20

आज्यधारणयोपेतं सहस्रं वा तदर्धकम् ।
शतमष्टोत्तरं वापि प्रतिद्रव्यं तु होमयेत् ॥

आप्याणुसंपुटं मूलं जपेत्तत्संख्यकं यथा ।
जप्तव्या वारुणा मन्त्रा मन्त्रजापिभिरष्टभिः ॥

आप्यायस्वेति वक्तव्या चतुर्वेदिभिरादरात् ।
कृतस्नानैर्विनीतैश्च हविष्यान्नाशनैर्द्विजैः ॥

अनन्यमानसैश्शान्तैराचार्याज्ञानुपालनैः ।
शिवदीक्षासमोपेतैस्सर्वैर्वृष्टयभिकाङ्क्षिभिः ॥

सर्वं देवालयं वारिसेकैरिसञ्चेदहर्निशम् ।
तत्काले पातयेत्क्षीरं गोस्तनेभ्यो विशेषतः ॥ 25

सहस्रसंख्यका वा स्युरर्धसंख्यासमन्विताः ।
शतसंख्याश्च पाताश्चेत् पुष्टा वृष्टिर्भविष्यति ।

एवं प्रतिदिनं कार्यं होमकाले द्विजोत्तमाः ।
पूजायां चाथ पूर्णायां वारुणी धारणा द्विजाः ॥

ध्यात्वामृतमयं मूलमुच्चरन्वौषडन्ततः ।
कुर्याच्छङ्खस्वनोपेतं प्रत्यहं चैवमाचरेत् ॥

नित्यपूजावसाने तु नैमित्तिकमुपक्रमेत् ।
नैमित्तिकं महच्चेत्तु महदादौ समाचरेत् ॥

नानागन्धसमोपेतैश्शीतोदैस्स्नपनान्वितैः ।
संस्नाप्य देवदेवेशममृतप्लावनं स्मरन् ॥ 30

चन्दनागरुकर्पूरकुङ्कुमैः प्रचुरैर्गुरुः ।
गन्धपुष्पैरनेकैश्च तत्क्षणप्रतिबोधितैः ॥

कृष्णागरूद्भवैर्धूपैर्घृतैराज्यप्रकल्पितैः ।
कर्पूरवर्तिभिर्दीपैः पायसैः प्रचुरैः क्षणात् ॥

नवभाण्डप्रक्लृप्तैश्च नैवेद्यैश्शालिकल्पितैः ।
पानीयैःशीतलैर्गन्धैर्मृष्टैर्नूतनभाण्डकैः

ताम्बूलैर्नागपत्रैश्च सुगन्धैः क्रमुकोद्भवैः ।
मुखवाससमोपेतैर्गानैर्वाद्यैश्च नर्तनैः ॥

नवनाट्यरसोपेतैस्स्तोत्रैर्वेदस्वरैरपि ।
जापिभिर्जयशब्दैश्च नमस्कारैरनेकशः ॥ 35

पूजयेत् प्रत्यहं देवं यावत्स्यात् काङ्क्षितं फलम् ।
तदन्ते होमकर्मेष्टं प्रत्यहं विधिरीरितः ॥

प्रथमेऽह्नि विशेषोऽयं पूर्णान्ते च घटद्वयम् ।
संप्रोक्षयित्वा दोस्थं च शिरस्थं वा प्रदक्षिणम् ॥

आभ्यां कृत्वा च धाम्नस्तु सुदिने च सुवारके ।
आचार्यस्यानुकूलर्क्षे यजमानस्य चैव हि ॥



सुतिथौ च सुलग्ने वा रोपयेच्छिवमुच्चरन् ।
घटं ससुषिरं तस्मिन् नवकुम्भस्थितं जलम् ॥

शिवमन्त्रं समुच्चार्य ध्यात्वा चामृतधारणम् ।
निक्षिपेदुत्तरास्यस्तु त्रिपाद्युपरि मध्यगम् ॥ 40

तोयशेषनयेन्नित्यं यावत्कर्म प्रसिद्ध्यति ।
सप्ताहं वा द्विसप्ताहं त्रिसप्ताहं तु मासकम् ॥

द्विमासं वा त्रिमासं वा विधिमेवं समाचरेत् ।
आचार्यं पूजयेदादौ वस्त्रैः पञ्चाङ्गभूषणैः ॥

दक्षिणां दापयेदादौ दशनिष्कादिकां नृपः ।
अन्ते च द्विगुणां पूजां दक्षिणामपि मानवः ॥

अन्येषामपि सर्वेषां हेमवस्त्राङ्गुलीयकाम् ।
निष्कैकदक्षिणोपेतां दद्याच्छ्रद्धासमन्वितम् ॥

प्रत्यहं भोजनार्थं तु तण्डुलं व्यञ्जनान्वितम् ।
ताम्बूलं च नृपस्तेभ्यो दद्याच्छ्रद्धासमन्वितम् ॥ 45

नित्यं च भोजनं कार्यं भक्तानां योगिनामपि ।
दीनानाथजनानां च प्रत्यहं भोजनं भवेत् ॥

स्नपनं कारयेदन्ते प्रचुरं दापयेद्धविः ॥

॥ इति उत्तरकामिके महातन्त्रे वैशाखमासशीतकुम्भविधिः पञ्चदशः पटलः ॥

---

## ॥ ज्येष्ठमासफलपूजाविधिः ॥

ज्येष्ठमासे तु मूलर्क्षे पूजयेत् स्वादुभिः फलैः ।
विशेषस्नपनोपेतं पञ्चामृतसमन्वितम् ॥

विशेषपूजासंयुक्तं पायसेन समन्वितम् ।
विशेषहोमसंयुक्तं समिदाज्यान्नकैस्सह ॥

नानाफलसमायुक्तैर्द्रव्यैः पूर्णां विधाय च ।
पीठादिलिङ्गमूर्धान्तं फलैर्मूलेन पूरयेत् ॥

कृत्यान्तर्हितलिङ्गं तु तद्बहिः पूर्णं तु वा ।
वस्त्राभ्यां वेष्टयेल्लिङ्गं पीठं कवचमन्त्रतः ॥

सन्ध्यन्तरे परे बाह्ये तानि तस्माद्बहिर्नयेत् ।
क्रियान्ते पूजयेत् कर्ता देशिकं वस्त्रकाञ्चनैः ॥ 5

यथोद्दिष्टफलं कर्तुस्तत्तच्छीघ्रं भविष्यति ॥

॥ इति उत्तरकामिके महातन्त्रे ज्येष्ठमासफलपूजाविधिः षोडशः पटलः ॥

—:*:—

## ॥ आषाढमासपूर्वफल्गुनीपूजाविधिः ॥

आषाढे मासि नक्षत्रे पूर्वफाल्गुनसंज्ञके ।
आश्वयुज्यथ वा मासे क्रियामेनां समाचरेत् ॥

कौतुकं बन्धयेद्रात्रौ देव्याः पूर्वोक्तवर्त्मना ।
देवदेव्योश्च वा प्रातः कन्याभ्यः काञ्चनादिकम् ॥

वस्त्रं च भोजनं दत्वा देव्याः क्षीरं निवेदयेत् ।
ग्रामप्रदक्षिणं कुर्यात् सर्वालङ्कारसंयुतम् ॥

तत्काले दापयेन्मुद्राङ्कुरं लक्षणसंयुतम् ।
ग्रामप्रदक्षिणात्पूर्वं नैवेद्यं दापयेत्र वा ॥

आस्थानमण्डपं नीत्वा परिवेषक्रमं नयेत् ।
रात्रिचूर्णं च तैलं च चूर्णोत्सवविधानतः ॥ 5

दद्याद्देवाय देव्यै च जनेभ्यस्तदनन्तरम् ।
ताम्बूलसहितं नानान्यञ्जनं तण्डुलान्वितम् ॥

छित्वा वा चूर्णकार्यं च तण्डुलादिप्रदानकम् ।
त्रिशूलेन समायुक्तं देवीं नद्यादिकं नयेत् ॥
स्थण्डिलद्वितयं कुर्याच्छालिभिर्विधिना गुरुः ।
एकत्र शूलं संस्थाप्य देव्याः पूर्वं तदग्रके ॥
संस्थाप्य तान्घटान् सम्यक् स्नपनोक्तविधानतः ।
सक्तुमिश्र फलोपेतैस्तान् संपूज्य हृदा गुरुः ॥
तैः संस्नाप्य च तच्छूलमवगाहनमाचरेत् ।
तीर्थमध्ये जनैस्सार्धं प्रविशेदालयं प्रति ॥ 10
तीर्थकर्मविहीनं वा ग्रामादिभ्रमणावधि ।
अस्मिन्दिने वा निर्वाणदीपमम्लानमालया ॥
प्रतिसंवत्सरं कुर्याद्बलिदानसमन्वितम् ।
अथवा बलिहोमाभ्यां युतं रात्रौ दिवापि वा ॥
वेरप्रदक्षिणं कृत्वा सर्वालङ्कारसंयुतम् ।
नानाभक्तजनैस्सार्धं नानास्वादुफलानि च ॥

गुडखण्डसमोपेतं सक्तु संदापयेद्गुरुः ।
नानापूपसमायुक्तं नानाफलसमन्वितम् ॥
जलतीरे निवेद्यैशे गुडादि फलसक्तुकम् ।
विमोच्य देवदेवाग्रे ततस्तीर्थं नवोदके ॥ 15
विधाय केवलं वापि त्रिशूलेन समन्वितम् ।
नीत्वालयं ततः कुर्यात् स्नपनं पूजया सह ॥
प्रभूतहविषोपेतं मुखवासेन संयुतम् ।
ताम्बूलेन तदन्ते तु पूजयेद्गुरुमादरात् ॥
वस्त्रहेमाङ्गुलीयाद्यैर्दक्षिणां दापयेत्ततः ।
सर्वपापविनाशार्थं सर्वारिष्टनिवृत्तये ॥
सर्वभीष्टप्रसिद्ध्यर्थं सर्वकार्यार्थसिद्धये ।
विधानमेतत् कर्तव्यं देव्यास्संतुष्टिकारणम् ॥

॥ इति उत्तरकामिके महातन्त्रे आषाढमासपूर्वफल्गुनीपूजाविधिः सप्तदशः पटलः ॥

## ॥ श्रावणमासे पवित्रारोहणविधिः ॥

दुरितस्य विनाशार्थं संवत्सरकृतस्य तु ।
पवित्रकमहं वक्ष्ये श्रूयतां मुनिपुङ्गवाः ॥
प्रायश्चित्तमकुर्वाणो मन्त्री विधिविलङ्घनात् ।
सिद्धिभ्रंशमवाप्नोति देशिको रोगभाग् भवेत् ॥
पुत्रको भुक्तिभाङ्न स्याज्जन्मनैकेन रोधनात् ।
समयी समयस्थोऽपि नैव यस्मात् पवित्रकम् ॥
विधातव्यं प्रयत्नेन येन केन प्रकारतः ।
प्रत्यहं वाङ्मनःकायव्यापाराजनितादलम् ॥
पतनात् त्रायते यस्मात् तस्मादेतत् पवित्रकम् ।
आषाढादित्रयो मासा ज्येष्ठमध्यमकन्यसाः ॥ 5

अश्विनीकृत्तिकामासावथवा संप्रकीर्तितौ ।
पूर्वपक्षे चतुर्दश्यामाषाढे तु पवित्रकम् ॥
इतरेषु च मासेषु पक्षयोश्शुक्लकृष्णयोः ।
चतुर्दश्यामथाष्टम्यां पवित्रं विधिनाचरेत् ॥
कृत्तिकादीपतः पश्चान्नैव कार्यं पवित्रकम् ।
शुक्लपक्षे गृहस्थस्य यतेरुभयपक्षयोः ॥
कर्तुः कारयितुश्चानुकूल्यं वा न वा मतम् ।
क्षौमकार्पासजं सूत्रं मौञ्जं वा तदसंभवे ॥
दर्भं सवल्कलोत्थं वा समाहृत्याधिवासयेत् ।
त्रिगुणं त्रिगुणीकृत्य शोधयेदस्त्रमन्त्रतः ॥ 10



रोमाद्यं शुद्धतोयैश्च क्षालयेदस्त्रमन्त्रतः ।
शुष्कं कृत्वा हृदा तेन पवित्रं कारयेद्गुरुः ॥
शक्तयो नव वामाद्या नवसूत्राधिपा मताः ।
द्विगुणास्तन्तवो ह्यस्ते दशवृद्ध्या ततः क्रमात् ॥
शतमष्टोत्तरं तेषां तन्तूनामुत्तमोत्तमम् ।
द्वादशोत्तरया वृद्ध्या द्वादशाभ्यस्तदन्तिकाः ॥
तन्तवो यत्र संसिद्धाः कन्यसादिषु सिद्धिषु ।
यवीयसां कलासंख्या मध्यानां वर्णलक्षिताः ॥
ज्येष्ठानां पदसंख्यातास्तन्तवो मानुषे मताः ।
स्वायम्भुवादिलिङ्गेषु बाणे वा रत्नजेऽपि वा ॥ 15
स्थण्डिले मण्डले वापि चले वा प्रतिमासु च ।
संख्यास्सर्वाश्च संग्राह्यास्समा वा विषमाश्च वा ॥
समा एव गृहस्थस्य परिवारामरादिषु ।
तथैव हीनविस्वेषु लिङ्गादिषु मुनीश्वराः ॥
एकाद्येकैकवृद्ध्या तु तन्तवो द्वादशान्तकाः ।
ग्रन्थयस्तन्तुसंख्याताः स्निग्धगर्भा न वा मताः ॥
यथेष्टग्रन्थयो वापि समास्सर्वत्र संस्थिताः ।
एकादित्र्यङ्गुलं वापि ग्रन्थिमानमिहागमे ॥
ग्रन्थयो वेष्टदेशेऽथ विधातव्या विचक्षणैः ।
रक्तचन्दनकाश्मीरगैरिकागरुचन्दनैः ॥ 20
कुष्ठकर्पूरसंयुक्तं हरिद्राकृष्णगन्धयुक् ।
रञ्जयेद्हृदयेनैव रक्तसूत्रादिभिस्तु वा ॥
त्रितयं मूर्ध्नि कर्तव्यमात्मविद्याशिवात्मकम् ।
पिण्डिकायुक् चतुर्थं तु पवित्रं सर्वतारिकम् ॥
यज्ञसूत्राख्यमाला च बाहुमाला ततः परम् ।
मुखलिङ्गे विधेया स्यात् सकलेऽप्यथवा मता ॥
आजानुशोभि व्यक्तेषु त्रिपूर्वं स्वेष्टतन्तुयुक् ।
यन्त्रलिङ्गप्रमाणं वा पुष्पलिङ्गमितं तु वा ॥

क्षुद्रलिङ्गे पवित्रं स्यात् स्थण्डिलादौ यथामतम् ।
आशृङ्गमेकं वृषभे ककुदःखुरगं परम् ॥ 25
पवित्रमेकं सर्वेषामावृतानां विधीयताम् ।
एकैकमेव दातव्यं चण्डेशक्षेत्रपालयोः ॥
क्षेत्रनेम्यां लोकमुद्रयस्सूत्रमेकं प्रदक्षिणम् ।
यागधामवृषस्थानप्रासादालयसंश्रयान् ॥
कारकाणि च सर्वाणि त्रिवृत्सूत्रेण वेष्टयेत् ।
एवं निश्चित्य पूर्वेद्युरधिवासनमारभेत् ॥
प्रासादस्याग्रदेशे वा तद्वामे दक्षिणेऽपि वा ।
मण्डपे पञ्चहस्तादिचतुर्विंशत्करान्तके ॥
षोडशस्तम्भसंयुक्ते रविस्तम्भयुतेऽपि वा ।
मध्यमे वेदिकायुक्ते सर्वलक्षणसंयुते ॥ 35
त्रिभागायामयुक्ते वा विंशतिस्तम्भसंयुते ।
मण्डपे पूर्वक्लृप्ते वा द्विगुणायतवेदिके ॥
तत्समन्तात् सुसंक्लृप्तनवपञ्चैककुण्डके ।
तत्संख्ये स्थण्डिले वापि वेदिकारोहितेऽपि वा ॥
पश्चिमे मण्डलं कुर्यात् पवित्रं प्राचि विन्यसेत् ।
कृतशौचविधिस्नानसन्ध्यावन्दनतर्पणः ॥
कृतनित्यार्चनो मन्त्री सूर्यार्चनसमन्वितः ।
अविसृज्य रविं शुद्धो मन्त्रसन्नद्धदेहयुक् ॥
परिगृह्य शुभं द्वारं द्वारपान् वास्तुनायकम् ।
लक्ष्मीयागेशवर्धन्यौ लोकपान् गणपं गुरुन् ॥ 40
इष्ट्वा संप्रार्थ्य तत्पश्चात् मण्डलेऽपि च शङ्करम् ।
संपूज्य विधिवद्देवसमीपे स्वासने स्थितः ॥
आसनार्चनमारभ्य कुर्यादावाहनान्तकम् ।
कर्म पञ्चामृतोपेतं विशेषस्नपनान्वितम् ॥
नानागन्धान्वितां नानाभक्ष्यभोज्यान्नसंयुताम् ।
पूजां विशेषतः कृत्वा गत्वा कुण्डान्तिकं गुरुः ॥

कुण्डसंस्कारमारभ्य पूर्णान्तं होममाचरेत् ।
समिदाज्यचरूँल्लाजांस्तिलसर्षपेन्द्रसंयुतान् ॥

पलाशोदुम्बराश्वत्थवटाः प्रागादिदिक्षु च ।
शमीखादिरश्रीवृक्षप्लक्षाः स्युर्वह्निकोणतः ॥ 45

प्रधाने तु पलाशस्याच्छतं वार्धं शिवस्य तु ।
शिवादृशांशतोऽङ्गानां कुण्डे प्राधानिके भवेत् ॥

तदर्धमन्यकुण्डेषु नरादिषु हृदादिषु ।
स्थालीपाकहविः कृत्वा तद्घृदा विभजेत् त्रिधा ॥

शिवांशमग्निभागं च मध्वाज्याभ्यां तु मिश्रितम् ।
कुर्यादात्मीयभागं तु केवलेन घृतेन च ॥

हृदा देवांशमभ्यर्च्य तमादाय शिवान्तिकम् ।
गत्वा संपूज्य देवेशं व्रताङ्गानि निवेदयेत् ॥

दन्तकाष्ठं न्यसेत् प्राच्यां विधुकं पुरुषं स्मरन् ।
भस्म दक्षिणतश्शुद्धपात्रेऽघोरेण मन्त्रवित् ॥ 50

पश्चाद्यान्मृदं शुद्धां सद्योजातं च तां स्मरन् ।
धात्रीफलमुदक्पूर्वे पञ्चभक्ष्यं निवेदयेत् ॥

होमद्रव्याणि सर्वाणि सकुशान्यपरानने ।
दण्डाक्षमालाकौपीनभिक्षापात्राणि दक्षिणे ॥

रोचनं कुङ्कुमं तैलं शलाकां केशशोधिनीम् ।
दर्पणं कङ्किकां दन्तनखशोधनमञ्जनम् ॥

तत्पात्रमपरं दद्याद्वामदेवमनुस्मरन् ।
ताम्बूलं भस्मसंमिश्रं दद्यात्तत्पुरुषं स्मरन् ॥

ऐशान्यामासनं छत्रं पादुके योगपट्टिकाम् ।
स्थण्डिले सूत्रनिकटे परितश्चाधिवास्य वा ॥ 55

अस्त्रेण प्रोक्षितं वर्मकुण्ठितं हृदयार्चितम् ।
धेनुमुद्रामृतीभूतं शिवांशं विनिवेदयेत् ॥

ब्रह्मभिर्देवदेवाय पवित्राण्याहरेत्ततः ।
स्थण्डिलं वेदिकोर्ध्वे स्यादष्टद्रोणेन शालिना ॥

तदर्धतण्डुलोपेतं तिललाजसमन्वितम् ।
तत्र संस्थापयेत् पात्रे पवित्राण्यथ देशिकः ॥

मण्डले वेदिकोर्ध्वे चेदत्र कुम्भान्तिकेऽपि वा ।
संस्थाप्यार्घ्योदकेनैव प्रोक्ष्य संहितयाऽलभेत् ॥

मृगाजिनादिनाच्छाद्य स्थापयेत् पातकान्तिके ।
संवत्सरात्मकं सर्वकृत्यसाक्षिणमव्ययम् ॥ 60

गोप्तारं संश्रयं कर्मफलप्राप्तिनिबन्धनम् ।
अनुस्मरन् शिवं ब्रह्म षडङ्गं शिवमन्त्रतः ॥

त्रिस्सप्तकृत्वः संपातं तथैव जुहुयात्ततः ।
दत्वा गन्धपवित्रं तु भानोराचम्य देशिकः ॥

यागधामवृषस्थानप्रासादानलसंश्रयान् ।
कारकान् पञ्चसूत्रेण वर्मणा परिवेष्टयेत् ॥

दद्याद्गन्धपवित्रं तु नन्द्यादिभ्यः प्रदक्षिणम् ।
प्रविश्य पूर्ववच्चान्तः ब्रह्मणे च पवित्रकम् ॥

तदेतानि पवित्राणि भगवन् संस्कृतानि हि ।
अर्पयामि घटस्थाय शिवायाऽत्येष्यदिति ॥ 65

समर्च्य रक्षणायास्मै तेभ्यो गन्धपवित्रकम् ।
आदौ वा कुम्भवर्धन्योर्दत्वा यायाच्छिवान्तिकम् ॥

स्वमूर्तौ गुरुपङ्क्तौ च दद्याद्गन्धपवित्रकम् ।
एकग्रन्थिसमायुक्तमल्पतन्तुविनिर्मितम् ॥

धूपितं पुष्पसंयुक्तं समादायाञ्जलौ गुरुः ।
आमन्त्रणपवित्रं तत् सुधामुद्राप्ररोचितम् ॥

शिवायारोप्य तन्मूर्ध्नि रेचकेन शिवाणुना ।
आमन्त्रणात्मकं मन्त्रं पठेद्देवेशसन्निधौ ॥

समस्तविधिविच्छिद्रपूरणे शमलं प्रति ।
प्रभो वामन्त्रयामि त्वां त्वदिच्छावाप्तिकारकः ॥ 70

तत्सिद्धिमनुजानीहि यजतांश्चदधिपते ।
सर्वथा सर्वदा शम्भो नमस्तेऽस्तु प्रसीद मे ॥



[illegible] ।
[illegible] ॥

[illegible] ।
[illegible] ॥

[illegible] ।
[illegible] ॥

[illegible] ।
[illegible] ॥ 75

[illegible] ।
[illegible] ॥

[illegible] ।
[illegible] ॥

[illegible] ।
[illegible] स्मृतौ च पवित्रकम् ॥

[illegible] गुरुश्शुचिः ।
[illegible] समाप्त्रजेत् ॥

[illegible] स्वपेच्छिवमनुस्मरन् ।
[illegible] कृत्वावश्यकानलसन्ध्याणुतर्पणः ॥ 80

[illegible] पवित्राण्यवरोपयेत् ।
[illegible] पात्रे चण्डेशार्थं प्रकल्पयेत् ॥

[illegible] देवे लिङ्गादेवं विसर्जयेत् ।
[illegible] कृतन्यासस्सामान्यार्घ्यकरो गुरुः ॥

कृत्वा नित्यविधिं सम्यगाचान्तो मन्त्रविग्रहः ।
द्वारद्वाराधिपानिष्ट्वा प्रविश्यास्त्राणि कुम्भयोः ॥

दिक्पालानां च सास्त्राणां क्रमेणाभ्यर्चनं नयेत् ।
स्वासने दीपसंक्लृप्ते सौम्यास्योर्ध्वस्थितस्थितिः ॥

मन्त्रकायो विशेषार्घ्यद्रव्यशुद्धिसमन्वितः ।
शिवहस्तं च संकल्प्य पञ्चगव्यं च पूर्ववत् ॥ 85

[illegible] पञ्चामृतसमन्वितम् ।
[illegible] विशेषेण शिवं यजेत् ॥

[illegible] कृत्वा [illegible] कुण्डान्तिकं गुरुः ।
[illegible] मेखलापरिधिस्थितान् ॥

[illegible] संस्कृत्य च विधानवित् ।
दत्वा पूर्णाहुतिं देवमावाह्याभ्यर्च्य तर्पयेत् ॥

प्रायश्चित्तं ततो हुत्वा पूर्णाहुतिमथाचरेत् ।
दत्वा भानोः पवित्रं तु समाचम्याणुदेहयुक् ॥

नन्द्यादिभ्यो पवित्रं तु दत्वान्तस्संप्रविश्य च ।
ब्रह्मणे कुम्भवर्धन्योः क्रमाद्द्यात् पवित्रकम् ॥ 90

गत्वा देवान्तिकं स्वस्य चासने सूपविश्य च ।
कृत्वा विशेषपूजां च विभवस्यानुसारतः ॥

स्वमूर्तौ गुरुपङ्क्तौ च दत्वा सूत्रं शिवं स्मरन् ।
वर्षर्तुमासपक्षाहर्नाडीप्राणादिविग्रहम् ॥

सर्वेन्द्रियशरीरार्थव्यवहारैककारणम् ।
कृताकृतसमुत्सृष्टक्लिष्टकर्मैकसाक्षिणम् ॥

क्षेत्रगोप्तारमीशानं शरण्यं शुचिमानसः ।
प्रब्रूयादीश्वराशास्यस्सपवित्रकरो विभुम् ॥

कालात्मना त्वया देव यद्दृष्टं मामके विधौ ।
कृतं क्लिष्टं समुत्सृष्टं हृतं गुप्तं च मत्कृतम् ॥ 95

तदस्तु क्लिष्टमक्लिष्टं कृतं पुष्टमसत्कृतम् ।
सर्वात्मनामुना शम्भो पवित्रेण त्वदिच्छया ॥

पूरयेति द्विरुच्चार्य मखव्रतफलं ततः ।
नियमेश्वरायेति पदं स्वाहेत्यन्तं समुच्चरन् ॥

आत्मतत्त्वाधिपतये शिवाय नम इत्यपि ।
तत्त्वविद्याशिवाख्यं च मुक्तिकामपदं पठेत् ॥

पवित्रकत्रयं मूर्ध्नि दद्याद्योगी शिवादिकम् ।
शिवाणुमादावुच्चार्य शिवविद्यात्मकं पुनः ॥

सर्वतत्त्वेश्वरायेति दद्याद्गङ्गावतारकम् ।
पुष्पाञ्जलिपुटो भूत्वा भक्त्या विज्ञापयेत्प्रभुम् ॥ 100

त्वं गतिस्सर्वभूतानां संस्थितस्त्वं चराचरे ।
अन्तश्चारेण भूतानां द्रष्टा त्वं परमेश्वर ॥

कर्मणा मनसा वाचा त्वत्तो नान्यो गतिर्मम ।
मन्त्रहीनं क्रियाहीनं द्रव्यहीनं च यत्कृतम् ॥

जपहोमार्चनाहीनं कृत्यं नित्यं मया तव ।
अकृतं वाक्यहीनं च तत्पूरय महेश्वर ॥

सुपूत त्वं सुरेशान पवित्रं पापनाशनम् ।
त्वया पवित्रितं सर्वं जगत्स्थावरजङ्गमम् ॥

खण्डितं यन्मया देव व्रतवैकल्ययोगतः ।
एकीभवतु तत्सर्वं तवाज्ञासूत्रगुम्भितम् ॥ 105

जपं कृत्वा निवेद्यास्मै स्तुत्वा नियममीश्वरात् ।
गृह्णीयात्प्रणतो भक्त्या चतुस्त्रिद्व्येकमासकम् ॥

अर्धमासं च सप्ताहं पञ्चाहं तु त्र्यहं तु वा ।
अथवैकाहमारभ्यकर्मान्तं नियमं नयेत् ॥

एकभुक्त्यादि यत्सर्वं शक्त्यानुष्ठेयमीश्वरात् ।
व्रतं गृहीत्वा कर्तव्यं यावत्सूत्रावरोहणम् ॥

साङ्गेभ्यो दिक्पतिभ्यस्तु सूत्रं मत्वाग्निसंस्थिते ।
शिवे पवित्रं तुर्यं तु दत्वा व्याहृतिभिर्गुरुः ॥

वह्निं संरोध्य स्विष्टान्तं हुत्वान्तस्संप्रविश्य च ।
देवं संपूज्य गुरवे सैद्धान्ते पुस्तकेऽपि च ॥ 110

दत्वा पवित्रं दिक्पालबलिमाचम्य देशिकः ।
प्रायश्चित्तं ततो दत्वा पूर्णां वै छिद्रपूर्णीम् ॥

मण्डलस्थं च संपूज्य ततो देवं क्षमापयेत् ।
तदन्ते भोजनाच्छादमात्रोपकरणादिभिः ॥

संपूज्य दीक्षितान्ब्रूयात् प्रीयतां मे सदाशिवः ।
लिङ्गात्पवित्रमुद्वास्य निर्माल्यापनये कृते ॥

स्नातेऽर्चिते तदारोप्य मा विसर्ज्य दिनेदिने ।
व्रतान्ते प्राग्वदभ्यर्च्य चातीतदिनव[illegible] ॥

व्रतं निवेदयेदुक्त्वा ममास्तु फल[illegible]कम् ।
भुक्तिकामो व्रती कामे कर्मबन्धक इत्यपि ॥ 115

मन्त्रतर्पणकर्मान्तं कृत्वा निष्कृतिमाचरेत् ।
भसितं वन्दयित्वाथ वह्निस्थं योजयेच्छिवे ॥

वह्नेर्मन्त्रांश्च संहृत्य नीत्वा तां द्वादशान्तिके ।
हृदये संनिवेश्याग्निं विसृज्योद्वास्य विष्टरात् ॥

परिधींश्च बलिं दत्वा समाचम्य गुरुश्शुचिः ।
शिवकुम्भास्त्रवर्धन्योर्मनून् संहृत्य योजयेत् ॥

ईशे सापेक्षमुक्त्वैवं क्षमस्वेति विसर्जयेत् ।
दिक्पालानस्त्रसंयुक्तान् द्वारपान् द्वारसंस्थितान् ॥

स्थ्यन्तं तु विसृज्याथ पवित्राणि महेश्वरात् ।
आदाय सति चण्डेशे तस्मै दद्यात्पवित्रकम् ॥ 120

निर्माल्यादिकमन्यं च पवित्रं न कृतं यदि ।
लक्षं त्वघोरमावृत्या दशांशं होममाचरेत् ॥

पवित्रं नित्यपूजाङ्गं पुष्पाद्यैः परिकल्पयेत् ।
दत्ते नित्यपवित्रे वा सांवत्सरिकमाचरेत् ॥

॥ इति उत्तरकामिकाख्ये महातन्त्रे पवित्रारोहणाविधिः अष्टादशः पटलः ॥

---



## ॥ नवनैवेद्यविधिपटलः ॥

अतः परं प्रवक्ष्यामि नवनैवेद्यलक्षणम् ।
मार्गशीर्षमथाषाढं माघमासं विवर्ज्य च ॥

अन्येषु सर्वमासेषु नवनैवेद्यमाचरेत् ।
निश्चित्य शुभनक्षत्रं तत्पूर्वेऽङ्कुरमाचरेत् ॥

विना वाङ्कुरकार्यं तु सुमुहूर्ते सुलग्नके ।
शङ्खदुन्दुभिनादैश्च गीतनृत्तादिमङ्गलैः ॥

नानाध्वजवितानैश्च धूपदीपाङ्कुरैर्युतम् ।
मम भक्तजनैस्सार्धं त्रिशूलेन समन्वितम् ॥

चण्डेश्वरसमायुक्तं देवक्षेत्रं समाविशेत् ।
चण्डेशाख्यं विना वापि क्षेत्रं गत्वा विचक्षणः ॥ 5

हविषा दधियुक्तेन भूतानां तु बलिं क्षिपेत् ।
पूर्वाद्यष्टदिशास्वेवं गन्धपुष्पादिसंयुतम् ॥

सलक्षणेन दात्रेण पूजितेनैव हेतिना ।
प्राङ्मुखोदङ्मुखो भूत्वा शस्त्रमन्त्रमनुस्मरन् ॥

शूकं छित्वा तु कुम्भे तु स्थलिकोर्ध्वे निवेशयेत् ।
तच्छूकेन समायुक्तं नवव्रीहिसमायुतम् ॥

तण्डुलैश्च समोपेतं नानाव्यञ्जनसंयुतम् ।
नालिकेरफलोपेतं नवपूगफलान्वितम् ॥

मरीचगुलखण्डाद्यैरिक्षुभिश्च समन्वितम् ।
नानाशाकसमायुक्तं नानाव्यञ्जनसंयुतम् ॥ 10

पृथक्कन्दफलोपेतैः पूजाद्व्यैस्तथाविधैः ।
आश्चर्यकारकैरन्यैस्सर्वातोद्यसमन्वितम् ॥

नृत्तगानसमायुक्तं नानाध्वजसमन्वितम् ।
नानाछत्रसमायुक्तं प्रविश्य नगरादिकम् ॥

ग्रामं प्रदक्षिणं कृत्वा प्रविशेदालयं प्रति ।
पूर्णकुम्भसमायुक्तं नानादीपसमन्वितम् ॥

कदलीस्तम्भसंयुक्तं नानामङ्गलमण्डितम् ।
विमोच्य व्रीहिं शूकेभ्यश्शोषयेदातपेन वै ॥

वेत्रादिनिर्मिते पात्रे भूतले केवलेऽपि वा ।
गोमयालेपिते पिष्टचित्रिते दीपसंयुते ॥ 15

चूर्णोत्सवक्रमप्रोक्तमार्गेणाकुट्य वर्जयेत् ।
तुषादीन् तण्डुलाञ्छुद्धान् सङ्ग्राह्य क्षालयेत्ततः ॥
मरीचजीरकोपेतं गुलसारसमन्वितम् ॥

नालिकेरफलोपेतं संस्कुर्यात्तण्डुलं पुरा ।
स्नपनं कारयेद्देवं भूषयेद्भूषणार्हकैः ॥

मुहूर्ते समनुप्राप्ते व्रीहीनास्तीर्य भूतले ।
पटं तदूर्ध्वे विन्यस्य रम्भापत्राणि विन्यसेत् ॥

अस्त्रतोयेन संप्रोक्ष्य मृत्युञ्जयमनुस्मरन् ।
तण्डुलं तत्र निक्षिप्य गुलतोयेन सेचितम् ॥

कवचेनावकुण्ठ्यान्ते हृदा संपूजयेद्गुरुः ।
धेन्वाख्ययामृतीकृत्य ब्रह्मभिः पुरुषेण वा ॥ 20

नैवेद्यं परमेशाय पानीयं दापयेत् क्रमात् ।
तैर्मन्त्रैर्देवदेवाय ताम्बूलं विनिवेदयेत् ॥

नवपूगफलोपेतं देव्यै च विनिवेदयेत् ।
सर्वेभ्यस्सकलेभ्यश्च प्रागुक्तविधिना गुरुः ॥

अथवा स्थलिकायां वा सर्वेभ्यो विनिवेदयेत् ।
वृषादिपरिवारेभ्यो होमकर्म समापयेत् ॥

नैवेद्यं दापयेदन्ते ताम्बूलं विनिवेदयेत् ।
बलिदानसमोपेतमतिथीनां समर्पणम् ॥

निवेद्य तण्डुलं चान्नं पश्चाद्धोमोऽथवा भवेत् ।
तदन्ते चोत्सवं कुर्यात्तं विना वा समाचरेत् ॥ 25

छित्वा क्षेत्रबलिं वाथ छित्वा चोद्धलक्रियाम्।
सर्वमन्यत्समानं स्यात् तदन्ते पूजयेद्गुरुम् ॥

वस्त्रहेमाङ्गुलीयाद्यैर्दक्षिणां दापयेत्ततः ।
एवं यः कुरुते मर्त्यस्स पुण्यां गतिमाप्नुयात् ॥

॥ इति उत्तरकामिकाख्ये महातन्त्रे नवनैवेद्यविधिः एकोनविंशतितमः पटलः ॥

---

## ॥ समयविशेषदीक्षाविधिः ॥

अथेदानीं प्रवक्ष्यामि दीक्षां समयसंश्रिताम् ।
आचार्यः कृतनित्यस्तु कृतमन्त्रादितर्पणः ॥

कृतभान्वर्चनश्शुद्धः कृतमन्त्रपरिग्रहः ।
सामान्यार्घ्यकरो भूत्वा प्रविशेद्यागमण्टपम् ॥

द्वाराण्यस्त्रेण संप्रोक्ष्य द्वारद्वाराधिपान्यजेत् ।
आदौ शान्तिकलाशब्दद्वाराय नम इत्यपि ॥

पठित्वा पूजयेत्पूर्वद्वारं विद्याख्यदक्षिणम् ।
वारुणं च निवृत्त्याख्यं प्रतिष्ठाख्यमुदग्गतम् ॥

प्राच्यां नन्दिमहाकालौ याम्ये भृङ्गिविनायकौ ।
पश्चिमे तु वृषस्कन्दौ देवीचण्डावुदग्दिशि ॥ 5

प्रणवादिनमोऽन्तं तु चतुर्थ्यन्तं क्रमाद्यजेत् ।
तोरणस्थान् घटस्थान् वा भित्तिस्थान् वापि पूजयेत् ॥

पश्चिमद्वारमाश्रित्य पुष्पक्षेपं विधाय च ।
अस्त्रेण पार्ष्णिघातस्य त्रयं कृत्वाथ भूगतान् ॥

कृत्वा तालत्रयं मन्त्री विघ्नानाकाशवर्तिनः ।
छोटिकात्रयतो विघ्नान् धाम्नः प्रोत्सारयेद्बहिः ॥

दक्षजङ्घां समुत्क्षिप्य वामशाखाश्रयी विशेत् ।
अस्त्रेणोदुम्बरे पुष्पं क्षिप्त्वा धाम्नश्च मध्यमे ॥

वास्तोष्पतये चेति ब्रह्मणे नम इत्यपि ।
संपूज्य गन्धपुष्पाद्यैरस्त्रप्राकारकल्पनात् ॥ 10

वर्मास्त्रकुण्ठनाद्यागगेहं संरक्ष्य देशिकः ।
उपविष्ट उदग्वक्त्रो भूतशुद्धिं समाचरेत् ॥

सकलीकरणं कृत्वा कृतान्तर्यजनो गुरुः ।
विशेषार्घ्यं ततः कुर्याद्यवसिद्धार्थकाक्षतैः ॥

अद्भिस्तिलकुशाग्रैश्च क्षीरपुष्पैः समन्वितम् ।
तदम्भसा तु संप्रोक्ष्य स्वशिरोद्रव्यसंहितम् ॥

अस्त्रमन्त्रेण तत्सर्वं कवचेनावकुण्ठयेत् ।
हृदाभिमन्त्र्य प्रत्येकं तिलकं चन्दनं नयेत् ॥

शिवहस्तं च संकल्प्य तदारोपितमस्तकः ।
ज्ञानासिं तत्त्वसंख्यातैश्चतुरङ्गैरथापि वा ॥ 15

दर्भैः प्रादेशमात्रं तु निर्मितं शस्त्रमन्त्रितम् ।
कल्पयेत् पञ्चगव्यं तु तद्विधानमिहोच्यते ॥

मण्डपस्य शुभे भागे क्षेत्रे नवपदीकृते ।
पञ्चतत्त्वकृतन्यासे पञ्चपात्राणि विन्यसेत् ॥

शिवे सदाख्ये विद्यायां काले पुंसि च देशिकः ।
सुप्रतिष्ठं सुशान्तं च तेजोवदमृतात्मकम् ॥

रत्नोदकं च संकल्प्य क्षीरं दधि घृतं न्यसेत् ।
गोमयं चैव गोमूत्रमीशानाद्यैस्तु मन्त्रितम् ॥

एकद्वित्रिचतुष्पञ्चवारैष्वङ्भिः कुशोदकम् ।
अमृतीकृत्य संपूज्य शिवेनैकत्वमाचरेत् ॥ 20



मण्डपं तेन संप्रोक्ष्य विकिरानभिमन्त्रयेत् ।
लाजचन्दनसिद्धार्थभस्मपुष्पकुशाक्षताः ॥

हेतयोऽस्त्रेण सप्तैते विधातव्या विमिश्रिताः ।
नैर्ऋत्यां मण्डपे स्थित्वा संस्कृतीर्मण्टपस्य तु ॥

कुर्यादीशानवक्त्रस्तु संस्कारैर्वीक्षणादिभिः ।
कुण्डस्यैवं पुरास्यापि गुरुरष्टादशात्र तु ॥

विकीर्य विकिरानीशे कुशकूर्च्या समाहरेत् ।
वेद्यां वा मण्टपे वापि ईशाने वापि पश्चिमे ॥

हेमाद्येकतमं कुम्भमानीय गलिताम्भसा ।
पूरितं पल्लवोपेतं स्वर्णवस्त्रादिसंयुतम् ॥ 25

संहतौ विकिराख्याणामासनं तु चलाचलम् ।
संकल्प्य मूर्तिमन्त्रेण मूर्तीभूतं घटं न्यसेत् ॥

वर्धनीं सोदकां वस्त्रसूत्रवर्णादिसंयुताम् ।
विन्यसेदस्त्रभूतां तां प्रत्यङ्नालसमन्विताम् ॥

संपूज्य गन्धपुष्पाद्यैर्घटाख्यां गुरूत्तमः ।
इन्द्रमग्निं यमं चैव निर्ऋतिं वरुणं तथा ॥

वायुं सोमं तथैशानं पूजयेत्प्राग्दिगादितः ।
विरिञ्चिमीशदक्षस्थं विष्णुं निर्ऋतिवामगम् ॥

घटस्थं कलशस्थं वा कुण्डस्थं वा यजेद्गुरुः ।
तथैव वज्रशक्त्यादिदशास्त्राण्यपि पूजयेत् ॥ 30

भो भो शक्र त्वया स्वस्यां दिशि विघ्नप्रशान्तये ।
सावधानेन यागान्तं स्थातव्यं तु शिवाज्ञया ॥

सर्वेषां लोकपालानमनेन क्रमयोगतः ।
शिवाज्ञां श्रावयेत् कुम्भं भ्रामयेदग्रतोऽस्त्रकम् ॥

विन्यसेत्कुम्भवर्धन्यौ पूर्ववत्तदनन्तरम् ।
स्थिरासनं च संपूज्य देवमत्रं च पूजयेत् ॥

मूर्तिविद्यातनुं साङ्गं शिवं सावरणात्मकम्।
पूजयित्वा तयोरैक्यं कल्पयेद्भगमुद्रया ॥

सव्यमुष्टिस्थमापिण्डीलिङ्गमङ्गुष्ठको हरः ।
भूतये कलशं स्पृष्ट्वा पूर्वमङ्गुष्ठपर्वणा ॥ 35

संस्पृशेद्वर्धनीं पश्चान्मुष्टिना हृदयाणुना ।
मुक्तये च पुरस्स्पृष्ट्वा वर्धनीं मुष्टिनैव तु ॥

स्पृशेदङ्गुष्ठकाग्रेण चरमं च घटं तथा ।
उमायै भगरूपिण्यै लिङ्गरूपधराय च ॥

शङ्कराय नमस्तुभ्यमिति स्तुत्वाऽनुमोद्य च ।
यज्ञस्यास्य पतिस्त्वं हि मूर्तिरेषा तवाचला ॥

एतत्ते ज्ञाननिस्त्रिंशस्तद्गृहाण स्वमायुधम् ।
मया प्रवर्तितश्चायं यज्वना भवतः क्रतुः ॥

रक्षणीयं त्वयैतद्धि समाप्तिर्यावदस्य हि ।
यज्ञरक्षाधुरं तस्मिन्नेवमारोप्य देशिकः ॥ 40

अर्घ्यपात्रं विधायाथ दद्यादर्घ्यमथाम्भसा ।
निरोधनाय तत्पात्रं तथैव स्थापयेद्गुरुः ॥

वर्धनीविकिरोत्थास्त्रैस्समन्ताद्यागमण्टपम् ।
अपसारितविघ्नं तु भावयेद्भूपरिग्रहम् ॥

मण्डले स्थण्डिले वापि लिङ्गे वा शिवमर्चयेत् ।
विशेषपूजयोपेतं पावके शिवमर्चयेत् ॥

भगवन् देहमाविश्य मदीयमनुकम्पया ।
कर्तव्योऽनुग्रहस्तेषां शिष्याणां भावितात्मनाम् ॥

संप्रार्थ्यैवं करोमीति लब्धानुज्ञश्शिवाद्गुरुः ।
मन्त्रितं मूलमन्त्रेण सप्तकृत्वः सितं शुभम् ॥ 45

उष्णीषं शिरसि न्यस्य शिवेनैक्यं तु भावयेत् ।
सर्वेषां कर्मणां साक्षी मण्डले समुपस्थितः ॥

यज्ञस्य रक्षकत्वेन शिवकुम्भे व्यवस्थितः ।
होमाधिकरणत्वेन पावकस्थस्सदाशिवः ॥

शिष्यदेहे तु तच्छिष्यपाशमोचनकारकः ।
अनुग्रहकरो देवो मम देहे व्यवस्थितः ॥

पश्चाधिकरणो देवस्सोऽहमेव सदाशिवः।
अपृथग्भूतमात्मानं तत्समानगुणं स्मरेत्॥

ममापि हृदयादीनि साधनानि न संशयः।
स्वातन्त्र्यमेव संभाव्य शिवं विज्ञापयेदिति॥ 50

यदर्थोऽयं मया देव भवद्यागः प्रवर्तितः।
त इमे पशवश्शान्ता द्वारि तिष्ठन्ति वारिताः॥

अविसंवादिभिर्लिङ्गैरुद्धूतध्वान्तवृत्तयः।
भवदीयकरैर्ज्ञात्वा चिरं युष्मत्प्रचोदितैः॥

विहितावश्यकाः स्नाता निवर्तितदिनक्रियाः।
सितवस्त्रोत्तरीयास्त्वत्पादपद्मदिदृक्षवः॥

तत् करोतु प्रसादं मे तत्प्रवेशाय शङ्कर।
प्रवेशयामि तानेतान् भवत्पादाम्बुजान्तिकम्॥

कुरुष्व वचनं भद्र प्रवेशाय किलेत्यहम्।
उक्तश्शिवेन संभाव्य ततश्शिष्यान् प्रवेशयेत्॥ 55

द्वारस्य संमुखं बाह्ये प्रणवे कुशमण्डले।
शिष्यं तत्रैव संस्थाप्य स्थित्वा स्वयमुदङ्मुखः॥

विलोकयेच्छिखान्ताच्च यावत्पदनखाग्रकम्।
नखाग्राच्चूलिकां यावत् तत्त्वज्ञानदृशा गुरुः॥

अयमात्मा शिवत्वार्हश्शिथिलीकृतबन्धनः।
पतिशक्त्या निवेशाय पाशव्रातश्च मद्दृशः॥

तदामुं ताम्रसंस्थानं स्वगुणोदययोग्यकम्।
स्पर्शवेधिमणिप्रख्यं चोदितोऽहं च शम्भुना॥

संस्पर्शाद्विमलीकृत्य कलधौतमिवाचिरात्।
करोमि गुणसंपन्नं सतां मस्तकभूषणम्॥ 60

ततस्संप्रोक्ष्य दर्भेण शिरस्याताड्य भस्मना।
दर्भमूलाग्रभागाभ्यां हृत्प्रदेशादधोर्ध्वयोः॥

उल्लिखेत् पाशसंतानं प्रवृत्तकरणोन्मुखम्।
सकलीकृत्य तं शिष्यं नेत्रबन्धं विधाय च॥

अस्त्रेण प्रोक्षितेनैव कुण्ठितेनैव वर्मणा।
संस्तुतेनैव मूलेन सितवस्त्रेण देशिकः॥

प्रवेश्य पुष्पक्षेपं तु कारयित्वा तु दर्शयेत्।
शिवमण्डलदक्षस्थे मण्डले पूर्ववन्नयेत्॥

प्रणवं तत्र संस्थाप्य शिष्यमुन्नतदेहकम्।
धारणाभिश्च संशोध्य सकलीकृत्य तत्तनुम्॥ 65

गन्धाधिवासितं कृत्वा स्वसव्यकरपल्लवम्।
सासनेन सदेहेन शिवेन समधिष्ठितम्॥

शिवहस्तमिति ध्यात्वा सापेक्षनिरपेक्षकम्।
हृद्देशाद्भ्रूप्रदेशान्तं नीत्वा वै चूलिकान्तकम्॥

सह प्रासादोच्चारेण समस्तग्रन्थिभेदिना।
रुद्रेश्वरपदावाप्तिदायकं शिरसि न्यसेत्॥

कुर्याच्छिष्यस्य सर्वाङ्गालम्भनं च विशेषतः।
ततस्तस्याञ्जलौ पुष्पं गन्धधूपाधिवासितम्॥

न्यस्य सर्वात्मना शम्भोः प्रत्येकं प्रार्थयेत् स्थितम्।
अपनीय दृगालोकाच्छादनं वसनं क्रमात्॥ 70

सहसालोकितेशानशिववक्त्रसरोरुहम्।
यातमङ्ग मुञ्चेति प्रसूनं शिवसंमुखम्॥

स्फुटभक्तिशिवाम्भोजपरागमिव पुञ्जितम्।
तत्पातसूचिते स्थाने पूर्वं शिवपदोत्तरम्॥

नामावधार्य विप्रस्य देवकण्ठगणात्मकम्।
क्षत्रविट्छूद्रजातीनां स्त्रीणां शक्त्यन्तसंज्ञकम्॥

शिवनामाथ सर्वेषां सर्वं सर्वत्र वा मतम्।
सप्रदक्षिणमष्टाङ्गं प्रणामं चोपदिश्य च॥

नीत्वा कुण्डान्तिकं स्वस्य दक्षिणे प्रणवासने।
संस्थाप्य शिष्यं तद्धस्ते दत्वा दर्भस्य मूलकम्॥ 75

दर्भाग्रं स्वस्य जङ्घायास्सन्धौ संयोज्य देशिकः।
पिङ्गलामध्यदेहस्थां विनिःसृत्य शिशोस्ततः॥



तस्य नाड्यां विलीनेति भावयेन्मूलमन्त्रतः।
दत्वाहुतित्रयं नाडीसन्धानार्थतया गुरुः॥

प्रवेशनिर्गमौ कार्यौ चैतन्यग्रहणाय च।
शतमष्टोत्तरं हुत्वा शिवमङ्गानि वै दश॥

पूर्णां हुत्वा शिवेनैव प्रायश्चित्तनिमित्ततः।
शतमष्टोत्तरं हुत्वा तेनैव शिवमन्त्रतः॥

विप्रादयोऽपि शूद्रास्स्युर्गुणतस्तान् समुद्धरेत्।
भवादिजातिमुद्धृत्य स्वाहान्तेनैव मूलतः॥ 80

हुत्वाहुतित्रयं पश्चाच्छिवं प्रति वदेदिति।
आहारभावदोषाभ्यां योनिबीजशरीरतः॥

शुद्धो द्विजो भवत्वात्मा भगवन् परमेश्वर।
रुद्रांशापादनेऽप्येवमाहुतित्रयमाचरेत्॥

अयं रुद्रो भवत्वात्मा भगवंस्त्वत्प्रसादतः।
इत्येवं प्रार्थनां कृत्वा कुर्यात्प्रोक्षणताडने॥

प्रविश्य शिष्यदेहे तु रेचकेनात्मनो गुरुः।
विधायास्त्रेण विश्लेषच्छेदनं चाङ्कुशाख्यया॥

मुद्रया शिष्यचैतन्यमाकृष्य द्वादशान्तके।
समानीय ध्रुवेणैव संपूज्य शिशुमस्तकात्॥ 85

संहारमुद्रया स्वस्य हृदये पूरकेण तु।
प्रविश्य कुम्भकेनैव स्मृत्वा समरसं शिशोः॥

रेचकेन प्रयोगेण केशेशानसदाशिवान्।
नीत्वात्मान समाकर्ष्य द्वादशान्ते ततश्शिवम्॥

संहारमुद्रया शिष्यदेहे संयोजयेद्गुरुः।
दत्वायज्ञोपवीतं तु मूलमन्त्राभिमन्त्रितम्॥

शतं सहस्रं वा हुत्वा पूर्णां दद्याच्छिवेन तु।
एवं समयसंस्कारयुक्तो यश्शिवपूजने॥

होमे चाध्ययने चैव मन्त्राणां श्रवणेऽपि च।
योग्यस्स्यान्मुनयो रौद्रं पदं प्राप्नोति मानवः॥ 90

ततो निर्वाणदीक्षायामधिकारी भवेद्द्विजः।
शूद्रं हि दीक्षयित्वा तु विधानेनाग्रजन्मनः॥

सोऽपि शूद्रत्वमाप्नोति दीक्षादानान्न संशयः।

॥ इति उत्तरकामिकाख्ये महातन्त्रे समयविशेषदीक्षाविधिः विंशतितमः पटलः॥

## ॥ स्थालीपाकविधिः ॥

स्थालीपाकविधिं वक्ष्ये नैवेद्यचरुकल्पने।
स्थालीं ताम्रमयीं वाथ मृण्मयीं लक्षणान्विताम्॥

प्रक्षाल्य पात्रमस्त्रेण कवचेनावकुण्ठ्य च।
निरीक्ष्य प्रोक्ष्य चाभ्युक्ष्य संताड्यालिप्य गन्धतः॥

कण्ठे संवेष्ट्य कौशेन रज्जुना वर्मरूपिणा।
मण्डले गोमयालिप्ते प्रोक्षिते शस्त्रवारिणा॥

वर्मावकुण्ठिते पात्रे मन्त्रविन्यस्तदर्भके।
षडुत्थमासनं चेष्ट्वा तां न्यसेन्मूर्तिरूपिणीम्॥

शिवं सावरणं तत्रावाह्य संपूज्य संत्यजेत्।
पुष्पाद्यमाज्येनाभ्यज्य वस्त्रपूतं पयो न्यसेत्॥ 5

चुल्लीमस्त्रेण चोल्लिख्य तेन प्रोक्ष्यावकुण्ठ्य च।
संपूज्य चोपलिप्याथ धर्माधर्मद्वयं यजेत्॥

दक्षवामस्थभुजयोश्शिवाग्निं मध्यमे न्यसेत् ।
आसनं प्रणवं कृत्वा तां तस्यामधिरोपयेत् ॥
द्विप्रस्थमाढकं वापि पञ्चप्रसृतिनिर्मितम् ।
चतुर्थं कल्पयेद्धीमान् शालीतण्डुलकादिकम् ॥
क्षालनोद्घाटनेऽस्त्रेण कृत्वाघोरमनुस्मरन् ।
विपचेत्पूर्ववक्त्रस्सन् मध्यपक्वं यथा भवेत् ॥
उष्णे तप्ताभिघारस्स्यात् शीते शीताभिघारणम् ।
स्वान्तया मन्त्रसंहत्या शिवहव्यवहे पुरा ॥ 10
हविष्यान्ने च हेतुकत्वा सुखिन्नो भव इत्यपि ।
तप्ताभिघार एवं स्याद् द्वितीये मण्डले ततः ॥
प्रोक्षणादिसमायुक्ते पूजितेऽप्यवरोप्य ताम् ।
सुशीतलो भवेत्येवं वौषट्पल्लवया तथा ॥
शीताभिघार एवं स्यान्मन्त्रसंहितया भवेत् ।
संमृज्य च मृदम्भोभ्यां स्थालीं सुरभिमुद्रया ॥
अप्सूतीकृत्य कुण्डस्य पश्चिमे पूर्वमण्डले ।
पूजिते हृदयेनेष्ट्वा चाङ्गैरेकैकशः क्रमात् ॥

शिवेनाष्टोत्तरशतं संपातं पूर्ववच्चयेत् ।
एवं संपादितेनैव चरुणा होम इष्यते ॥ 15
तण्डुलेनाम्भसा चाथ चरुं नित्यं विपाचयेत् ।
हविष्यचतुरंशेन होमकर्माथवा मतम् ॥
होमावशिष्टं देयं स्यादाचार्याय प्रयत्नतः ।
पञ्चगोचरसंस्थाय समस्तागमवेदिने ॥
शिष्टमन्यप्रदत्तश्चेद्धोमो निष्फल एव हि ।
शेषहीने चरोर्होमे स होमः स्यादनिष्टदः ॥
हविषो न्यूनवेदांशश्चरुर्वा होमकर्मणि ।
आद्यांशो दैविकः प्रोक्तो द्वितीयो होमकर्मणि ॥
परिवारे तृतीयः स्याच्चतुर्थो देशिकाय हि ।
पृथक् चरुश्चेन्नैवेद्यं सर्वमीशे निवेदयेत् ॥ 20
प्राणाग्निहोत्रं कर्तव्यं साधकैः फलकाङ्क्षिभिः ।
एतेषामन्यथाभावे सर्वं भवति चान्यथा ॥

॥ इति उत्तरकामिकाख्ये महातन्त्रे स्थालीपाकविधिः एकविंशतिः पटलः ॥

—)(:)(—

## ॥ स्वप्नाध्यायविधिः ॥

अथ वक्ष्ये विशेषेण स्वप्नाध्यायं द्विजोत्तमाः ।
दीक्षापूर्वे च काम्ये वा लक्षयेत् स्वप्नमुत्तमम् ॥
तत्र हि प्रथमे यामे स्वप्नो यदि भविष्यति ।
लक्षयेदात्मनः काले फलभाक्त्वं द्विजोत्तमाः ॥
संवत्सरे तु सिद्धिस्स्यात् द्वितीये यामके यदि ।
षण्मासेन तु सिद्धिस्स्यात् तृतीये यामके यदि ॥
मासेनैव तु सिद्धिस्स्यात् चतुर्थे यामके यदि ।
शीघ्रमेव फलं तस्य भविष्यति न संशयः ॥

रश्मिमन्तं विवस्वन्तं शशाङ्कं तारकावृतम् ।
प्रदीप्तमग्निहोत्रञ्च प्रदीपमतिभास्वरम् ॥ 5
मातरं पितरं दारान् पुत्रान् भ्रातॄन् सुहृज्जनान् ।
यदि पश्येन्नरः स्वप्ने विपुलां श्रियमाप्नुयात् ॥
चन्द्रार्कतारग्रसनं परिमार्जनमेव च ।
भक्षणं धारणं तेषां राज्यं सम्प्राप्नुयान्नरः ॥
श्वेतपुष्पजमालानां धवलानां च पक्षिणाम् ।
सौवर्णानां खगानां च दर्शनाल्लभते श्रियम् ॥



गन्धर्वनगरं वापि देवगन्धर्वयोषिताम् ।
दर्शनात्प्रापणात्स्वप्ने विपुलां श्रियमाप्नुयात् ॥
जातरूपमयं छत्रं श्वेतमालाविभूषितम् ।
चूतादिपुण्यवृक्षाणां सफलानां तु दर्शनम् ॥ 10
तेषामारोहणं शस्तं तत्फलानां च संग्रहः ।
तेषां च भक्षणं शस्तं शैलहर्म्याश्वहस्तिनाम् ॥
गोसिंहवृषभाणां च वीक्षणारोहणे हिते ।
सिंहासनचतुर्दन्तिशिबिकारोहणं शुभम् ॥
सूर्येन्द्वग्न्युदधिव्योमधरित्रीशैलवीक्षणम् ।
तरणं निम्नगाम्भोधिकाननानां जलस्य च ॥
प्रशस्तं दोहनं कर्म महिषीणां गवामपि ।
सिंहा[illegible]नां च बान्धवानां स्ववेश्मनि ॥
प्रसवो वाथ चैतासां भूतिलिङ्गमिति स्मृतम् ।
पयसः पाटलाया गोः पानं यद्वत्सलीलया ॥ 15
दग्धश्चापक्वमांसानां विष्ठापायसभक्षणम् ।
एतेषामपि लाभश्च प्रशस्तो मुनिपुङ्गवाः ॥
सुधारुधिरमद्यानां पानं मत्स्यस्य भक्षणम् ।
एतेषां वीक्षणं वापि स्नानं वा रुधिरेण यत् ॥
अम्भसा त्वभिषेकस्तु गवां शृङ्गस्रुतेन च ।
चन्द्रस्रुतेन वा राज्याभिषेकश्शुभमिष्यते ॥
पशुसिंहगजानां च लाभो युद्धे विशेषतः ।
अध्यापनं च शास्त्राणामन्नलेपनमेव च ॥
तृणदारुद्रवौ नाभौ कुसुमस्योदकस्य च ।
बर्हिशीर्षकहस्तत्वं सितमाल्यानुलेपनम् ॥ 20
सिताम्बरत्वं विप्रस्य दर्शनं चाशिषश्शुभाः ।
श्वेताभस्य फलस्यापि व्यजनस्य ध्वजस्य च ॥
सरोजस्यातपत्रस्य मणीनां दर्पणस्य च ।
दीपस्य चामरस्यापि शङ्खस्य कमलस्य च ॥

विमलस्याम्भसश्शस्तं दर्शनं हाटकस्य च ।
राज्ञश्च दर्शनं तेन भाषणं शुभदं मतम् ॥
देवालयं सप्रतिमं दृष्ट्वा श्वेतां च गामपि ।
सागरं सरितो वापि तोययुक्ताः श्रियं लभेत् ॥
एतेषामपि पानेन राज्यं संप्राप्नुयान्नरः ।
शङ्खमाभरणं श्वेतवस्त्रं पुरुषमेव च ॥ 25
रूपयौवनसंपन्नां स्त्रियं वा तादृशीमपि ।
उत्तमां श्रियमाप्नोति स्वप्ने दृष्ट्वा तु मानवः ॥
कुमारं सर्पमुक्षाणं गजं दृष्ट्वा सुतं लभेत् ।
तृणं च विपुलं धान्यं गृहमग्नियुतं तथा ॥
दृष्ट्वा स्वप्ने लभेल्लक्ष्मीं दृष्ट्वा शक्रध्वजं तथा ।
भूम्यम्बुवैरिग्रसनं शत्रूणां च वधक्रियाम् ॥
जयं विवादद्यूतादौ संग्रामे विजयं तथा ।
कृत्वा तु श्रियमाप्नोति भूमौ चन्द्रनिवेशनम् ॥
निर्मलं गगनं दृष्ट्वा लोऽदनासि मृति तथा ।
दृष्ट्वाग्निं संग्रहं कृत्वा लब्ध्वा वै राजचिह्नकम् ॥ 30
नरस्सुखमवाप्नोति तन्त्रीवाद्यस्य वादनम् ।
तयोरुल्लङ्घनं चैव रोदनं च शुभावहम् ॥
परस्त्रीणां च तथा लाभस्तयालिङ्गनमेव च ।
निगलैर्बन्धनं धान्यं स्वदेहदहनं तथा ॥
निकृत्य च तनुं दिक्षु क्षेपणं शुभदं मतम् ।
स्वागतेनोरगेणाथ सिंहेनैवाथ भक्षणम् ॥
इन्म्लेच्छोर्दर्शनं शस्तं सत्यानां च विशेषतः ।
पात्रे मणिमये वाथ राजते वाथ भोजनम् ॥
सौवर्णे पद्मपत्रे वा दध्नो वान्नस्य भोजनम् ।
लाभो वा हयशब्दस्य जय शुद्धस्वेति शब्दयोः ॥ 35
मुद्राभृङ्गारवृष्टीनां दर्शनं शुभदं द्विजाः ।
पिण्याको गोशकृत् शस्ता चोच्छ्रितं स्वात्मनो गृहम् ॥

बन्धुभिस्संवृतं दीप्तमात्मानं वेश्मसंस्थितम् ।
शिवाङ्कुराणि बीजानि तथा विद्याधरागमम् ॥

छिन्नाभ्यां रुधिराक्ताभ्यां पादाभ्यां स्वं च पश्यति ।
ऐश्वर्यं शीघ्रमाप्नोति पुत्रांश्च लभते बहून् ॥

छिन्नः स्याद्दक्षिणो हस्तः स्वप्ने यस्य सशोणितः ।
पुत्रं च लभते शीघ्रमायुष्मन्तं यशस्विनम् ॥

छिन्नं यस्य शिरः स्वप्ने दृश्यते रुधिराप्लुतम् ।
लभते क्षिप्रमारोग्यं धनं चास्य विवर्धते ॥ 40

सुवर्णाकृतिभिर्गात्रं स्वप्ने यस्य विशीर्यते ।
धनधान्यमवाप्नोति सर्वाभरणभूषितः ॥

आपणाजीवमात्मानं स्वप्नान्ते यस्तु पश्यति ।
वृद्धिं तस्य विजानीयादायुश्चास्य विवर्धते ॥

चक्रं च पूर्णकुम्भं च श्रीवत्सं स्वस्तिकं तथा ।
सोमपानं तथा प्राश्य लभते वाञ्छितं फलम् ॥

शिवागमादिशब्दानां श्रवणं धनदं भवेत् ।
गुरुमाज्ञागमश्चापि शुभो वृश्चिकदर्शनम् ॥

देवद्विजमरुत्स्त्रीभिर्भाषणं शुभदं मतम् ।
ताम्बूलमञ्जनं बिल्वपत्रं कुङ्कुममण्डले ॥ 45

पश्येदिष्ट्यादिकरणं कुड्यगोत्रक्रियामपि ।
उद्यानारामकरणं शुभप्रदमिहोच्यते ॥

अगम्यागमनं चैव सर्वगात्रेषु बन्धनम् ।
बन्धुभिर्धर्षणं धन्यं कन्यायाः पतिसंग्रहः ॥

स्नानं शिवार्चनं वह्नेस्तर्पणं दर्शनं सताम् ।
गणानां विबुधानां च सुधापानं नभोगतः ॥

इत्येवमादिकं स्वप्ने दर्शनं शुभसूचकम् ।
भूषणलाभः पर्यङ्कशय्यादाहोऽम्बरस्य च ॥

आसनस्य च दाहो वा नावारोहणमेव च ।
नवशुक्लाम्बरत्वं च तथा शुक्लोदनाशनम् ॥ 50

मधुनः पङ्कजस्येव जननं हननं स्वकम् ।
शंखपद्मनिधेर्लाभः शुभस्वप्नोऽयमीरितः ॥

दृष्टानामपि चैतेषां प्राप्तानां च कथञ्चन ।
अप्राप्तिरपहारश्च स्वप्नेऽनिष्टार्थसूचकः ॥

लिङ्गस्य प्रतिमाया वा भङ्गादौ नृपतेर्मृतिः ।
पिण्डिकाया महिष्यास्तु धाम्नो राष्ट्रस्य विभ्रमः ॥

बन्धूनां च क्षयः पुत्रनाशस्त्वग्निप्रवेशनम् ।
हस्तध्वस्तफलं भस्मगुल्मशाकस्त्वनिष्टदः ॥

विदेशगमनं जातिस्थौल्यं व्याधिप्रपीडनम् ।
उदन्तता विनाशश्च मलिनत्वमशोभनम् ॥ 55

सुवर्णरजताङ्गारमूत्रविष्ठोद्गमोऽशुभः ।
चूर्णानां मूर्ध्नि कांस्यानां नग्नता मलिनाम्बरः ॥

अभ्यङ्गः पतनं चोच्चाद्दोलारोहस्त्वनिष्टदः ।
रक्तपुष्पद्रुमाणां च चण्डालव्याधदर्शनम् ॥

भक्षणं पक्वमांसानां तैलस्य रुधिरस्य च ।
नर्तनं प्रसनं चैव विवाहो गीतमेव च ॥

तन्त्रीवाद्यविहीनानां वाद्यानामपि वादनम् ।
स्रोतोनिमज्जनं यत्र स्नानं गोमयवारिणा ॥

पङ्कोदेनाथवा मातुः प्रवेशो जठरेऽशुभः ।
चितायां रोहणं शक्रध्वजस्य पतनं तु वा ॥ 60

सूर्याचन्द्रमसोस्तारापतनं चाशुभप्रदम् ।
दिव्यान्तरिक्षभौमानामुत्पातानां च दर्शनम् ॥

देवद्विजादिभूपालगुरूणां क्रोध एव च ।
आलिङ्गनं कुमारीणां पुरुषाणां च मैथुनम् ॥

हानिश्चैव स्वगात्राणां विरेकवमनक्रिये ।
दक्षिणाशाभिगमनं व्याधिनाभिभवस्तथा ॥

गृहाणाञ्चैव पातश्च गृहसंमार्जनं तथा ।
पीडा पिशाचकव्यादैर्वानरैश्च नरैरपि ॥



पराद्भिभवश्चैव तस्माच्च व्यसनोद्भवः ।
काषायवस्त्रधारित्वं तद्वत्स्त्रीक्रीडनं द्विजाः ॥ 65

लोहपानावगाहौ च रक्तमाल्यानुलेपनम् ।
क्रीडनं च लिहा स्फोटः क्षुद् पिपासापरिश्रमः ॥

मधात्राणां ध्वजानां च स्रोतसां गमनं च वा ।
रज्जुच्छेदः प्रतापे तु वपनं श्मश्रुकेशयोः ॥

नखस्य दीर्घता सेवा सेवनं च स्त्रियोऽपि वा ।
विरूपेण नरेणाङ्गमर्दनं चोत्सवेऽपि वा ॥

पशुकीटाण्डजानां च स्तम्भस्य च मृतस्य च ।
दर्शनं भग्नयानत्वमशुभाय भविष्यति ॥

सरसि क्रीडनं द्यूतं जतुभाण्डेन च द्विजाः ।
द्रव्यस्य नाशः सुहृदो वियोगः श्यामवस्त्रता ॥ 70

छेदः पाण्योः सरोजस्यापहारो जीर्णवस्त्रता ।
प्रासादवेश्मशृङ्गानामवतारस्तु नेष्यते ॥

कर्णे च [...]तकादौ वा सर्पवेशप्रवेष्टने ।
क[...]सतिलमुद्गादि लोहानि लभते च यः ॥

स्वस्थश्च लभते व्याधिं व्याधितो मृत्युमृच्छति ।
भग्नध्वजादिकं भग्नछत्रं दृष्ट्वाशुभं लभेत् ॥

एकस्य पुण्डरीकस्य धारणं तद्वदीरितम् ।
तथैव हसनं मुक्तेरोदनस्य तिलैः सह ॥

अधःशिरस्तया स्नानं तैले दन्तविदारणम् ।
कुञ्जरस्य पृष्ठगाश्च अदनं जातवेदसा ॥ 75

दारूणां पर्वतानां च पीठे कृष्णायसे द्विजाः ।
संस्थानं कृष्णवर्णस्य रथे खरसमन्विते ॥

पानं च कण्ठबन्धश्च शिशुनाराहिपीडनम् ।
हीनवृत्तसमाजश्च नाभेरन्यप्रदेशके ॥

तृणवृक्षप्रसूनानां प्रोद्भवः क्रीडयापि च ।
खरेण कम्पनोष्ट्रेण भोगो व्यालेन रौद्रकैः ॥



सर्वैरन्यैरनिष्टाय भवेत्कायस्य लेपनम् ।
स्नेहेन गोमयेनापि पङ्कैः कलुषवारिभिः ॥

मैढ्रं जिह्वाभुजानां च रोम्णां विच्छेदनं नखैः ।
व्यालस्यारोहणं नेष्टं तदाघ्राणं न संमतम् ॥ 80

आमायते यश्च भृशं श्वापदैर्विकृताननैः ।
स च दुःखमवाप्नोति पङ्कमग्नस्तथैव च ॥

परिष्वक्तोऽथ यस्यापि प्रेतैः प्रव्रजितैरपि ।
अन्तावसायिभिर्वा वा कृष्यते यमदूतकैः ॥

शाल्मली किंशुकं यूपं चैत्यं वा पारिभद्रकम् ।
पुष्पाढ्यं कोविदारं वा योऽप्यारोहति मानवः ॥

शोषणं कथितद्रव्यं च तोयपानं प्रमेहिणः ।
हरिद्राभोजनं चापि यद्भवेत्पाण्डुरोगिणः ॥

रक्तपित्तं पिबेद्यश्च शोणितं स विनश्यति ।
श्मशानावरोहश्च स्वप्नेऽलक्ष्मीप्रदो भवेत् ॥ 85

आदित्यचन्द्रताराणां मलिनत्वमशोभनम् ।
पर्वं द्रव्यं च कन्या वा भवत्याकाशतो यदि ॥

ग्रहाणां ग्रहणेनापि राज्ञो मरणमादिशेत् ।
दर्शनं चाशुभानां वा तैरेवालिङ्गनं तु यत् ॥

काकं गृध्रं तथा श्येनं पिशाचं राक्षसं तथा ।
पतन्तीं प्रतिमां वापि दृष्ट्वा व्यसनमाप्नुयात् ॥

पतन्तमुच्छ्रितं केतुं पर्वतं वृषमेव वा ।
गृहं महत्तरं कुड्यं प्रधानमरणं भवेत् ॥

निर्वाणदीपं रजकं क्षित्रेणं धूतकारकम् ।
म्लेच्छं दृष्ट्वान्त्यजं वापि कृष्णदन्तं च दुर्मुखम् ॥ 90

कपालोन्मत्तवेषं च पुरुषं वा स्त्रियं च वा ।
कृष्णां सशूलां स्वप्नान्ते सद्यो मरणमश्नुते ॥

निहते च तथात्मानं ताभ्यां दृष्ट्वा तथा भवेत् ।
अश्वमुष्ट्रं खरं वापि महिषं श्वानमेव च ॥

सृगालं महिषीं तैलं दुर्गन्धं वायसं वृकम् ।
वृषं वराहं मार्जारमुलूकं कृष्णसर्पकम् ॥

कृष्णकीटं च गां कृष्णां पश्येच्चेद्भयमाप्नुयात् ।
एतेषां स्पर्शने वापि ग्रहणे रोहणे तथा ॥

काञ्चनस्यापि वृक्षस्य दर्शनं मरणप्रदम् ।
वह्नियानरथादीनां छत्रादीनां च भग्नता ॥ 95

विधवादर्शनं चापि तत्सङ्गेन धनक्षयः ।
घूर्णायमानमात्मानं शिरोमुण्डनमेव च ॥

बद्धमन्यैर्निरुद्धं वा पश्येच्चेद्भयमाप्नुयात् ।
यवागूमारनालं वा दिवैद्रुनविनाशनम् ॥

तण्डुलं पक्वमांसं वा तुषमङ्गारकोद्रवे ।
मुद्गं माषं मरीचं च सर्षपं पश्यतोऽशुभम् ॥

कुण्डादौ पतनं नेष्टं तथा केशविकीर्णता ।
वर्तितैलतिलादीनामञ्जनालेपनं तथा ॥

अन्धकारनिवेशस्तु महामार्गगतिस्तु वा ।
संन्यासिप्रेतकैः सार्धं कण्टकादिषु वेशनम् ॥ 100

तारं च भक्षयेद्वाथ शवं वा भक्षयेद्यदि ।
रक्तवर्णं तु यद्द्रव्यं कृष्णं वा न प्रशस्यते ॥

अशुभं च भवेद्रक्तं कृष्णवस्तुप्रदर्शनम् ।
अन्यत्र शोणितात् पद्मात् पद्मशाद्रक्तचन्दनात् ॥

तथा च रजकश्चित्रिघूतकम्लेच्छकारिणः ।
[illegible]पण्डितो वापि न शुभं तस्य जायते ॥

वल्मीकदर्शनं शुष्कविषवृक्षस्य दर्शनम् ।
भूतानां रोदनं नेष्टं वृक्षाणां पतनं क्षणात् ॥

दैवताश्च द्विजातिश्च पितरो योगिनो नृपः ।
यद्वदन्ति नरं स्वप्ने तत्तथैव भविष्यति ॥ 105

एष्यत्कर्मविपाकस्य शुभस्याप्यशुभस्य वा ।
लिङ्गं स्वप्नो विधिस्तस्य न च चेद्धातुदोषजः ॥

यद्धातुप्रकृतिर्येन धातुना वापि दूषितः ।
तद्विकारानणुः स्वप्ने प्रत्यक्षानिव पश्यति ॥

यश्च श्रुतोऽर्थमादत्य दृष्टं वा यदि वा श्रुतम् ।
तच्चिन्तासन्ततिः स्वप्ने प्रत्यक्षेणावभासते ॥

तद्द्वयं स्वप्नविज्ञानं नाभिप्रेतमिहागमे ।
इष्टाक्षदूरविज्ञेयत्वमिवाग्निकाशवत् ॥

समथ तुरतः स्वप्ने यत्पश्यति शुभाशुभम् ।
प्रणिधानविनिर्मुक्तस्तत्सत्यं ना विशेषतः ॥ 110

अशुभं वा शुभं स्वप्नमाचार्याय निवेदयेत् ।
द्विजातिप्रक्रमेणैव वयसा वा धनेन वा ॥

आचारेणाथ धर्मेण विद्यया वाथ यस्य तु ।
श्रेष्ठत्वं विद्यते विप्राः स एवादौ निवेदयेत् ॥

अनेनैव क्रमेणाथ स्वं स्वं स्वप्नं निवेदयेत् ।
आचार्यानुज्ञया वाथ ज्येष्ठत्वं तेषु क[illegible]तम् ॥

ब्राह्मणः समयाख्येन संस्कारेण समन्वितः ।
निर्वाणदीक्षया युक्तः शूद्रो द्वावेकभागिनौ ॥

नियोगो यस्य तन्मध्ये स एव गुरुमाश्रयेत् ।
आदौ समानदीक्षायां सत्यामपि च यत्र तु ॥ 115

नियोगः स शिशुः पूर्वं नमस्कुर्याद्गुरूत्तमम् ।
जात्यादिसाम्ये संस्कारसाम्ये सत्यपि यत्र तु ॥

नियोगो देशिकस्यासीत् स चादौ गुरुमाश्रयेत् ।
परस्परनमस्कारेऽप्येवमेव क्रमो मतः ॥

ज्येष्ठत्वेऽप्यस्य संस्कारायेषां तैर्गुर्वनुज्ञया ।
न संमान्यो नमस्कारप्रमुखैः कारणाद्गुरोः ॥



एतद्देशिकशिष्याणामाचारः परिकीर्तितः ।
किमत्र बहुनोक्तेन यदुक्तं देशिकेन तु ॥
तदेव सर्वदा कार्यं शिष्यैः श्रेयोऽभिकाङ्क्षिभिः ॥

इति उत्तरकामिकाख्ये महातन्त्रे स्वप्नाध्यायविधिर्द्वाविंशतितमः पटलः

## ॥ निर्वाणदीक्षाविधिः ॥

निर्वाणाख्यां प्रवक्ष्यामि दीक्षां परममोक्षदाम् ।
आचार्यः कृतनित्यस्तु कृतमन्त्रादितर्पणः ॥

कृतसूर्यार्चनः शुद्धः सकलीकृतविग्रहः ।
सामान्यार्घ्यकरो द्वारद्वारपार्चनसंयुतः ॥

पश्चिमद्वारमार्गेण संप्रविश्य मखालयम् ।
कृतब्रह्मार्चनः क्षेत्ररक्षां कृत्वा विधानतः ॥

भूतशुद्धिमणोर्न्यासं विशेषार्घ्यं च कल्पयेत् ।
कृत्वा ज्ञानाख्यखड्गं च पञ्चगव्यं विधाय च ॥

विकिरानभिमन्त्र्याथ भूमिशुद्धिं विधाय च ।
विक्षिप्य विकिरांस्तांश्च कुबेरेशे समाहरेत् ॥ 5

कुम्भं च वर्धनीं तत्र संपूज्य परितो गुरुः ।
लोकपालानथाभ्यर्च्य तेषामाज्ञां तु श्रावयेत् ॥

भ्रामयित्वा घटाग्राद्ध ज्ञानखड्गं समर्प्य च ।
मण्डले देवदेवेशमिष्ट्वाग्नौ तर्पयेन्मनून् ॥

भगवन् देहमाविश्य मदीयमनुकम्पया ।
अनुग्रहस्त्वया कार्यः शिष्याणां भावितात्मनाम् ॥

इति विज्ञाप्य लब्धाज्ञस्त्वोष्णीषं शिरसि न्यसेत् ।
सर्वेषां कर्मणां साक्षी मण्डलस्थः सदाशिवः ॥

यज्ञस्य रक्षकः कुम्भे पावके होमकारणम् ।
शिष्ये तु पाशनाशाय मद्देहे पाशमोचकः ॥ 10

पञ्चाधिकरणो देवस्त्वमहमेव सदाशिवः ।
मन्त्राः करणभूता ये शिवस्य हृदयादयः ॥

ममापि ते तथैवेह स्वातन्त्र्यं स्वस्य चात्मनि ।
संभाव्याध्येष्येदेवं प्राणैरन्तर्बहिःस्थितैः ॥

परीक्षितः समर्थोऽयं निर्वाणार्थमुपस्थितः ।
[illegible]शांशः समयेषु व्यवस्थितः ॥

तदेतस्मिन्विमोक्षाय प्रसादः क्रियतां मम ।
पूर्णसंकल्पितार्थः सन् शिवशास्त्रोपबृंहितः ॥

आरभ्य यागधामस्तु प्रवेशं चाग्निसंमुखम् ।
आत्मनः सव्यभागे तु कृत्वा शिष्यस्य वेशनम् ॥ 15

नाडीसन्धानकर्माज्यतर्पणं पूर्णया सह ।
कृत्वा शिवादिमन्त्राणां दीपनं सम्यगाचरेत् ॥

अघोरसंपुटं कृत्वा शिवं साङ्गं फडन्तकम् ।
कुटिलभ्रूसमायुक्तं करालवदनान्वितम् ॥

आहुतीनां त्रयं कार्यं मन्त्राणां दीपने च यत् ।
कन्याविनिर्मितं सूत्रं त्रिगुणं त्रिगुणीकृतम् ॥

अस्त्रेण प्रोक्षितं वर्मकुण्ठितं मूलमन्त्रतः ।
संपूज्य चोर्ध्वकायस्य शिखायां बन्धयेच्छिशोः ॥

अङ्गुष्ठकाग्रपर्यन्तं तत्सूत्रमवलम्बयेत् ।
सूत्रं सुषुम्नारूपं तु ध्यात्वा शिष्यस्य देहतः ॥ 20

हुंशुन्नाये नमश्चेति संगृह्यास्मिन् नियोजयेत् ।
संपूज्य गन्धपुष्पाद्यैर्वर्मणा चावकुण्ठयेत् ॥

संनिधानाय मूलेन चाहुतित्रयमाचरेत् ।
शिष्यस्य हृत्प्रदेशं तु संप्रोक्ष्यास्त्रेण पुष्पतः ॥

संताड्य हृदयं तस्य रेचकेन प्रविश्य च ।
हुङ्कारमुच्चरंस्तस्य चैतन्यं तारकाकृतिम् ॥

हृद्ग्रन्थिमस्त्रमन्त्रेण छित्वा संगृह्य मूलतः ।
द्वादशान्ते न्यसेच्छिष्यजीवं हृदयसंपुटम् ॥ 25

सान्तं बीजं समुच्चार्य तस्मिन् संहारमुद्रया ।
सूत्रे नियोजयेद्वर्ममन्त्रेणैवावकुण्ठयेत् ॥

हुत्वाहुतित्रयं तस्य संनिधानाय मूलतः ।
मलं च कर्म मायेयं भोक्तृभोगशरीरजम् ॥

शान्त्यतीतादिकं सूत्रे योजयेत्स्वस्वमन्त्रतः ।
शान्त्यतीतां चतुर्थ्यन्तां हुंफट्कारां शिवादिकाम् ॥

पुष्पास्त्रेणैव संताड्य शिष्यस्य शिरसि स्थिताम् ।
संहारमुद्रयाकृष्य शिवं प्रणवपूर्वकम् ॥

शान्त्यतीतां चतुर्थ्यन्तां नमस्कारसमन्विताम् ।
उच्चार्य योजये सूत्रे भ्रूमध्यान्तोपलक्षिते ॥ 30

अनेनैव क्रमेणाथ भूतशुद्धयुक्तमार्गतः ।
कलाचतुष्टये कुर्यात्ताडनग्रहयोजनम् ॥

गलब्रह्मान्तनाभ्यन्तजान्वन्तात्ङ्गुष्ठकान्तिकम् ।
व्याप्यव्यापकभावं च कुर्यात्तत्र विचक्षणः ॥

मन्त्राः पदानि वर्णाश्च तत्त्वानि भुवनानि च ।
व्याप्यानि व्यापकाः कर्ममलमायेयबन्धनाः ॥

व्याप्या मलादयश्चापि व्यापकास्तु कलाः स्मृताः ।
तासां च संग्रहे तस्मात्सर्वे स्युः स्वीकृतास्त्विह ॥

स्थापितामिश्च शुद्धभिः [...] स्थापिता अपि ।
शुद्धा भवन्ति सर्वे [...] ॥ 35

तासां च दीपनं कार्यमोङ्कारादिफडन्तकम् ।
अघोरबीजं मूलं च शान्त्यतीतकलामपि ॥

चतुर्थ्यन्तं समुच्चार्य हुङ्कारं तु समुच्चरन् ।
एवमन्यासां च मूलं तु स्वस्वबीजं स्मरन् नयेत् ॥

आहुतीनां त्रयं हुत्वा पाशबन्धनमाचरेत् ।
शिरः संताड्य चास्त्रेण शिवमन्त्रं त्रिधा स्मरन् ॥

भावन् शान्त्यतीताख्यं मलकर्मसमन्वितम् ।
व्यापकं शान्तितत्त्वादेः पाशं बन्धपदद्वयम् ॥

हुम्फडन्तं समुच्चार्य सूत्रे ग्रन्थिं समाचरेत् ।
शिवं संपुटितं स्वस्वबीजं च भगवत्पदम् ॥

कलाचतुष्टयं पाशं मलतत्त्वादिव्यापकम् ।
बन्धबन्धपदं चैकशो हुम्फडन्तसमन्वितम् ॥ 40

पृथक्पृथक् समुच्चार्य सूत्रे ग्रन्थिं समाचरेत् ।
तत्सूत्रं च समादाय शरावयुगसंपुटम् ॥

कृत्वा संपातहोमं च तत्सूत्रं मण्डलाधिपे ।
निवेद्य तस्य रक्षार्थं शिवकुम्भान्तिकं न्यसेत् ॥

प्रणतिं कारयित्वा च शिवेन शिव[...]के ।
आचार्यः शिष्यसहितो निःसृत्य म[...]डपात् ॥

पञ्चगव्यं चरुं तेभ्यः प्रदद्याद्दन्तधावनम् ।
शुचौ सावरणे देशे विविक्ते लेपिते भुवः ॥

पृथङ्मण्डलकस्थेभ्यो भुक्तिमुक्त्यपेक्षया ।
भूतये पूर्ववक्त्रेभ्यः सौम्यास्येभ्यो विमुक्तये ॥ 45

निर्णिक्तपादपाणिभ्यः प्रयतेभ्यो यथाक्रमम् ।
अन्तर्जानूपविष्टेभ्यः सकुशे दक्षिणे करे ॥

उद्धृत्य दक्षिणेनैव सपवित्रेण पाणिना ।
चुलुकं पञ्चगव्यस्य दद्यादेकं हृदान्वितम् ॥

तत्पीत्वा प्रयतेभ्योऽथ तद्वदेव द्वितीयकम् ।
चुलुकं चापरं चापि दत्वा दद्यात्ततश्चरुम् ॥



अष्टग्रासप्रमाणं तु पुटके यज्ञवृक्षके ।
मुमुक्षुभ्यो बुभुक्षुभ्यः कृते पिप्पलपत्रकैः ॥

अद्विजस्पर्शितस्य भक्षणानन्तरं पुनः ।
शुचिभ्यो दन्तकाष्ठं च क्षीरवृक्षसमुद्भवम् ॥ 50

कनिष्ठिकाङ्गुलस्थूलमृजुं सरसमव्रणम् ।
मङ्गलार्काङ्गुलान्मुक्तिभुक्तिलिङ्गप्रकाशकम् ॥

राजदन्ताग्रसन्दंशचर्वितं धौतमग्रतः ।
आमुक्तं निपतेद्यत्र तेन विद्याच्छुभाशुभम् ॥

अग्न्यन्तकपलाशानां दिक्षु वायौ न शोभनम् ।
मुखपातोऽस्य शेषासु शोभनः कर्मणां वशात् ॥

इति ज्ञात्वा तु तत्पातमाचान्तांस्तान् समाहितान् ।
स्वमाधिगमनेनैव सरक्षान् स्वापयेन्निशि ॥

सद्योगोमयसंसृष्टभूतलस्पर्शनीषु च ।
पूर्वयाम्योत्तमाङ्गासु शय्यासु कुशभस्मना ॥ 55

परस्परमलग्नासु सोपधानासु पार्श्वतः ।
चतुर्दण्डिकयास्त्रेण गुप्तासु वितमस्सु च ॥

अस्त्राभिरक्षितास्वस्त्रजप्तासु शतसंख्यया ।
हृदारोप्य शिखाबद्धशिखान् वर्माभिमन्त्रितैः ॥

क्षौराच्छादिताच्छिष्यांस्तिलसर्षपभूतिभिः ।
अस्त्राभिमन्त्रितैस्तिस्रो रेखाः संकल्प्य बाह्यतः ॥

स्वप्रमाणकं मन्त्रमनुज्ञाय च तानथ ।
दत्वा बाह्यबलिं दिक्षु दिक्पतिभ्यो यथाक्रमात् ॥

चरुं दन्तधवादिष्टप्रतिकूलोपशान्तये ।
विषमाचिषमादीय हुत्वा चैकैकतः शतम् ॥ 60

प्रायश्चित्तं ततो हुत्वा मूलेनाष्टोत्तरं शतम् ।
प्रक्षालिताङ्घ्रिहस्तस्तु स्वाचान्तः स्नानमम्भसा ॥

निर्वर्त्य भस्मना वापि परिवर्त्य सितांशुके ।
शिवीकृततनुर्ध्यात्वा समस्ताध्वतनुं शिवम् ॥

चरुकं पञ्चगव्यं च प्राशयेद्दन्तधावनम् ।
पूर्ववत्प्रयतो भूत्वा शुद्धः स्वयमपि स्वपेत् ॥

अथ प्रातर्द्वितीयेऽह्नि कृतनित्यक्रियो गुरुः ।
शिष्यान् पृष्ट्वा निशास्वप्नान् दुःस्वप्ने शान्तिमाचरेत् ॥

घृतदूर्वामधुक्षीरैः शतहोमं च कापिलैः ।
शुभे तु पूर्ववच्छिष्यप्रवेशादिक्रमाचरेत् ॥ 65

आहूय शिष्यान् कुण्डस्य समीपे स्वस्य दक्षिणे ।
अवलम्ब्य च तत्सूत्रं शिष्यदेहेऽधिवासितम् ॥

करोम्यनुग्रहं देव शिशोरभ्येषयेदिति ।
लब्धाज्ञो न्यसेदग्नौ शक्तिमाधाररूपिणीम् ॥

निवृत्तिं विन्यसेच्छक्तौ कलातत्त्वादिसंयुताम् ।
पृथ्वीतत्त्वं क्षकारश्च मन्त्रौ हृदयसद्यकौ ॥

कालाग्निरथ कूश्माण्डं हाटकं ब्राह्मवैष्णवौ ।
रौद्रं च भुवनान्यन्तर्ब्रह्माण्डस्य स्थितानि षट् ॥

कपालीशो ह्यजो बुद्धो वज्रदेहः प्रमर्दनः ।
विभूतिरव्ययः शास्ता पिनाकी त्रिदशाधिपः ॥ 70

अग्निरुद्रो हुताशश्च पिङ्गलः खादको हरः ।
ज्वलनो दहनो बभ्रुर्भस्मान्तकः क्षयान्तकः ॥

याम्यो मृत्युर्हरो धाता विधाता कर्तृसंज्ञकः ।
संयोक्ता च वियोक्ता च धर्मो धर्मपतिस्तथा ॥

निर्ऋतिर्मारणो हन्ता क्रूरदृष्टिर्भयानकः ।
ऊर्ध्वकेशो विरूपाक्षो धूम्रलोहितदंष्ट्रिणः ॥

बलो ह्यतिबलश्चैव पाशहस्तो महाबलः ।
श्वेतोऽथ जयभद्रश्च दीर्घबाहुर्जलान्तकः ॥

मेघनादः सुनादश्च दशमः परिकीर्तितः ।
शीघ्रो लघुर्वायुवेगस्तीक्ष्णः सूक्ष्मः क्षयान्तकः ॥ 75

पञ्चान्तकः पञ्चशिखः कपर्दी मेघवाहनः ।
निधीशो रूपवान् धन्यः सौम्यदेहो जटाधरः ॥

लक्ष्मीधृक्पद्मधृक्छ्रीधृक् प्रसादश्च प्रकामदः ।
विद्याधिपेशौ सर्वज्ञो ज्ञानभुग्वेदपारगः ॥

सुरेशःशर्वो ज्येष्ठश्च भूतपालो बलिप्रियः ।
वृषो वृषधरोऽनन्तः क्रोधनो मारुताशनः ॥

प्रसन्नोदुम्बरेशौ च फणीन्द्रो वज्रदंष्ट्रिणौ ।
शंभुर्विभुर्गणाध्यक्षस्त्रियक्षस्त्रिदशेश्वरः ॥

संवाहश्च विवाहश्च नभो लिप्सुस्त्रिलोचनः ।
वीरभद्रो भद्रकाली सर्वोर्ध्वे भुवनद्वयम् ॥ 80

कपालीशादयः प्राच्यामग्निरुद्राद्योऽनले ।
याम्याद्या दक्षिणे भागे निर्ऋत्याद्याश्च नैर्ऋते ॥

बलाद्या वारुणे भागे शीघ्राद्या वायुगोचरे ।
उत्तरे तु निधीशाद्या ईशे विद्याधिपादयः ॥

वृषादयस्त्वधोभागे शम्भुमुख्या नभोगताः ।
भुवनानां शतं चाष्टाधिकमेवं तु विन्यसेत् ॥

एकाशीतिपदेष्वन्त्यप्रणवादि विलोमतः ।
नमोद्वयं च प्रणवं षडक्षरमतः परम् ॥

सर्वदश्च ततः शर्वशिवसूक्ष्मद्वयं तथा ।
शब्दद्वयं तथा ज्ञानद्वयं पिङ्गद्वयं तथा ॥ 85

पतङ्गं च द्विरभ्यस्तं तुरुयुग्मपदं भवेत् ।
साक्षियुग्मपदं पश्चात्पूर्वस्थितमतः परम् ॥

अस्तुतास्तुत इत्येवं ततश्चानचिंतार्चित ।
ब्रह्मविष्णुरुद्रपर सर्वसान्निध्यकारक ॥

सर्वभूतसुखप्रद भवोद्भवपदं ततः ।
भवयुग्मं तथा शर्वयुग्मं च प्रथमद्वयम् ॥

मुञ्च मुञ्च पदं योगाधिपते च पदं भवेत् ।
महातेजःपदं सद्भावेश्वरं चेति कीर्तितम् ॥

महादेवपदं पश्चात्पदान्यष्टौ च विंशतिः ।
निवृत्त्या व्याप्तमध्वानं तत्त्वाद्यं कलया स्मरेद् ॥ 90

ह्रां निवृत्तिकलायै च नमोऽन्तं प्रणवादिकम् ।
इत्युच्चार्य निवृत्तिं तु सूत्रात्संप्राप्य पावके ॥

आवाहेष्ट्वाहुतीनां तु त्रयं स्वाहान्तमाचरेत् ।
मलः कर्म च मायाख्यं भोक्तृभोगशरीरजम् ॥

भावयन् कल्पयेद्योनीरनन्ता देवगर्भगाः ।
तद्व्यापिकां च वागीशीं समावाह्य प्रपूजयेत् ॥

वागीश्वर्यै नमश्चेति ह्रूपूर्वं प्रणवादिकम् ।
हुत्वाहुतित्रयं पश्चात्स्वाहान्तेनैव मन्त्रतः ॥

संनिधीभव देवेशि पश्वनुग्रहकर्मणि ।
प्रार्थ्यैवं शिष्यमस्त्रेण संप्रोक्ष्य हृदि ताडयेत् ॥ 95

अस्त्राणुना फडन्तेन प्रणवेनान्वितेन च ।
स्वात्मनो रेचकेनैव तस्य देहे प्रविश्य च ॥

अस्त्रमन्त्रेण हृच्छेदं कृत्वा च ङ्कुशमुद्रया ।
आकृष्य मूलमन्त्रेण चाहुति ।माचरेत् ॥

तृणाग्रबिन्दुवद्धयात्वा प्रण वन पुटीकृतम् ।
सान्तबीजं समुच्चार्य शिशुं संहारमुद्रया ॥

पूरकेण हृदि स्वस्य संनिवेश्य च कुम्भकम् ।
कृत्वा मूलं स्मरन् स्वस्य द्वादशान्ते नियोज्य च ॥

आदाय तस्माच्चैतन्यं मुद्रयोद्भवसंज्ञया ।
सर्वासु योनिषु शिशोः संयोगं युगपन्नयेत् ॥ 100

स्वाहान्तमूलमन्त्रेण चाहुतित्रयमाचरेत् ।
भगवन् देवदेवेश शिशोः सर्वासु योनिषु ॥

संयोगं कुरु कुर्वत्र दीक्षाकर्मणि मोक्षदम् ।
निष्पत्त्यै सर्वगर्भाणां दद्यान्मूलाहुतित्रयम् ॥

भगवन्नस्य शिष्यस्य गर्भनिष्पत्तिमत्र च ।
सर्वासु योनिषु कुरु कुर्वित्येवं नयेद्द्विजाः ॥

ततस्तु जननार्थं तु दद्यान्मूलाहुतित्रयम् ।
भगवन् सर्वगर्भाणां जननं कुरु कुर्वणोः ॥



इत्युक्त्वा जननार्थं च पशोर्वृद्ध्यर्थमेव च ।
मूलाहुतित्रयं दत्वा शिवं प्रति वदेदिदम् ॥ 105

भगवन् शिष्यदेहानां प्रवृद्धिं कुरु कुर्विति ।
कर्मार्जनाय मूलेन चाहुतित्रयमाचरेत् ॥

भगवन्नात्मनो नानाभोगदं कुरु कुर्वय ।
कर्मार्जनं पठित्वैवं विशेषो लोकधर्मिणि ॥

प्राक्कर्मागामिकं धर्मरूपं कर्मार्जनं कुरु ।
देशतः कालतश्चैव देहेन विषयेण च ॥

संचितागामिभेदेन भोगं नानाविधं स्मरन् ।
भोक्तृत्वलिङ्गिते पुंसि सुखदुःखात्मवेदनम् ॥

मूलाहुतित्रयं दत्वा शिवं संप्रार्थयेदिति ।
भगवन् भोगनिष्पत्तिं सर्वत्र कुरु कुर्वणोः ॥ 110

परमप्रीतिरूपं च लयं भोगेषु संस्मरन् ।
शिवाहुतित्रयं दत्वा परमप्रीतिरूपकम् ॥

लयं च कुरु कुर्वत्र शिशोर्निर्वाणकर्मणि ।
जात्यायुर्भोगसंस्कारशुद्ध्यर्थं निष्कृताणोः ॥

हृदाहुतिशतं हुत्वा नयेन्मूलाहुतित्रयम् ।
सर्वकर्मसु शुद्धिं च निष्कृत्या कुरु कुर्वणोः ॥

भगवन्निति विश्लेषं भोगाभावादणोरिह ।
बहिर्निष्कामरूपं तु मायापाशात् स्मरन्नयेत् ॥

मूलाहुतित्रयं पश्चान्मलविश्लेषमाचरेत् ।
मलकार्यं च भोक्तृत्वं स्मृत्वा शुद्ध्यर्थमाहुतीः ॥ 115

दश दत्वा हृदा पश्चाद्दद्यान्मूलाहुतित्रयम् ।
मलविश्लेष एवं स्यात् कर्मविश्लेष उच्यते ॥

अत्यन्ताभावरूपं तु विश्लेषं कर्मणामिह ।
स्मृत्वाहुतित्रयं दद्यान्मूलमन्त्रं समुच्चरन् ॥

भगवन्नात्मनो मायामलकर्मात्मनस्त्विह ।
विश्लेषं कुरु कुर्वत्र तेभ्यो निर्वाणसंस्कृतौ ॥

ततो निवृत्तिपाशस्य व्यापिनस्तु मलादिषु ।
अस्त्राहुतित्रयं दत्वा शुद्धये तस्य मूलतः ॥

आहुतीनां त्रयं दत्वा निवृत्तिच्छेदनं त्विह ।
भगवन् कुरु कुर्वत्रेत्याज्ञां प्रार्थ्यैवमाचरेत् ॥ 120

अशेषाणां शरीराणां नाशे त्वेकत्वमात्मनः ।
संभाव्य वौषडन्तेन दद्यात्पूर्णां शिवाणुना ॥

ओं ब्रह्मणे नमश्चेत्यावाह्य संपूज्य तर्पयेत् ।
शब्दस्पर्शौ गृहाणात्र ब्रह्मन् स्वाहेति मन्त्रतः ॥

आहुतीनां त्रयं दत्वा शिवाज्ञां श्रावयेत्ततः ।
कारणेश त्वया नास्य यातुः पदमनामयम् ॥

प्रतिबन्धो विधातव्यस्त्वाज्ञैषा पारमेश्वरी ।
ब्रह्माणं संविसृज्याथ शुद्धतत्त्वाग्रसंस्थितम् ॥

निवृत्तिपाशनिर्मुक्तं शुद्धस्फटिकसन्निभम् ।
ध्यात्वाहुतित्रयं दद्यान्मूलमन्त्रं समुच्चरन् ॥ 125

निवृत्तिपाशादुद्धारं भगवन्नस्य चात्मनः ।
कुरु कुर्विति संहारमुद्रया पूरकेण तु ॥

कृत्वात्मस्थं ततस्सूत्रे कवचेन निवेशयेत् ।
आहुतीनां त्रयं दद्याच्छिशोः स्थित्यै शिवाणुना ॥

वागीश्वर्यै नमश्चेति संपूज्यैनां तु तर्पयेत् ।
आहुतीनां त्रयेणाग्नेः कार्यमस्या विसर्जनम् ॥

अथ सूत्रे प्रतिष्ठायां शुद्ध्यर्थमवलोकयेत् ।
त्रयोविंशतितत्त्वानि चापस्तेजो मरुद्वियत् ॥

गन्धो रसो रूपस्पर्शौ शब्दोपस्थौ च पायु च ।
पादौ पाणी च वाङ्नासा जिह्वा चक्षुस्त्वचश्श्रुतिः ॥ 130

मनोऽहङ्कारबुद्धी च प्रकृतिः स्यात्ततः परम् ।
तत्त्वानि कथितान्येवं लादिटान्ता द्विजोत्तमाः ॥

चतुर्विंशतिवर्णाः स्युः शिरो वामस्तथैव च ।
अघोर इति मन्त्रास्स्युर्षट्पञ्चाशत् पुराणि तु ॥

अमरेशः प्रभासश्च नैमिशः पुष्करोऽवधिः ।
डिण्डिमुण्डिस्तथा भारभूतिश्च लकुलीश्वरः ॥

हरिश्चन्द्रश्च श्रीशैलो जल्पेशाम्रातकेश्वरौ ।
मध्यमेशो महाकालः केदारो भैरवस्तथा ॥

गया चैव कुरुक्षेत्रं नाखलो नखलस्तथा ।
विमलेशोऽट्टहासश्च महेन्द्रो भीमसंज्ञकः ॥ 135

वस्त्रापदो रुद्रकोटिरविमुक्तो महालयः ।
गोकर्णो भद्रकर्णश्च स्वर्णाक्षः स्थाणुरित्यपि ॥

छगलण्डो द्विरण्डश्च माकोटो म[illegible] ।
कालञ्जरः शङ्कुकर्णः स्थूलेश्वरः स्थलेश्वरः ॥

पैशाच राक्षसं याक्षं गान्धर्वं चैन्द्रमेव च ।
सौम्यं चैव तथा ज्ञेयं प्राजेशं ब्राह्ममेव च ॥

अकृतश्च कृतश्चैव भैरवो ब्रह्मवैष्णवौ ।
कौमारमौमं श्रैकण्ठमष्टसप्त भवन्ति हि ॥

अमरेशादि चाप्तत्त्वे हरिश्चन्द्रादि तेजसि ।
गयादि वायुतत्त्वे च व्योम्नि वस्त्रापदादि च ॥ 140

छगलण्डाद्यहङ्कारे पैशाचाद्यं मतौ स्थितम् ।
प्रकृतावकृताद्यैव षट्पञ्चाशत् पुराणि तु ॥

महेश्वरायरूप्यन्ता पदानामेकविंशतिः ।
महेश्वरपदं चाद्यं परमात्मा द्वितीयकम् ॥

ततश्शर्वपदं चोक्तं शिवेति च ततः परम् ।
निधनोद्भवसंज्ञं च निधनाख्यपदं ततः ॥

अनिधनपदं चैवम् ओं स्वः पदमतः परम् ।
ओं भुवश्च पदं चान्यदोंभूःपदमतः परम् ॥

चतुर्धूनिर्मितं चान्यन्नाना नानापदं ततः ।
अनादे तु पदं चान्यदभस्मेति पदं ततः ॥ 145

अधूमपदमन्यच्च अनग्नीति पदं ततः ।
अरूपपदमन्यच्च ज्योतिर्ज्योतिस्तथैव च ॥

तेजस्तेजः पदं प्रोक्तं प्रथम प्रथमेत्यपि ।
अरूपिन्पदयुग्मं च पदान्येकं च विंशतिः ॥

प्रतिष्ठाकलया चैतत् सर्वं व्याप्तं तु भावयेत् ।
इत्युक्तसंख्यतत्त्वार्णपदमन्त्रैस्त्रिविष्टपैः ॥

गर्भितां तामनुस्मृत्य संदधीतोपभुक्तया ।
शुद्धं पाशं लघुं स्मृत्वा शोध्यं च गुरुमेतयोः ॥

वाचकं तदुच्चार्य शोध्ये शुद्धिं विलोकयेत् ।
सर्वसन्धानयोगाय चोपदिष्टश्शिवद्विजाः ॥ 150

ओं हां हीं पूर्वमुच्चार्य चतुर्थ्यन्तं कलाद्वयम् ।
नमस्कारान्तमिष्ट्वान्ते दद्यान्मूलाहुतित्रयम् ॥

कलोपस्थापनाद्यं तु सर्वं पूर्ववदाचरेत् ।
निष्कृतिं शिरसा दद्याच्छतहोमेन देशिकः ॥

हरेच्छुल्कं रसं दत्वा कलां विद्यां समाश्रयेत् ।
कलया विद्यया व्याप्तः पुरुषश्चादिमो भवेत् ॥

रागो नियतिविद्ये च कलाकालौ च मोहिनी ।
अकारादिवकारान्ता वर्णास्सप्त विलोमतः ॥

मन्त्रशिखा पुराणीह सप्तविंशतिसंख्यया ।
वामो भीमस्तयोग्रश्च भवेशानैकवीरकाः ॥ 155

प्रचण्डोमापती चाजोऽनन्तैकशिवसंज्ञकौ ।
क्रोधेशश्चैव संवर्तो ज्योतिः पिङ्गश्च सूरकः ॥

पञ्चान्तकैकवीरौ च शिखेदश्च महाद्युतिः ।
वामदेवो भवश्चैवोद्भवश्चाप्येकपिङ्गलः ॥

एकेक्षणस्तथैशानस्तथैवाङ्गुष्ठमात्रकः ।
षट्कं च पञ्चकं चैवं युग्मं युग्मं द्वयं द्वयम् ॥

अष्टकं पुरुषादौ च मायान्ते तु पुराणि हि ।
पदानि विंशतिर्व्यापिन् व्यापिन्निति पदं भवेत् ॥

व्योमिन् व्योमिन् पदं पश्चाद्दीप्तिं स्याद्चेतनम् ।
परमेश्वरपरायेति पदं चैव पुनर्भवेत् ॥ 160



ज्योतीरूपायसंज्ञं च सर्वयोगाद्यमेव च ।
पदं चानिधनायेति पदं गोत्रे प्रकीर्तितम् ॥

गुह्याय चातिगुह्याय पदं स्यादों नमो नमः ।
पदं मन्त्राणि पश्चात्र सद्यादीनि क्रमेण तु ॥

शिवायेति पदं सर्वप्रभवेति पदं ततः ।
शिवायेति पदं पश्चाद् ओं नमः पदमन्ततः ॥

ध्यानाहारायसंज्ञं च कीर्तितानि पदानि च ।
स्थानं पूर्ववत् कृत्वा विद्यामग्नौ निवेशयेत् ॥

निष्कृतिं शिखया दत्त्वा शतहोमं विधाय च ।
रूपगन्धौ गृहाणेति रुद्रे शुल्कं समर्पयेत् ॥ 165

भवाख्यं पदमेतत्तु कलात्रितयगोचरम् ।
भवोत्तीर्णमथात्मानमात्मतत्त्वोपरि स्थितम् ॥

अधिकारमलाविष्टमुद्रैश्वर्यभाजनम् ।
सुभोजविधुराचार्यो भोगं शुद्धाक्षसाधनम् ॥

अनुकूलमतंकीर्णमनासक्तिनिबन्धनम् ।
विलोक्य मनसा शान्तिं तत्पाश्चान्तर्गतानि च ॥

तत्त्वानि त्रीणि विद्येशसादाख्यानि द्विजोत्तमाः ।
वर्णास्तु गखकाः प्रोक्ता मन्त्रौ वक्त्रतनुच्छदौ ॥

वामा ज्येष्ठा च रौद्री च काली कलविकरणी ।
बलविकरणी चैव बलप्रमथनीत्यपि ॥ 170

सर्वभूतदमन्येव मनोन्मन्यपरा भवेत् ।
पुराणि नव विद्यायामनन्तसूक्ष्मसंज्ञकः ॥

शिवोत्तमैकनेत्रौ चाप्येकरुद्रस्त्रिमूर्तिकः ।
श्रीकण्ठश्च शिखण्डी चेत्येवमीशे पुराष्टकम् ॥

सादाख्यभुवनं स्वस्मिन् पुराण्यष्टादशैव तु ।
एकादशपदान्यासन्निन्ययोगिन इत्यपि ॥

योगपीठायमन्यत् स्याच्छाश्वतायपदं पुनः ।
ध्रुवायेतिपदं चैवानाश्रितायपदं ततः ॥

अनाथायपदं प्रोक्तमनन्तायपदं पुनः ।
शिवायेतिपदं सर्वव्यापिने च पदं ततः ॥ 175

व्योमादिव्योमरूपाय पदं व्योमाद्यमेव च ।
निष्कृतौ शतहोमं तु कवचेन समाचरेत् ॥

सर्वं पूर्ववदुद्दिष्टं शुल्कार्थं बुद्धगन्धकृती ।
ईश्वरः कारणेशस्स्यात् प्राग्वत्सर्वमतः परम् ॥

शान्त्यतीतकलायां तु शिवतत्त्वं व्यवस्थितम् ।
बीजं षोडशकं मन्त्रावस्त्रेशानशिवाह्वयः ॥

ओमित्येकं पदं ज्ञेयं पुराणि दश पञ्च च ।
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिश्च नामतः ॥

पुराणि बिन्दवानीह पञ्च प्रोक्तान्यतः परम् ।
इन्धिका दीपिका चैव रोचिका मोचिका तथा ॥ 180

तथोर्ध्वगामिनी चेति नादोत्थभुवनानि तु ।
व्यापिनी व्योमरूपा चाप्यनन्ता च ततः परम् ॥

अनाथा च तथा प्रोक्तानाश्रिता पञ्चमीरिता ।
भुवनानि तु शाक्तानि पञ्चैव कथितानि च ॥

एभिश्च गर्भिणीं ज्ञात्वा सन्धानं शुद्धया नयेत् ।
हैं हौं युक्तं चतुर्थ्यन्तं कलाद्वयमुदाहरन् ॥

संपूज्य मनसा युक्तं दद्यान्मूलाहुतित्रयम् ।
कलोपस्थापनाद्यं तु सर्वं पूर्ववदाचरेत् ॥

निष्कृतौ शतहोमं तु शिवमन्त्रेण कारयेत् ।
अस्त्रं लात्वा तु दीपेन पाशच्छेदाय होमयेत् ॥ 185

ततो निर्बीजदीक्षायां पूर्णान्ते कारयेदिदम् ।
समयं समयाचारं शक्तौ पाशात्मके न्यसेत् ॥

समयं समयाचारपाशशुद्धिं महेश्वर ।
शिष्यस्य कुरु कुर्वित्युक्त्वा शुल्कं समर्पयेत् ॥

शिवबीजं समुच्चार्य सदाशिवपदं पुनः ।
मनो गृहाण स्वाहेति चाहुतित्रयमाचरेत् ॥

पूर्वकत्संविसृज्याप सूत्रं संगृह्य निर्मलम् ।
रेचकेनात्मसंस्थं तु शिष्यदेहे निवेशयेत् ॥

शिरस्युदकबिन्दुं च दत्वा वागीश्वरीं यजेत् ।
संतर्प्य पावकस्थां तु ततो विज्ञापयेदिति ॥ 19

पत्रार्थं खेदितासि त्वं देवि गच्छ स्वगोचरम् ।
शान्त्यतीतां कलां शक्तितत्वे लीनां विचिन्त्य च ॥

आत्मतत्त्वं च मायान्तमुपस्थाप्य गुरूत्तमः ।
आत्मतत्त्वं चतुर्थ्यन्तमादौ मूलसमन्वितम् ॥

नमः प्रणवसंयुक्तमुत्तवा संपूज्य सन्निधौ ।
विधिवैकल्यशुद्ध्यर्थं स्वाहान्तं शिवमन्त्रतः ॥

सशब्दं तु शतं हुत्वा विद्यातत्त्वमुपांशुवत् ।
सदेशान्तमुपस्थाप्य हुत्वा चाष्टोत्तरं शतम् ॥

मन्त्रोच्चारणवैकल्याच्छिवमन्त्रेण शुध्यति ।
शिवतत्त्वमुपस्थाप्य शक्त्यन्तं मानसं स्मरेत् ॥ 195

शतमष्टोत्तरं हुत्वा मनोवैकल्यमात्रतः ।
मुच्यते शिवमन्त्रेण शिखाच्छेदमथारभेत् ॥

अध्वान्तस्थां च सर्वाध्वव्यापिकामध्वकारणाम् ।
ध्यात्वा शिखां तदग्रस्थं शुद्धस्फटिकसन्निभम् ॥

संचिन्त्य शिष्यचैतन्यं कर्तरीं शिखयालभेत् ।
छिन्द्याच्छिखां तु शिखया ततस्संज्ञापयेच्छिशुम् ॥

आचम्य सकलीकृत्य गुरुर्गोमयवेष्टिताम् ।
स्रुगग्रस्थां शिखां पूर्णां हुत्वाहुत्या च पावके ॥

ततो बहिर्विनिःसृत्य स्रुक्स्रुवौ कर्तरीमपि ।
प्रक्षाल्याचम्य शुद्धस्तु शिवमिष्ट्वा वदेदिदम् ॥ 200

अध्वशुद्धिरिशखाच्छेदस्त्वत्प्रसादान्मया कृतः ।
पात्वयं परमं धाम भगवन् परमेश्वर ॥

शिष्यं संयोजयाम्येनमाज्ञेदानीं विधीयताम् ।
एवं कुर्वित्यनुज्ञातः प्रहृष्टोऽर्घ्यकरो गुरुः ॥

समाहूय शिशुं याम्याच्छिष्ययुक्तोऽग्निसंमुखम् ।
शिष्यस्य प्रोक्षणं चैव सकलीकरणं ततः ॥

अन्तर्यागं ततो नाडयोस्सन्धानं मन्त्रतर्पणम् ।
सकलीकृतमन्त्राणामेकैकाहुतिदानतः ॥

सकलीकरणशुद्धिं च कृत्वा संयोजयेच्छिवे ।
विद्यातत्त्वास्पदाचार्यो बिन्दुवल्लासनस्थितः ॥ 205

इन्धिका दीपिका चैव रोचिका मोचिका तथा ।
तयोर्ध्वगामिनी चेति सूक्ष्मा सूक्ष्मामृता मता ॥

बिन्दुशक्तिरिति प्रोक्ता नादशक्तिः कला द्विजाः ।
आभिः कलाभिस्संवल्लसदेहयुग्देशिकोत्तमः ॥

व्यापिनी व्योमरूपा चाप्यनन्ता ह्यपरा मता ।
अनाथानाश्रिता चेति बहिःकरणसंयुतः ॥

अन्तःकरणसंयुक्तस्समनाकल्पितं च तत् ।
आत्मतत्त्वोन्मनास्थार्थे समापूरितदेहयुक् ॥

कृत्वा पूरककुम्भौ तु जिह्वासंबद्धताल्वयुक् ।
ईषद्व्यावृत्तवक्त्रः स दन्तैर्दन्तान्न संस्पृशन् ॥ 210

सम्यगुन्नतगात्रस्तु शिशुं संयोज्य चात्मनि ।
नाडीं सुषुम्नां प्राणाख्यवायुनैकीकृतां स्मरन् ॥

समन्त्रं शिष्यचैतन्यं शुद्धस्फटिकसंनिभम् ।
संभाव्य मन्त्रमुच्चार्य कारणत्यागयोगतः ॥

शिवे संयोजयेच्छिष्यं पूर्णया कुम्भकेन तु ।
व्यावर्तितमनःप्राणनादशक्तिकलात्मनः ॥

समीपे स्रुक्स्रुवौ मुक्त्वा घृतं संहारमुद्रया ।
शुद्धमुद्धृत्य शिखाकल्पं बहेरादाय पुद्गलम् ॥

योजयेदस्त्रबीजेन शरीरे तस्य पूर्ववत् ।
तत्र युक्तोऽप्यसौ तेन न समानगुणीकृतः ॥ 215

यावत्तावत् प्रयातस्य तत्त्वप्राप्तिर्यया विभोः ।
साम्राज्याधिगमेऽप्युर्वीनृपसूनोः कृतार्थता ॥



न षाड्गुण्यानभिज्ञस्य शतस्यापि न राजते ।
स्वगुणव्यक्तये तेन स्रुवेणाज्याहुतीस्तु षट् ॥

होमयेद् देशिको धीमान् प्रयोगेणामुना यथा ।
सर्वज्ञो नित्यसंबोधः स्वतन्त्रस्तृप्तिमान् भव ॥

अलुप्तानन्तशक्तिस्त्वं ह्रस्वप्रासादपूर्वकम् ।
आत्मन्निति पदोपेतं स्वाहान्तं दीपसंयुतम् ॥

इत्येवं कथिता दीक्षा सर्वपापविमोचनी ।
चत्वारो ब्राह्मणाद्याश्चाप्यनुलोमाश्च ये मताः ॥ 22

न्यायजा गूढजाता वा दीक्षायामधिकारिणः ।
जामातृपितृपत्न्याद्या योग्यास्स्युर्मोक्षकाङ्क्षिणः ॥

दीक्षाकर्ता शिवो यस्मात्तेषां तस्मान्न पुत्रता ।
अन्त्यजानां न होत्री स्यात् किं तु तेषां तु चाक्षुषी ॥

इति उत्तरकामिकाख्ये महातन्त्रे निर्वाणदीक्षाविधिस्त्रयोविंशतितमः पटलः ॥

---

## ॥ आचार्याभिषेकविधिः ॥

अभिषेकमथो वक्ष्ये येन स्याद्देशिको भुवि ।
आर्यावर्तोद्भवः श्रीमान् सर्वलक्षणलक्षितः ॥

यत्र विप्रास्सदाचारा यतयश्च तपोधनाः ।
सन्ति देवास्तथा वेदा आर्यावर्त इति स्मृतः ॥

एष देशः समादिष्टो न च विन्ध्याब्धिमध्यगः ।
ककाराष्टकनिर्मुक्तः प्रसङ्गात् सोऽपि कथ्यते ॥

कर्णाटश्च कलिङ्गाख्यः कच्छः काश्मीरसंज्ञकः ।
कोङ्कणः करहाटश्च कुट्टकः कोङ्क ईरितः ॥

आदिशैवकुले जातः श्रेष्ठस्स्यात् स्थापनादिषु ।
विप्रादयश्चतुर्वर्णा अपि योग्याः स्वकर्मणि ॥ 5

दीक्षायां सर्ववर्णानां प्रतिष्ठायामथोत्सवे ।
स्नपने प्रोक्षणेऽन्यत्र प्रायश्चित्तेऽभिषेचने ॥

व्याख्यानादौ च शस्तस्स्यात् स्वार्थे वाथ परार्थके ।
सर्वदेवार्चने विप्रास्त्वादिशैवो गुरूत्तमः ॥

विप्रादयस्त्रयो वर्णा दीक्षायां स्थापनेऽपि च ।
ब्राह्मणः क्षत्रियादीनां क्षत्रियस्शूद्रवैश्ययोः ॥

वैश्यः शूद्रस्य दीक्षायां स्वस्य जातावपीष्यते ।
स्वार्थेष्टौ चललिङ्गस्य प्रतिष्ठायां त्रयस्त्विमे ॥

शूद्रोऽपि शूद्रदीक्षायां स्वार्थे च चलसंज्ञके ।
बाणलिङ्गे क्षणे वापि स्थापको यदि नैष्ठिकः ॥ 10

आचार्यं गोलकं चैव दर्पितं परिवर्तकम् ।
तथैव परिवेत्तारं देवलं च पुनर्भवम् ॥

अभक्ष्यभक्षकं चैव कुण्डं भस्माङ्कुरं तथा ।
खट्वाङ्गिश्यावदन्तौ चाप्यारूढं पतितं तु वा ॥

अलसं वृषलं चैव व्रात्यं वेश्यापतिं तथा ।
असच्छास्त्रकृतं क्लीबं व्याधितं कुनखं तथा ॥

अथ व्यसनिनं पारदारिकं वृषलीपतिम् ।
चित्रकं गायकं चैव नर्तकं च विवर्जयेत् ॥

परराष्ट्रभृतं चैवाशुद्धबुद्धिं च तान्त्रिकम् ।
परापवादशीलं च तथा बहुकिर्णैर्वृतम् ॥ 15

सूतकं कामुकं वैद्यं कुतर्कस्थं तथालसम् ।
बौद्धादिशास्त्रनिरतं सन्यासव्रतिनं तथा ॥

चपलं शठसञ्चारं वृद्धया जीविनमेव च ।
शुल्ककर्मरतं चैव न्याये वैशेषिकेऽपि च ॥

सांख्ये विविधभेदे च मायावादेऽर्हतो मते ।
बौद्धे लोकायते शास्त्रे मीमांसायां विशेषतः ॥

अन्येष्वपि कुमार्गेषु कापाले पाञ्चरात्रके ।
सोमसिद्धान्तके वापि पूर्वभ[illegible]षु पश्चिमे ॥

भैरवे कौलशास्त्रे च शैवे[illegible]नादितेषु च ।
सिद्धप्रमेयजाले च कृताशं च निरन्तरम् ॥ 20

काव्यनाटकसक्तं च भरते तु निरन्तरम् ।
कामशास्त्रकृताभ्यासं पदव्युत्क्रान्तकं नरम् ॥

ज्योतिर्ज्ञानपरं वेदपुराणाहितचेतसम् ।
तत्सिद्धपुरुषार्थेषु कृतयत्नं परित्यजेत् ॥

कामिकादिशिवज्ञानं वेदार्थज्ञानमेव च ।
समं यो मन्यते मोहात्तं प्रयत्नेन वर्जयेत् ॥

शिवसिद्धान्तसंसिद्धज्ञानयोगक्रियासु च ।
चर्यायां वा स्वतंसिद्धप्रमेयशिवभाषिते ॥

शैवार्थदैहिके हित्वा विचारं सन्ततं नरः ।
योऽन्यत्र कुरुते न्यासं दुर्मतिं च विवर्जयेत् ॥ 25

अन्यायेन शिवद्रव्यहारिणं हन्तृसन्निभम् ।
अल्पविद्यामर्षकौ च विरूपं च विवर्जयेत् ॥

दैवज्ञं च तथाम्बष्टमूहापोहविवर्जितम् ।
समानगोत्रसंबन्धं कुतुमाक्षं च वर्जयेत् ॥

इत्युक्तलक्षणोपेतं शुद्धलग्नोदयेऽहनि ।
अभिषेकं ततः कुर्यादङ्कुरार्पणपूर्वकम् ॥

पूर्वस्यां वाथ चैशान्यां पश्चिमायां च दिश्यथ ।
मण्डपे सौम्यवक्त्रे तु वितानेनोपशोभिते ॥

अर्धहस्तोच्छ्रयं तद्वद्यगाश्रं वेदिकाद्वयम् ।
चतुर्हस्तप्रविस्तारं दक्षिणोत्तरदिग्गतम् ॥ 30

स्वस्तिकेन चतुर्दिक्षु रक्षितं दीपराजितम् ।
भुवः परिग्रहं कृत्वा मण्डपेऽग्नौ शिवं यजेत् ॥

कृतक्रियान्वितश्शिष्यो यदि संस्कृत्य दीक्षया ।
बहिरन्तर्बलिं दत्वा विधानमिदमाचरेत् ॥

काञ्चिकोदनमृद्भस्मदूर्वागोमयगोलकैः ।
सिद्धार्थदधितोयैश्च निर्मृज्य तदनन्तरम् ॥

नवधा पञ्चधा वापि सर्वधान्योपरि स्थितान् ।
घटान्वा कलशान्वाथ सकूर्चान् सापिधानकान् ॥

ससूत्रान् सोदकान् गन्धरत्नस्वर्णवराग्निवितान् ।
चूताश्वत्थपलाशाद्यान् बीजपूरफलावहान् ॥ 35

सदेशानेन विद्येशैर्नवपञ्चपवित्रकैः ।
पञ्चपक्षे निवृत्त्यादिकलाभिस्त्वभिमन्त्रयेत् ॥

शिवेन शतधालब्धान् पूजितान् स्नपनोचितान् ।
अथवा कलशानेकघटं वा शिवसंयुतम् ॥

दक्षवेद्यां तु संस्थाप्य सौम्यायां तु शिशुं न्यसेत् ।
भद्रपीठे शिवेनैव साङ्गेनाधिष्ठितं यथा ॥

स्वासनेन तथा सम्यगर्चितं विभवेन वा ।
वर्णभक्तशरावैस्तु निर्मृज्य वा जलेऽथवा ॥

शुद्धोदकेन संस्नाप्य तस्मादेशान्तरे पुनः ।
परिवर्तितसूत्राद्यं सोत्तरीयं समाल्कम ॥ 40

सितचन्दनदिग्धाङ्गं भस्मोद्धूलितमेव च ।
आनीय दक्षवेदिस्थे भद्रपीठे निवेशयेत् ॥

पूर्वास्यं गन्धपुष्पाद्यैः पूजयित्वा प्रवर्तयेत् ।
आरात्रिकं ज्वलद्दीपैस्सदर्त्या प्रतिबोधितैः ॥



ततोऽस्य दद्यादाचार्यश्शिष्यस्योष्णीषकादिभिः ।
करणीं कर्तरीं तद्वद् घटिकां स्रक्स्रुवौ पुनः ॥

दर्भं च पुस्तकान्यक्षसूत्रमामकुटं गुरुः ।
पादुकां चामरं छत्रं हस्तिनं शिबिकादिकम् ॥

राजाङ्गमन्यत् तत्काले दद्याच्छ्रद्धासमन्वितः ।
आज्ञां च श्रद्धया यावदद्यप्रभृति देशिक ॥ 45

दीक्षाव्याख्यादिकं ज्ञात्वा परीक्ष्य विधिना कुरु ।
तथैव देवदेवाय देशिकाय मया कृतम् ॥

त्वत्प्रसादादविघ्नेन चाधिकारं करोम्यिति ।
विज्ञापयेत्ततः कुण्डसन्निधिं प्राप्य देशिकः ॥

निवृत्त्यादिकलानां तु पृथगेवाहुतिं नयेत् ।
स्वस्वमन्त्रैस्ततः पूर्णां कृत्वा तद्दक्षिणे करे ॥

दर्भोल्मुकेन पञ्चाङ्गैः कनिष्ठादिषु लाञ्छयेत् ।
हरहस्तं च संकल्प्य स्वाधिकारं समर्पयेत् ॥

तदर्थं विधिनानेन प्रायश्चित्तं समाचरेत् ।
शिवासनाङ्गमन्त्रैश्च पूज्य देवस्य नामभिः ॥ 50

अङ्गैर्दशाहुतीर्हुत्वा शिवेनान्ते दशाहुतीः ।
तेनैव पूर्णां दत्वान्ते भगवन्तं क्षमापयेत् ।

अनेनैव प्रकारेण साधकं चाभिषेचयेत् ।
किं तु साध्याणुनालब्धैर्घटैरस्याभिषेचनम् ॥

दीक्षितः पुत्रकः प्रोक्तस्संस्कृतस्समयीकृतः ।
सामान्यसमयी यस्तु स तु माहेश्वरस्स्मृतः ॥

जात्युद्धारविहीनो यस्सामान्यसमयी भवेत् ।
तद्युक्तस्तु विशेषस्स्यात् चाक्षुष्याचास्तु याः स्मृताः ॥

दीक्षास्ताभिस्समायुक्ताः परिचारकनामकाः ।
न तु लिङ्गार्चने योग्याः किमु दीक्षादिकर्मणि ॥ 55

शापानुग्रहकर्ता चेद् गुर्वादींश्चैव दीक्षयेत् ।
शिवद्विजकुलोत्था ये ते च माहेश्वरा जनाः ॥

शिवेन दीक्षिताः पूर्वं सृष्ट्यादौ सर्व एव ते ।
मदर्चनार्थं तेषां च दीक्षा शुद्ध्यर्थमिष्यते ॥

शरीरबन्धनं यस्मात् प्रायश्चित्तमथाचरेत् ।
बहुधा दीक्षितो यस्तु शीघ्रं शिवमवाप्नुयात् ॥

भौतिको ब्रह्मचारी वा देशिको गृहमेधिनाम् ।
नैष्ठिको नैष्ठिकेषु स्याद् भुक्तौ मुक्तौ क्रमाद्यतः ॥

भुक्तिमुक्तिप्रसिद्ध्यर्थं गृहस्थो गुरुरिष्यते ।
सर्वानुग्राहकः प्रोक्तस्सान्तानिकगुरुस्सदा ॥ 60

अनुलोमक्रमो वा स्याद् प्रतिलोमस्तु नेष्यते ।
योषिद्युक्तस्सकेशश्च जटारुद्राक्षदण्डयुक् ॥

कौपीनमेखलाभिश्च परित्यक्तस्तु यो भवेत् ।
स गृहस्थ इति प्रोक्तो मुण्डी वा स्याज्जटादियुक् ॥

व्रती दारवियुक्तस्तु भिक्षाशी च तथा भवेत् ।
व्रती व्रतासमर्थो यो विधिना व्रतमर्पयन् ॥

'पश्चात् कृतविवाहस्सन् व्रतार्पक इहेष्यते ।
सृष्ट्यनन्तरकाले ये दीक्षिताः कौशिकादयः ॥

शिवेन तत्कुलोत्थाःस्युश्शैवास्सान्तानिका द्विजाः ।
आदिशैवास्तु ते ज्ञेयास्सर्वानुग्राहका मताः ॥ 65

वर्णाचारव्रतास्तेषु तद्वियुक्तास्तु वा मताः ।
पक्षत्रयमधश्शायी नक्ताशी चरुभुक् सदा ॥

मौनी त्रिषवणस्नायी शिवाग्निगुरुपूजकः ।
समूर्तिकं शिवं साङ्गमभ्यसेच्छक्तितो गुरुः ॥

आचार्यव्रतमेतत्स्यात् व्रतानामुत्तमं व्रतम् ।
आचार्यस्साधकश्चान्यः पुत्रकस्समयी यतः ॥

लिङ्गार्चं पूजयेन्नित्यं नान्यो नैमित्तिके मतः ।
प्रत्यहं समनुष्ठेयं तन्नित्यमिह कीर्त्यते ॥

स्नपनोत्सवशान्त्यादि कर्म नैमित्तिकं मतम् ।
प्रायश्चित्ते स्वनित्योत्थे तयोस्स्यादधिकारिता ॥ 70

स्वार्थनैमित्तिके योग्यः पुत्रको न परत्र च ।
यदि सान्तानिकौ तौ हि सोऽसौ नैमित्तिकेऽपि च ॥

स्वार्थे वाथ परार्थे वा स्थापनादिविवर्जिते ।
आचार्याधिकृते कृत्ये सर्वस्मिन् स्थापनादिके ॥

तदङ्गहोमकर्मादौ योग्यौ तौ देशिकाज्ञया ।
स्थापनाद्यङ्गभूतेषु मङ्गलाङ्कुरकादिषु ॥

अधिकारस्तयोरस्ति देशिकाज्ञा भवेद्यदि ।
आचार्यस्सर्वयोग्यस्स्याद्यदि सान्तानिको भवेत् ॥

साधकश्च तथाभूतस्सर्वकर्मणि शंसितः ।
महाशैवादयो योग्या दीक्षिता नित्यकर्मणि ॥ 75

नैमित्तिकं कृतं तैस्तु यदि दोषाय कल्पितम् ।
लक्षाध्यायी गुरुःश्रेष्ठो भुक्तिमुक्तिफलप्रदः ॥

मध्यमस्स्यात्तदर्धज्ञस्तत्पादज्ञोऽधमो भवेत् ।
संहितापारगो वाथ लक्षाध्याय्युपदेशतः ॥

संहिता स्याच्चतुष्पादयुक्ता कामिकपूर्विका ।
शैवं चतुर्विधं प्रोक्तं शैवं पाशुपतं तथा ॥

सोमसिद्धान्तकं चैव लाकुलं च चतुर्विधम् ।
चतुर्वक्त्रान्महेशाच्च पुरुषाद्याननोद्भवम् ॥

पूर्वं पूर्वं गुणोत्कृष्टं तत्र त्वेवं चतुर्विधम् ।
प्रत्येकं त्रिविधं प्रोक्तं वामदक्षिणभेदतः ॥ 80

सिद्धान्ताख्येन तेषां च सिद्धान्तः श्रेष्ठ उच्यते ।
तत्रापि शैवसिद्धान्तः सर्वेभ्यो ह्युत्तमोत्तमः ॥

सिद्धान्तो मन्त्रतन्त्रं स्यादतिमार्गं ततोऽवरम् ।
अध्यात्मं यत्ततो नीचं तस्माद्वैदिकमेव च ॥

वैदिकाल्लौकिकं हीनं ब्रह्माद्याः पञ्च देवताः ।
चकारो लौकिकादीनां तेषां भेद इहोच्यते ॥

सद्यमन्त्रादिनिष्क्रान्तो ब्रह्मनामाखिलार्थदृक् ।
तेन वै लौकिकं शास्त्रं मर्त्यलोकेऽवतारितम् ॥

शब्दशास्त्रमलङ्कारो निरुक्तं छन्द एव च ।
कौटिल्यं भारतं ज्योतिश्शास्त्रं वात्स्यायनादिकम् ॥ 85

आयुश्शास्त्रं धनुश्शास्त्रं वृक्षायुर्वेद एव च ।
लोकायतं तथा साङ्ख्यमार्हतो मतमेव च ॥

मीमांसा दण्डनीतिश्च वार्तायं लौकिकं मतम् ।
वाममन्त्रोद्भवो विष्णुः कारणेशो द्वितीयकः ॥

तेन वैदिकमुद्दिष्टं त्वष्टादशपुराणकम् ।
धर्मशास्त्रं च वेदान्तं पाञ्चरात्रं च बौद्धकम् ॥

रुद्रोऽघोराद्विनिष्क्रान्तस्त्वध्यात्मं च प्रणीतवान् ।
न्यायवैशेषिकं सांख्यं सेश्वरं यत् प्रणीतवान् ॥

ईश्वरः पुरुषाज्जातस्त्वतिमार्गं प्रणीतवान् ।
पञ्चार्थं लाकुलं चान्यत् तथा पाशुपतं मतम् ॥ 90

सदाशिवो हि भगवान् मन्त्रतन्त्रमपालयत् ।
ऋग्यजुस्सामाथर्वाश्च पुरुषाद्याननोद्भवाः ॥

पश्चिमं वामसंज्ञं तु वामाद्दक्षिणमुत्तमम् ।
दक्षिणात् कौलकं श्रेष्ठं महाकौलं ततः परम् ॥

पूर्वाम्नायं ततः श्रेष्ठं तस्मात्सिद्धान्त उत्तमः ।
सिद्धान्तात् परमं ज्ञानं नेति शास्त्रस्य निश्चयः ॥

अन्यतन्त्रेषु ये मुक्ताः सिद्धान्ते पशवो मताः ।
सिद्धान्तो वेदसारः स्यादन्यद्वेदबहिष्कृतम् ॥

सिद्धान्तविहिताचारो वैदिकाचार उच्यते ।
गर्भाधानादिकं कर्म यावच्छ्राद्धावसानकम् ॥ 95

तावत्तु वैदिकं कर्म शैवं वाथ समाचरेत् ।
तस्यापि दीक्षा कर्तव्या जातकर्मादिका क्रिया ॥

युक्ता समयया स्त्री चेद्दीक्षया पुरुषेण च ।
दीक्षायुक्तेन सोढा वै तद्गर्भाधानमेव वा ॥

तथा पुंसवनादिश्च शैव आवश्यको मतः ।
तत्पुत्रस्यापि कर्तव्या जातकर्मादिकाः क्रियाः ॥



क्रियास्तस्यापि कर्तव्याः पुरुषार्थप्रसिद्धये ।
वैदिक्यादौ तदन्ते वा कर्तव्या लोकसंवृतौ ॥

भार्या दीक्षाविहीना चेत्तस्याः पुत्रस्य चोभयोः ।
वैदिक्येव क्रिया कार्या भर्ता यद्यपि दीक्षितः ॥ 100

निकृष्टेष्वनुलोमेषु वैदिकी नेष्यते क्रिया ।
हित्वा सुवर्णं दैवज्ञं तथा स्याद्वैदिकीः क्रियाः ॥

शैवकर्मसमायुक्ता शैवे शैवी च केवला ।
श्रुतिस्मृत्यादिसंसिद्धमनुष्ठानं तु यद्भवेत् ॥

आवश्यके वा शौचे वा स्नाने त्वाचमनेऽपि वा ।
सन्ध्याया वन्दने वापि तर्पणे होमकर्मणि ॥

गर्भाधानादिके वापि दहने श्राद्धकर्मणि ।
अष्टकाकरणे वापि नित्यनैमित्तिकेऽपि वा ॥

वेदाध्ययनसंस्कारे सोमयागादिकेऽपि वा ।
वेदाध्ययनकादौ वा द्विजानां विहितं तु यत् ॥ 105

तत्सर्वं कर्म कर्तव्यं न त्वावश्यं तु शैवकम् ।
कर्तव्यं त्वप्यनुष्ठेयं शैवकर्माविरोधि यत् ॥

विरुद्धं चेत्परित्याज्यं न तु शैवीं परित्यजेत् ।
संग्राह्यं वैदिकं सर्वं शैववाक्याविरोधतः ॥

शैवं वैदिकमेवोक्तं वैदिकं शैवमेव वा ।
वैदिकाच्च बहिर्भूतं शैवं शैवात्तदप्यथ ॥

तथापि वैदिकाच्छ्रेष्ठं शैवं शैवात्परं न हि ।
सिद्धान्तं कामिकादि स्यात्तस्मात् परमनुत्तमम् ॥

शैवं तु मूलभूतं स्यात् चतुर्वेदास्तदुद्भवाः ।
तथापि वैदिकं वेदसारमित्यादिवाक्यतः ॥ 110

शैवं प्रोक्तं च सर्वत्र तदर्थोक्तया मुनीश्वराः ।
सर्वेषां कामिकादीनां शिवदेहत्वमिष्यते ॥

स शिवो द्विविधः प्रोक्तः सृष्टिसंहारभेदतः ।
कामिकाद्वातुलान्तेन वातुलात् कामिकान्ततः ॥

कामिकं तूर्ध्वमकुटं योगजं पुरुषाह्वयम् ।
अघोरमकुटं चिन्त्यं वामगं कारणं भवेत् ॥

अजितं सद्यमकुटं दीप्तमीशानवक्त्रकम् ।
सूक्ष्मं तु पुरुषास्यं स्यात् सहस्रं दक्षिणाननम् ॥

अंशुमान् वामवक्त्रं स्यात् सद्यास्यं सुप्रभेदकम् ।
विजयं कर्णं इत्युक्तो निश्वासं गलमुच्यते ॥ 115

स्वायम्भुवं च हृदयं नाभिरत्रानलं भवेत् ।
वीरं कटिप्रदेशस्स्यात् रौरवं गुदमुच्यते ॥

मकुटं तूरुप्रदेशः स्याद्विमलं वामगो भवेत् ।
चन्द्रज्ञानं तदग्रं स्याद्दक्षस्य बिम्बमन्यतः ॥

प्रोद्गीतं दक्षजानुस्स्याद्वामाङ्घ्रिर्ललितं भवेत् ।
जङ्घा सिद्धमिति प्रोक्तं संतानं वामगं भवेत् ॥

जङ्घाग्रं स्याच्च शार्वोक्तं वामगं पारमेश्वरम् ।
किरणं तलमित्युक्तं वातुलं वामगं तलम् ॥

सृष्टिभेदश्शिवः प्रोक्तस्संहारो विपरीततः ।

ऋषय ऊचुः—

पूर्वं तन्त्रावतारे तु कामिकं पादयुग्मकम् ॥ 120

इत्यादि कथितं देव परस्परविरोधदम् ।

ईश्वर उवाच—

बहुधा कथितं विप्रा भवद्भिरवधारितम् ॥

मम सर्वत्र मकुटं तथा नेत्रं तथात्मकम् ।
तथा पादौ च हस्ताश्च किं तु ध्यातृविभेदतः ॥

सृष्टिसंहारमार्गेण मम देहो विभिद्यते ।
भोगमोक्षप्रसिद्ध्यर्थं ज्ञानदेहो ममाग्रजाः ॥

निराकारं भवेज्ज्ञानं संकरं तदुपास्यतः ।
परस्परविरोधीति मतिहीनैः प्रबोध्यते ॥
ऐश्वरं पद्मवेद्वाक्यं तत्पूज्यं मतमुत्तमैः ।
न पुम्भिरार्षकं वाक्यं दैविकमृषिभिस्तथा ॥ 125
न देवैर्ब्रह्मणो वाक्यं वैष्णवं पद्मजेन वा ।
न शैवं विष्णुना वाक्यं बाध्यते न कदाचन ॥
उत्तरोत्तरवैशिष्ट्यं सर्वेषां परिकीर्तितम् ।
कामिकाद्यजितान्ताश्च ईशवक्त्रसमुद्भवाः ॥
दीप्तादिसुप्रभेदान्ताः पुरुषाख्याननोद्भवाः ।
विजयाद्वीरतन्त्रान्ताः पञ्चैतेऽघोरवक्त्रजाः ॥
रौरवान्मुखबिम्बान्ता वामदेवमुखोद्भवाः ।
प्रोद्गीताद्यष्टतन्त्रं च सद्यवक्त्रसमुद्भवम् ॥
तन्त्रावतारे सद्यादिशब्दैरीशादयो मताः ।
अष्टाविंशतितन्त्रं च सोपभेदं च वेत्ति यः ॥ 130

स गुरुश्शिव एव स्याच्छृणुयाद् तं प्रयत्नतः ।
अन्येन गुरुणारब्धे तस्य स्यादधिकारिता ॥
विशिष्टगुरुणारब्धे न हीनस्याधिकारिता ।
हीनारब्धे विशिष्टस्याधिकारः कर्मणीरितः ॥
विशिष्टमरणादौ स्याद् गुर्वन्तरनिवेशनम् ।
विशिष्टे विद्यमाने च हठाद्धीनेन कारिते ॥
सा हानिस्तन्महांश्छिद्रसमूहश्चान्धमूकता ।
तेन राज्ञो भवेद्दोषो राष्ट्रस्यापि भयं भवेद् ॥
कर्तुः कारयितुश्चापि ग्रामस्यापि च दोषकृत् ।
लोकप्रख्यातविद्याय गुरवे दत्तमण्वपि ॥ 135
द्रव्यं करोति सुसुखं सर्वलोकसमं यशः ।
ततो हि राज्ञो विज्ञेयं तद्दानं चोत्तमोत्तमम् ॥
तद्वित्तमाहृतं येन स पापी च स दुर्मतिः ।
नराधमस्स विज्ञेयस्सर्वलोकबहिष्कृतः ॥

इति उत्तरकामिकाख्ये महातन्त्रे आचार्याभिषेकविधिश्चतुर्विंशतितमः पटलः ॥

—(o)—

## ॥ गोत्रनिर्णयविधिः ॥

ऋषीणामपि सर्वेषां वक्ष्ये गोत्रविनिर्णयम् ।
गोत्राणां तु सहस्राणि अयुतान्यर्बुदानि च ॥
ऊनपञ्चाशदेवैषां संख्या स्यान्महतामिह ।
कौशिकः काश्यपश्चैव भरद्वाजोऽथ गौतमः ॥
अत्रिर्वसिष्ठश्चागस्त्यो जामदग्निश्च भार्गवः ।
अङ्गिराश्च मनुश्चान्यो द्विविधास्ते प्रकीर्तिताः ॥

शिवसृष्टिसमोपेता मुनयस्तद्विवर्जिताः ।
शिवसृष्ट्यन्विता ये ते पञ्चवक्त्रेषु दीक्षिताः ॥
कौशिकाद्याश्च मुनयस्सर्वे सर्वत्र दीक्षिताः ।
गोत्रं च दीक्षया नैषां किं त्वेषां तु स्वजातिकम् ॥
क्षत्रियाणां तु वैश्यानां गोत्रमाचार्यजं तु वा ।
नैव शूद्रस्य गोत्रं स्यादेवं गोत्रविधौ मतम् ॥



## ॥ ज्ञानदीक्षाविधिः ॥

ज्ञानदीक्षामहं वक्ष्ये शृणुध्वं द्विजसत्तमाः ।
शुभवारे सुदिने पक्षे सुमुहूर्ते विशेषतः ॥ १ ॥

एकान्ते निर्जने स्थाने मध्यरात्रावुपक्रमे ।
सच्छिष्याणां सदाचार्यो बोधं कुर्याद्विशेषतः ॥ २ ॥

शिवालये गुरुस्थाने शक्तिपीठे मठे गृहे ।
शुद्धदेशे सुखासीनः पञ्चगोचरसंभवः ॥ ३ ॥

दर्भासने व्याघ्रचर्मे षट्पदे पीठमध्यमे ।
सद्गुरूणां सुखावासे वसेज्ज्ञानमनुस्मरन् ॥ ४ ॥

स्नानोपचारकाद्यैश्च दुकूलाभरणैरपि ।
गन्धपुष्पादिभिः पूज्य योगपीठस्य मध्यमे ॥ ५ ॥

पायसं चाप्यपूपं च ताम्बूलं च निवेदयेत् ।
षोडशेनोपचारेणाभ्यर्चयेद्गुरुपादयोः ॥ ६ ॥

ज्ञानदीक्षां विशेषेण कुर्यात्सद्देशिकोत्तमः ।
शरीरमर्थं प्राणं च सद्गुरुभ्यो निवेदयेत् ॥ ७ ॥

दीर्घदण्डं नमस्कुर्यान्निर्लज्जो गुरुसंनिधौ ।
सच्छिष्ये तु विशेषेण बोधं कुर्यात्सदेशिकः ॥ ८ ॥

गन्धपुष्पकरः स्थित्वा शिष्यमूर्ध्नि च कारयेत् ।
अर्चितं तु शिरोमध्ये पादं कारुण्यदेशिकः ॥ ९ ॥

तत्पश्चाज्ज्ञानसद्भावमिदं शिष्यस्य बोधयेत् ।
प्रथमं तत्त्वरूपं च द्वितीयं तत्त्वदर्शनम् ॥ १० ॥

तृतीयं तत्त्वशुद्धिश्च चतुर्थं चात्मलक्षणम् ।
पञ्चमं चात्मसंदर्शं षष्ठं स्यादात्मशोधनम् ॥ ११ ॥

सप्तमं शिवरूपाख्यमष्टमं शिवदर्शनम् ।
नवमं शिवयोगं च दशमं शिवभोगकम् ॥ १२ ॥

त्रिविभेदैश्चतुष्केण पतिपाशपशुत्रयम् ।
गुरोर्वचनमात्रेण जीवन्मुक्तिप्रकाशकम् ॥
इत्यर्थदशकं ज्ञानमार्गेणास्य विधीयते ॥ १३ ॥

॥ इत्युत्तरकामिकाख्ये महातन्त्रे ज्ञानदीक्षाविधिः पञ्चविंशतितमः पटलः (१) ॥

आदिशैवे यथा गोत्रमनुशैवे तथा मतम् ।
किं तु दीक्षाविहीनं तु शिवसृष्टिविवर्जितम् ॥

जातिसिद्धं विवाहे तु परेहार्ये विचक्षणैः ।
उभयं परिपाल्यं वा कलौ नेष्टं तु वा द्विजाः ॥

प्रधानमुनयश्च दौ कथ्यन्ते द्विजसत्तमाः ।
कौशिका लोहिता रौद्रा विश्वामित्राः कतास्तथा ॥

धनञ्जयास्ततो वाजायनाश्च परिकीर्तिताः ।
अघमर्षणपूर्वाश्च कौशिका इन्द्रपूर्वगाः ॥ 10

पौरणाः काश्यपा रैफाश्शाण्डिल्याश्च ततो मताः ।
लोकाक्षयो भरद्वाजास्ततो रौक्षायणा मताः ॥

भार्गवाः स्युः शरद्वन्तः कौमण्डाश्च ततो मताः ।
ततो दीर्घतमा ज्ञेयास्ततः कारेणपाल्यः ॥

उशना वामदेवोऽत्रिर्वाधिक्याश्च गवेष्ठिराः ।
मुद्गलाश्च वसिष्ठाश्च कुण्डिना उपमन्यवः ॥

पराशरास्ततोऽगस्त्यास्साम्बवाहनसंज्ञकाः ।
सोमवाहनसंज्ञाश्च यज्ञवाहास्ततो मताः ॥

वत्सा विदा आर्ष्टिषेणा यस्का मित्रयुवास्तथा ।
वैन्याश्च शुनका विष्णुवृद्धा कण्वास्ततः परम् ॥ 15

हारीताः संकृतिश्चैव पश्चाद्रथीतरा मताः ।
मुद्गलाः कथिताः प्रोक्ता ऊनपञ्चाशदेव हि ॥

कौशिकानादितो वक्ष्ये कुशिकाः पार्णजङ्घकाः ।
पारक्या औदलिर्मणिरालिर्बृहदग्नयः ॥

तथाघष्टिस्तथापत्तिस्ततस्त्वापाश्ववा मताः ।
कामन्तका बाष्पका वाष्पुकिता लोमका धनाः ॥

साङ्ख्यायनाश्च गौराश्च लोकास्तौगतयो मताः ।
यमदूता श्वानमित्रा ततस्तारायणा मताः ॥

चौल्कायनसंज्ञाश्च जाबाल्युदुम्बरौ मतौ ।
दण्डा भुवनयो याज्ञवल्क्यः सौश्रतयस्तथा ॥ 20

स्यातामयो भ्राष्टपट्कदेहा निश्चैत्यसंज्ञकाः ।
शालावता मयूराश्च तथोदुत्सरिरित्यपि ॥

चित्रपक्षाश्च सौमत्याः श्वेतुन्दायनसंज्ञकाः ।
ततो मनुवतश्चैव मान्तवाः परिकीर्तिताः ॥

येऽत्यन्तपादपर्यन्तास्ततो बालव्य इत्यपि ।
स्यद्रालवा उन्मनय इति ख्यातास्तु कौशिकाः ॥

पञ्चार्षेयाः समुद्दिष्टा विश्वामित्रस्तथैव च ।
देवरातो दधीचीति प्रवरे ऋषयस्त्रयः ॥

लोहिताः स्युर्दण्डकायाश्चक्रवर्मायणास्स्मृताः ।
जह्यवः प्राज्ञको वाजिजय इत्यपि लोहिताः ॥ 25

कुशिकाश्चैव एते च प्रवरे स्युस्त्र्यार्षेयकाः ।
विश्वामित्रः हैपकयो लोहिताश्च त्रयस्त्वमी ॥

प्रवर्या ऋषयः प्रोक्तास्ततो रौक्षास्तु संमताः ।
माणा उदूहला एते रौक्षास्तु कुशिका मताः ॥

प्रवरे त्रियार्षेयाः स्युर्विश्वामित्रश्च रौक्षकः ।
माणिश्चैव त्रयस्त्वेते मुनयो मुनिपुङ्गवाः ॥

विश्वामित्रस्ततो देवश्रवसश्च परिश्रमः ।
श्रौमितो देवतरसः कामकायनिकस्ततः ॥

कामकायन इत्येते विश्वामित्राः प्रकीर्तिताः ।
त्रियार्षेयाः समुद्दिष्टा विश्वामित्रस्तदादिमः ॥ 30

देवश्रवस इत्यन्यो देवतरस इत्यमी ।
कठाः सैरन्ध्रिसंज्ञाश्च करभाः सहिताः परे ॥

वाजायनाश्च कौहल्यास्ततो जाणायना मताः ।
कौहल्याः शैशिराश्चैव ततश्चोदुम्बरायणः ॥

पिण्डिग्रीवास्ततो नारायणा नारयसंज्ञकाः ।
एते कठाः समाख्यातास्त्रियार्षेयाः समीरिताः ॥

विश्वामित्रकठश्चाष्टिलश्चेत्यन्ये धनञ्जयाः ।
आश्ववीताः कारिषयो मयूराः सैन्धवायनाः ॥

तल्व्याश्च महाक्षाश्च पुष्टा ये ते धनञ्जयाः ।
त्रियार्षेयाः समुद्दिष्टाः प्रवरे तु मुनीश्वराः ॥ 35

विश्वामित्रो मधुश्छन्दो धनञ्जय इति त्रयः ।
आजायनस्ततः प्रोक्त एकवत्सश्च संमतः ॥

त्रियार्षेयाः समुद्दिष्टा विश्वामित्रस्तथैव च ।
स्यान्मधुश्चाथ सोजश्च प्रवर्या ऋषयस्त्रयः ॥

अघमर्षणपूर्वाश्च कौशिकाश्च ततो मताः ।
एते च त्रियार्षेयाः स्युर्विश्वामित्रोऽघमर्षणः ॥

कौशिकश्च त्रयस्त्वेते प्रवर्या मुनिपुङ्गवाः ।
कौशिकाश्चेन्द्रपूर्वाश्च ततः प्रोक्ता मुनीश्वराः ॥

त्र्यार्षेया इति विज्ञेया विश्वामित्रेन्द्रकौशिकाः ।
ऋषयस्त्रय आख्याताः प्रवर्या यागकर्मणि ॥ 40

पौणाख्या द्व्यार्षेयाः स्युः कौशिकास्ते च संमताः ।
ऋषी द्वौ संमतौ विश्वामित्रः पौरण इत्यपि ॥

कौशिकाश्च दशाप्येवं न समन्वयगामिनः ।
काश्यपानथ वक्ष्येऽहं काश्यपस्तेषु चादिमः ॥

ततश्चाङ्गिरसो ज्ञेया माठरा ऐतिशायनाः ।
आभूल्याश्चैव वैशिप्रा धूमा धूम्रायणा मताः ॥

धौमधौम्रायणा औधप्रचुराम्रायणा मताः ।
रुद्राग्नयश्च प्रवरास्तथा पैम्बकयोऽपरे ॥

कायाताया अकापाया निकामौषनिकिस्तथा ।
कात्रायणा औज्वल्यो रोहितायनसंज्ञकाः ॥ 45

पिङ्गाक्षिर्मितकुम्भाश्च मारायणय एव च ।
वैकर्णेयास्ततः प्रोक्ता धूमलक्ष्मणयः सुराः ॥

कौषीतकेया वात्स्यः स्यादग्निशर्मायणा मताः ।
कामिजङ्घोदरा गौरीवायना दौक्षकायनाः ॥

वैतम्बा देवयाताश्च महाचक्रेयसंज्ञकाः ।
पैठीनसाश्च वाम्रेप्रास्ततो भाल्न्दनामकाः ॥

वृषगणाश्च पानथ्यो दाक्षगायण एव च ।
हरिता गाखमित्रेया पञ्चालाश्चैव स्वैरिकाः ॥

जारमण्डश्च वायुश्च स्वन्तिवर्षगणायनाः ।
वैशम्पायनसंज्ञाश्च ततः केशायताः स्मृताः ॥ 50

औक्षायनिस्ततो मार्जायनाः कांसायनाः परे ।
देवश्च होतसूप्यायस्थूणा भागुरयस्तथा ॥

पाथिकार्याः स्वरेभा ये गोभ्यातास्ततः परम् ।
हिरण्यपापा मुसला आविश्रेण्यस्ततः परम् ॥

अग्निदेविस्तथा सौम्यः [illegible]भिन्दव इत्यपि ।
उत्तरतो गण्यमाना मन्त्र[illegible]र्णयः परे ॥

नैध्रुवाः काश्यपा एते त्रियार्षेयाः प्रकीर्तिताः ।
काश्यपश्चापवत्सारो निध्रुवा ऋषयस्त्रयः ॥

त्रियार्षेयास्तथा रेफाः काश्यपा इति संस्मृताः ।
काश्यपश्चापवत्सारो रेफश्च मुनयस्त्रयः ॥ 55

शाण्डिल्या कौल्हाश्चैव पायकाः पाथिकास्ततः ।
रमेरव्ययसौमानौ वनसंस्तु करेयुतः ॥

काकुण्डेयश्च कारेवस्ततः हैषिकयो मताः ।
माहाकायो जाणवंशाः कौश्रेयः कार्दमायनः ॥

ततः कामशयः पश्चान्महौजकय एव च ।
ततो मौञ्जायनाः प्रोक्तास्ततो गांगायना मताः ॥

वात्सभाल्य इत्युक्तास्ततो गोभिलसंज्ञकाः ।
वेदायनास्ततो ज्ञेयास्ततो वाश्यायना मताः ॥

बहूदरय इत्युक्ता भागुरिर्बर्दतीमुखाः ।
हिरण्यबाहुस्तैदेहा गोमूत्राश्च ततो मताः ॥ 60

वाक्यशुण्ठास्तथा जानन्धरिर्वन्वन्तरिस्ततः ।
जालन्धरिरिति प्रोक्तास्त्रियार्षेयास्तु शण्डिलाः ॥

काश्यपश्चापवत्सारः शण्डिलश्च त्रयोऽथवा ।
काश्यपश्चापवत्सारोऽसित इत्यथवा त्रयः ॥



शाण्डिलोऽप्यसितोऽग्निस्तु देवलप्रवरस्तु वा ।
लोकाक्षयो मैत्रवादिर्वेहो दार्भायणस्ततः ॥

वैरन्ध्रिः पशनश्चैव पयणायनसंज्ञकाः ।
कल्यश्चापि कापुष्टिर्लौगाक्षय इति स्मृताः ॥

कांसपत्राश्च इत्युक्ता वाल्कायनिरित्यपि ।
कौनामिसौतयश्चोक्ताः स्युः परस्ताविरोदकी ॥ 65

तैतिकिष्टिर्भेरोनिष्टिः हैषिकिः सौक्षुकिस्ततः ।
गौधकालकिकालेयाः स्युर्लोकाक्षय इत्यपि ॥

यौवा याजपा एते लौगाक्षय इति स्मृताः ।
अहर्वेसिष्ठा नक्तं तु कश्यपास्त्रियार्षेयकाः ॥

काश्यपश्चापवत्सारो वसिष्ठो मुनयस्त्रयः ।
पूर्वोक्तैः काश्यपैः सिद्धैर्वेसिष्ठस्य च संगताः ॥

भरद्वाजश्च मागण्डस्ततः श्वाम्यायणा मताः ।
देवाश्वा उद्वहव्याश्च ततः प्राग्वशयो मताः ॥

ततो बाह्वल्या द्वयौगा अपरे वासिनायनाः ।
आजा औमाश्च तौदेहाः परिणद्धेपसंज्ञकाः ॥ 70

शैखेया भूरयो रूढाः शौद्धयः खारिग्रीवयः ।
वयोक्षिभेदा औपशया अग्निवेश्याः शठा अपि ॥

श्वेल्कास्तनकर्णाश्च वेश्याः स्युर्गौरिवायनाः ।
ऋक्षाश्च माणभियाश्च काम्बोदकस्तुसंज्ञकाः ॥

पैलाः सौज्वल्यः कारुणादयः शुगसंज्ञकाः ।
भारुण्डेया इषुमतास्तथा वौदोदमेघयः ॥

सौरभरास्तथा भद्रपथयः परिकीर्तिताः ।
ततः स्युर्देवमतयः कल्माषाश्च सदोपकृत् ॥

प्रवाहणेया विज्ञेयाः स्तम्भस्तम्भिस्ततो मताः ।
वाराहयो देववेला वल्भीगय इत्यपि ॥ 75

भद्राङ्गतसंज्ञाश्च शालाहल्य इत्यपि ।
नूलायना महावेलास्ततः शालाल्यो मताः ॥

शार्दूल्यस्ततो ज्ञेयाः काक्षला बाष्कलास्तथा ।
क्रोधायनास्तु कौटिल्याः सैंहकेन्द्रास्ततः परम् ॥

महास्तम्भास्तथा राजस्तम्भाश्च परिकीर्तिताः ।
सोमाग्निवायुसूर्येन्द्रयमविष्ण्वापपूर्वकाः ॥

स्तम्भास्ततोऽन्ये स्तम्भान्तास्त्विष्टा अरुणसिन्धवः ।
ततः कौमुदगन्धिश्च शक्तिः स्यात्कौतुकायनाः ॥

आत्रेयाणाश्च मामण्डा धूमगन्धास्तथैव च ।
धूम्राः कौक्षेयका नेतुतयो दामय इत्यपि ॥ 80

मत्स्यक्रोधाश्च श्यामेयास्ततः क्षोक्षेयनामकाः ।
कावल्याः कारुपथयः कारिषायणसंज्ञकाः ॥

भरद्वाजवनौ द्वौ तु ऋषयः पञ्च संमताः ।
भारद्वाजा इमे सर्वे त्रियार्षेयाः प्रकीर्तिताः ॥

अङ्गिराश्च बार्हस्पत्या भारद्वाजा इति स्मृताः ।
एको रौक्षायणः पञ्चार्षेयस्तु परिकीर्तितः ॥

भरद्वाजः स विज्ञेयस्त्वङ्गिराश्च बृहस्पतिः ।
स्याद् मातवचसो वन्दनोऽथ गर्गाःसमीरिताः ॥

सांभरायणसंज्ञाश्च तथा यौगन्धरायणः ।
सत्वीना बाहुल्कयो भ्रष्टयो भ्रष्टुविन्दवः ॥ 85

ततः कोष्टकयः सौयामुनिः काणायना मुनिः ।
आजिताक्षय इत्युक्ता गोत्रापचय इत्यपि ॥

सत्यापचय आख्याता जाणपक्वलसंज्ञकाः ।
पलाशशाखावन्तस्ते मर्कटायनसंज्ञकाः ॥

ततः संप्रहतुल्याश्च वैधूहाः कारिरोतयः ।
त्रिस्रोतसाश्च काखल्या राजयः पैल्यस्तथा ॥

पञ्चत्रिमुनिका गर्गा भारद्वाजाः समीरिताः ।
अङ्गिराश्च भरद्वाजो बार्हस्पत्याश्च शैन्यकाः ॥

गर्गश्च प्रवर्याः पञ्च अङ्गिरस्शैन्यगर्गकाः ।
ऋषयस्त्रय आख्याताः प्रवर्याश्च त्रिपक्षके ॥ 90

भारद्वाजास्त्रयश्चापि न समन्वयगामिनः ।
गौतमानथ वक्ष्येऽहमायास्यास्तौडिनिस्ततः ॥

आर्णाचयाश्च मूढाश्च बाध्याः काचाक्षयो मताः ।
सात्यकायश्च तैदेहाः कौमाराः सात्यमुग्रिकाः ॥

व्याप्यापौ नैकरिष्टिश्च छैषकिंदेवकिस्ततः ।
कठोरिः कारुणिः कीलाव्यः पार्थिवसंज्ञकाः ॥

काशिवाजा इमे ज्ञेया आयास्या गौतमा मताः ।
एतेषां त्रियार्षेयास्तु प्रवरे मुनिपुङ्गवाः ॥

प्रवर्या ऋषयः ख्याता आङ्गिरायास्यगौतमाः ।
शरद्वन्ताश्च रौहिण्यास्ततस्त्वभिजिता मताः ॥ 95

ततः क्षीरकरम्भाश्च ततः सौमुचयो मताः ।
सौर्यामुनिस्तथा औपबिन्दवो रायणो मताः ॥

राहूगणाश्च माषण्याः शरद्वन्ता इमे मताः ।
एते च गौतमा ज्ञेयास्त्रियार्षेया इति स्मृताः ॥

अङ्गिरा गौतमश्चैव शरद्वन्तश्च ते त्रयः ।
कौमाण्डा मासुराक्षश्च ततो मामान्थरेषणः ॥

पयन्त्यातायनाश्चाथ काष्टेयः पराश्वस्ततः ।
ऊर्जायना इमे ज्ञेया गौतमा द्विजसत्तमाः ॥

पञ्चार्षेयास्त्वाङ्गिरसौचथ्यौ काक्षीवतस्ततः ।
कौमाण्डो गौतमः पञ्च ततो दीर्घतमा मताः ॥ 100

पञ्चार्षेयास्तु विज्ञेयास्त्वेक एव च संमताः ।
आङ्गिरसौचथ्यकाक्षीवता गौतम इत्यपि ॥

ततो दीर्घतमश्चेति पर्यायः पञ्च संमताः ।
कारेणुपालयश्चैव वास्तव्याश्चोदिवास्ततः ॥

बृहदुक्था अपि पौञ्जिष्ठा राजगन्धय इत्यपि ।
औदुम्बायनसंज्ञाश्च एते कोरेणुपालयः ॥

गौतमास्ते त्रियार्षेयास्त्वङ्गिरा गौतमस्ततः ।
कारेणुपालिरित्येते त्रयस्त्वौशनसस्ततः ॥

सह दिष्ठाः प्रशस्ताख्याः सुरूपाक्षा महोदराः ।
विकंहताः सुबुद्धयाश्च निहताश्च गुहा इति ॥ 105

प्रोक्ता उशनसा एते त्रियार्षेयास्तु गौतमाः ।
अङ्गिरा गौतमस्त्वौशनसश्च ऋषयः स्मृताः ॥

सह दिष्ठाः प्रशस्ताख्याः सुरूपाक्षा महौजसः ।
तथैव वामदेवश्च त्रियार्षेयास्तु गौतमाः ॥

अङ्गिरा गौतमो वामदेवश्चेति त्रयस्त्विमे ।
अत्रीन्वक्ष्ये समासेन तेष्वादावत्रयो मताः ॥

भोजश्चादितिसंज्ञश्च चान्द्रोशीः पार्थ इत्यपि ।
कामाद्गुल्यश्च शैवाश्च छगालाश्छागलास्तथा ॥

ततश्च तृणबिन्दुश्च तथा भागन्तयो मताः ।
ततो मालरुचः प्रोक्तस्ततो व्याक[illegible]रो मताः ॥ 110

शाम्बव्यसनसंज्ञाश्च कार्मर्यायनयो म[illegible]ः ।
ततो दाक्षिश्च तैदेहो गाणिस्तय इत्यपि ॥

औदालकिर्द्रोणभवा गौरीग्रीवायतास्तथा ।
ततो गविष्ठिरः प्रोक्तः शिशुपालस्ततो मतः ॥

गौरात्रेयस्ततः कृष्णात्रेयश्चारुणपूर्वकाः ।
श्वेतनीलमहाश्यामपूर्वात्रेयाश्चतुर्विधाः ॥

हालेयाश्चैव वालेया हेलेयाश्च ततो मताः ।
वामरथिनो वैदेहा वाजोत्रेयास्ततो मताः ॥

कैदेयास्तु कैपमानास्ततः कालतयः स्मृताः ।
अर्नालायनसंज्ञाश्च अङ्गिराश्च ततो मताः ॥ 115

गौराङ्गिश्चैव सौरङ्गिर्मानङ्गिः पुष्पयो मताः ।
शैलेलश्च पुनः साकेतायनाः परिकीर्तिताः ॥

भारद्वाजायनाश्चेन्द्रातिथिरित्यत्रयो मताः ।
त्रियार्षेयाः समाख्याताः पालिकाश्चात्रिरेव च ॥

अर्चनानस इत्येते ऋषयस्त्रय ईरिताः ।
तथा वाग्भूतका ज्ञेयास्त्र्यार्षेयास्तत्र वा मताः ॥



अत्रिरर्चनानसो वाग्भूतका ऋषयस्त्रयः ।
ततो गविष्ठिरा ज्ञेयास्त्रियार्षेयास्तु चात्रयः ॥

अत्रिरर्चनानसेति गविष्ठिर इति त्रयः ।
मुद्गलो व्यालसन्धिश्च चूर्णवाबोधवाजकिः ॥ 120

बैतभावय इत्येते ऋषयश्च ततो मताः ।
ततः शाल्मितो गौरीमतो ब्राह्मीमतस्ततः ॥

ततो गौरकयो वायुपूरकाः सायनास्ततः ।
इत्येते त्रियार्षेयाः स्युर्मुद्गलाः संप्रकीर्तिताः ॥

अर्चनानसः पूर्वादिस्तिथिश्चेति त्रयो मताः ।
चतुर्विधा अप्यात्रेया न समन्वयगामिनः ॥

वसिष्ठानथ वक्ष्येऽहं तत्रादौ वैकलिर्मतः ।
बाठरकिस्ततः प्रोक्तो गौरिश्रवस इत्यपि ॥

आश्वलायनसंज्ञाश्च गविष्ठास्त्वाश्वलायनाः ।
शौचिवृक्षास्ततः प्रोक्तास्ततः स्युर्व्याघ्रपादयः ॥ 125

औडुलोमिर्जतूकर्णो बाष्व्यो बाभ्रकायनिः ।
कोलायनाश्च कोभोजिस्ततः पौलायना मताः ॥

सुन्दहरित इत्युक्तः काण्डेयविधिरेव च ।
ससवेला इमे ख्याता वसिष्ठाश्च द्विजोत्तमाः ॥

एकार्षेयास्तु एते स्युर्वसिष्ठस्त्वेक एव सः ।
प्रवर्यश्च समादिष्टः कुण्डिनाश्च ततो मताः ॥

ततो गुग्गुलयः प्रोक्तास्ततो लोहायना मताः ।
आविश्वाश्चात्यते : गिराजीवखदिराः स्मृताः ॥

पेठकाश्च नवग्रामास्तथाऽरण्यवाहवाः ।
सोमशुल्विनः कोफास्ततः कापटश्च मताः ॥ 130

हिरण्याक्षायणाश्चैव पुलाभक्षास्तथैव च ।
माध्यन्दिनिश्च शान्तिश्च सोपदार्थश्च कौण्डिनः ॥

त्रियार्षेयाः समुद्दिष्टा वसिष्ठाश्चेति शंसिताः ।
वसिष्ठमित्रावरुणौ कुण्डिनश्च त्रयस्त्वमी ॥

उपमन्युरौपगवा मण्डलेखय एव च ।
जालागतो जयो लोकास्ततः प्रोक्ताः कपिञ्जलाः ॥

त्रैवर्णवैवशागारिसारक्षा रक्षसंज्ञकाः ।
शैलाल्यो महाकर्णायना वालशिखा मताः ॥

औदाहमानयो वालायना भागास्ततो मताः ।
इत्युन्मायनसंज्ञाश्च ततः कुण्डोदरायणाः ॥ 135

लक्ष्मणेयास्ततः काचान्वयल्यकुल्यो मताः ।
अनूरुरक्षसंज्ञाश्च कापिला वय एव च ॥

कपिकेशा इति ज्ञेया एते स्युरुपमन्यवः ।
वसिष्ठास्त्रियार्षेयास्ते वसिष्ठश्चाभरद्वसुः ॥

इन्द्रप्रमद इत्येवं त्रयः पश्चात् पराशराः ।
ततो वा त्रितयः प्रोक्तो भरद्वसुरिति स्मृतः ॥

भैमतायनो वाजिश्च गोपालिः पञ्चमस्ततः ।
कृष्णाः पराशराः प्रोक्तास्ततः प्रारोहयो मताः ॥

कौमुदिः प्लाक्षयश्चैव ततो वैकल्यो मताः ।
हार्यश्विः पञ्चमस्तेषामिति गौराः पराशराः ॥ 140

खल्वायनथ इत्युक्ता गोपयः कार्कयस्ततः ।
श्वैतयो वारुणिस्तेषां पञ्चमः परिकीर्तितः ॥

पराशराः स्युररुणास्ततो भालुक्यसंज्ञकाः ।
बादरिश्च तथा गार्गो वना वै कौकसादयः ॥

इत्येते कथिताः पञ्च प्रनीलाश्च पराशराः ।
ततः सौश्रवसानाश्च आलम्भायनसंज्ञकाः ॥

स्वर्याः काकुस्तताश्चैव लोमाद्याः पूर्णकायनाः ।
चोल्कायनसंज्ञाश्च वार्णवल्कास्तथैव च ॥

पुनर्देवनगौरव्याः श्रविष्ठायनसंज्ञकाः ।
ततो वाशवयः पञ्चवाजयस्तदनन्तरम् ॥ 145

आषक्षायत इत्युक्ताः पूतिमाषास्तथैव च ।
कैमीयतय इत्येते पञ्च नीलाः पराशराः ॥

कृष्णाजिना: काविशुमास्तत: श्यामायना मता: ।
तत: पौष्करसादिश्च श्वेतयूपय इत्यपि ॥

श्वेता: पराशरा: पञ्च वात्स्यायनय एव च ।
श्यामेया: पार्णयश्चैव सहचौलिश्च सौबुध: ॥

श्यामा: पराशरा एते षट्प्रोक्तास्त्रियार्षेयका: ।
वसिष्ठ: शक्तिसंज्ञश्च पराशर इति त्रय: ॥

सर्वे पराशरास्त्वेते परस्परम्योगिन: ।
ततोऽगस्त्यानहं वक्ष्येऽगस्तयस्तेषु पुंगवा: ॥ 150

शालबाह्यश्च कुल्माषो दण्डिश्चैव कलायना: ।
तयोपरहनिश्चैव धावणिर्लबणिस्तत: ॥

लभ्योऽर्बुदो वैरणयो वृथोदरय एव च ।
बोदरि: शैवरथयस्तत: श्यामातयो मता: ॥

ततो मौञ्जिकिय: पाण्डुरुहिर्मांसलयस्तथा ।
गौरिदीपाश्च रोहिण्या इत्येते त्रियार्षेयका: ॥

दृढच्युतिरगस्त्यश्च इध्मवाहत्रयस्त्विमे ।
साम्भवाहनसंज्ञाश्च त्रियार्षेयास्त्वगस्तय: ॥

दृढच्युतिरगस्त्यश्च साम्भवाहत्रयस्त्विमे ।
सोमवाहनसंज्ञाश्च त्रियार्षेयास्त्वगस्तय: ॥ 155

दृढच्युतिरगस्त्यश्च सोमवाहत्रयस्त्विमे ।
यज्ञवाहनसंज्ञाश्च त्रियार्षेयास्त्वगस्तय: ॥

दृढच्युतिरगस्त्यश्च यज्ञवाहत्रयस्त्विमे ।
अगस्तयस्तु चत्वारो न समन्वयगामिन: ॥

जमदग्नीनथो वक्ष्ये तत्रादौ वत्स ईरित: ।
मार्कण्डेयाश्च मण्डूका माण्डव्या: कांसयस्तत: ॥

आलेखनास्ततो दार्भायणाश्च परिकीर्तिता: ।
शार्कराक्षास्ततो देवतायना: शौनकायना: ॥

माण्डूकेया: पार्षिका: स्यु: साङ्कृभायना: स्मृता: ।
पैङ्गलायनसंज्ञाश्च पैला दाभ्रेयस्तत: ॥ 160

ततो बाह्यकयो वैश्वानरयश्च विलोहिता: ।
बाह्या गोष्ठायना: शैवकयो पाणिनयस्तत: ॥

बाद्भूतका: काशकृत्स्ना ऋतभागेतिशायनौ ।
वैश्वानरयो वाल्मीकि: स्थौलपिण्डय एव च ॥

दधीचयश्च वागाणिस्तत: शैखावता मता: ।
वाकायना: सौकृतयस्ततो बालायना मता: ॥

सौबिष्टयो माण्डविश्च ततो हस्ताग्नयो मता: ।
तत: शौद्रकयो ज्ञेया वैकर्णा द्रोणजिह्वय: ॥

जानायना औरशाया: काम्बरोदरयस्तत: ।
कठोरकद्विरूपाक्षा दैवमत्याश्च भैरवि: ॥ 165

शुकाश्वार्कायणो चापि उर्वैर्मन्यव एव च ।
मार्कायण: शार्ङ्गरवो वायवापनयस्तत: ॥

काह्वायना: कारवयस्ततश्चन्द्रमसो मता: ।
नोपेयाश्चैव गाङ्गेया याज्ञिका: पारिमाण्डलि: ॥

वाह्नमित्रायणा आपिशलयो रोहितायना: ।
ततो वैदपुरेयाश्च बष्टाक्षास्त्वपरे मता: ॥

ततो राजितवाहाश्च तत: शारद्वतायना: ।
नालायनाश्च वासाश्च वाना वाल्या इति स्मृता: ॥

वत्सा एते स्मृता: पञ्च आर्षेया जामदग्नय: ।
भार्गवश्च्यावनश्चौर्वाप्नुवानौ जमदग्नय: ॥ 170

ऋषय: पञ्च ते ख्याता: प्रवर्या यागकर्मणि ।
विदा: शैलास्तथा शैलास्त्ववटास्तु पुलस्तय: ॥

प्राचीनयोगा विज्ञेया वैनभूतास्ततो मता: ।
ततस्त्वभयजाता: स्यु: काण्डरथय एव च ॥

आर्कायणास्तथा माष्टायणा मार्कायणास्तत: ।
कौश्वायनाश्च जामालास्तत: प्रोक्ता भुजायना: ॥

एते मता विदा: पञ्च आर्षेया जामदग्नय: ।
भार्गवश्च्यवनौर्वाप्नुवाना विदाश्च पञ्च ते ॥

आर्ष्टिषेणा नैरथ्यो ग्राम्यायणय एव च ।
काणायनास्ततश्चान्द्रायणा: पौठिकलायना: ॥ 175

गौराम्भिराम्भी सिद्धाश्च तथा च सुबनायना: ।
आर्ष्टिषेणा मता: पञ्च आर्षेया जामदग्नय: ॥

भार्गवश्च्यावनश्चाप्नुवानोऽथानूपसंज्ञका: ।
आर्ष्टिषेणेन पञ्चैते ऋषय: प्रवरा मता: ॥

वत्सानामार्ष्टिषेणानां विदानां च परस्परम् ।
अविवाह इति प्रोक्त उच्यन्ते भृगवस्तत: ॥

यस्काश्च मौनो मूकश्च वाधूलो भास्करस्तत: ।
वर्षपुष्पश्च वाल्मेयास्ततो राजिततायना: ॥

दुर्दिनो माध्यमेयाश्च दैवन्तायना अपरे ।
कौशाम्बेया वाकल्यो वासय: परिकीर्तिता: ॥ 180

सात्यकिश्चित्रसेनश्च कौटिल्यास्तत औक्ष्यका: ।
भागन्तयस्ततो वार्कश्वकयो भृगुरित्यय: ॥

तत: स्युर्भोगचितय एते यस्का इति स्मृता: ।
त्रियार्षेयाश्च विज्ञेया भार्गवा: परिकीर्तिता: ॥

भृगुश्चैव तथा यस्को दिवोदास इति त्रय: ।
मित्रयुवस्ततो रग्यायणा दाक्षायणास्तत: ॥

सापिण्डिनो महावाल्या माल्या यावाल्यसंज्ञका: ।
पुराभिनाया ऐजेयास्ततो राक्षायणा मता: ॥

कैतवायनयो माल्लायना मादायय: स्मृता: ।
एते मित्रयुवा: प्रोक्तास्त्रियार्षेयास्तु भार्गवा: ॥ 185

भृगुश्च मित्रयुवश्च दिवोदास इति त्रय: ।
वैन्या: पार्था इति प्रोक्ता बाष्कला वैन्यसंज्ञका: ॥

त्रियार्षेया इति ख्याता भार्गवा द्विजसत्तमा: ।
भृगुश्च वैन्यपार्थौ द्वौ प्रवर्या ऋषयस्त्रय: ॥

शुनका: सौगन्धयो यज्ञपयो गार्त्समदा इति ।
गाङ्गायना मत्स्यगन्धाश्चैक्षा: स्यु: खार्दमायना: ॥

श्रोत्रियास्तैत्तरीयाश्च पिप्पलाश्च ततो मता: ।
एकार्षेयाश्च इत्येते शुनका: परिकीर्तिता: ॥

एकोऽपि शुनक: प्रोक्तस्त्वथ भार्गव एव स: ।
यस्कानां मित्रयुवानां वैन्यानां च परस्परम् ॥ 190

शुनकानां न संबन्ध: कर्तव्य इति गम्यते ।
अथाङ्गिरस उच्यन्ते विष्णुवृद्धस्तु चादिम: ॥

भद्रणा मद्रणाश्चैव शठमर्षणसंज्ञका: ।
शाबरायणसंज्ञाश्च सात्यकि: सात्यकायना: ॥

बादरायणसंज्ञाश्च वात्सप्रायणसंज्ञका: ।
आरुण्याश्चैव वैहोदा नैतुन्धास्तुल्यसंज्ञका: ॥

देवस्थानय इत्येते विष्णुवृद्धा: प्रकीर्तिता: ।
एते चाङ्गिरस: प्रोक्तास्त्रियार्षेया इति स्मृता: ॥

अङ्गिरा विष्णुवृद्धश्च विष्णुदासस्त्रय: सदा ।
वैरुप्यश्च रुरुप्यश्च त्रासदस्युश्च ते त्रय: ॥ 195

कण्वा: शैला वल्कलाश्च हलिनो मोजया: परे ।
मौञ्जिश्च माञ्जयश्चैव मर्कटायनसंज्ञका: ॥

मौञ्जिगन्धस्तत: प्रोक्ता बाजयो वाजयास्तत: ।
मार्गश्रवस इत्येते कण्वा: स्युस्त्रियार्षेयका: ॥

अङ्गिराश्चाजमीढश्च कण्वश्च ऋषयस्त्रय: ।
हारिताश्च तत: कौत्सा: साङ्ख्या दार्भास्तथैव च ॥

शैवङ्गो शर्मनायुश्च लम्बोदरमहोदरौ ।
नैमिश्रियो हैमगवस्ततो मिश्रोदरो मत: ॥

कौतपा: कौल्य: कारीषय: पौल्य एव च ।
पौण्डलश्चैव माधूपा मान्धाता माण्डकारय: ॥ 200

इत्येते हरिता: प्रोक्तास्त्रियार्षेया इति स्मृता: ।
अङ्गिराश्चाम्बरीषश्च यौवनाश्वश्च ते त्रय: ॥

तत: संकृतयस्तपिङ: शम्भुश्च मल्कास्तत: ।
पौन्यश्च शैभवस्तारकाद्या: परिभवास्तथा ॥

हारिद्रा वैतलेयाश्च ततः श्रोनायना मताः ।
चारायणाः पूतिमाषास्तत आमायणा मताः ॥

चान्द्रायणाश्चार्षेया अवत्नापय इत्यमी ।
प्रोक्ताः संकृतयस्त्वेते त्रियार्षेयाः प्रकीर्तिताः ॥

अङ्गिराः संकृतिश्चाम्बरीषश्च ऋषयस्त्रयः ।
रथीतरास्ततः काह्वायनाः स्युर्नैतिरक्षयः ॥ 205

शैलाल्यश्च ऊैमिश्च ततो लीभायना मताः ।
मैक्षवाहश्च सौवाहवाह्वाः स्युर्हस्तिवासयः ॥

ततो हेमशता ह्येते त्रियार्षेया रथीतराः ।
अङ्गिराश्चाम्बरीषश्च रथीतर इति त्रयः ॥

अङ्गिराश्च विरूपश्च पृषदश्वेति वा भवेत् ।
मुद्गलाश्च हिरण्याक्षा मिताक्षा ऋषयस्ततः ॥

ऋग्या ऋग्यायना दीर्घजङ्घा जङ्घाः समीरिताः ।
ततस्तोरणबिन्दुश्च मुद्गलाः कीर्तिता अमी ॥

त्रियार्षेयाः समुद्दिष्टाः कवचस्तैकिलादयः ।
हर्म्यांश्वश्च समुद्दिष्टाः ऋषयो वैतलास्ततः ॥ 210

ऐतिशायनसंज्ञाश्च तरस्विश्च पतञ्जलिः ।
भिण्डिर्वै भोजसिश्चापि किश्च शार्ङ्गरवस्ततः ॥

ततः करशिखण्डश्च ततो मौर्षीतकिर्मतः ।
तथा सांशय इत्युक्ताः पौष्ययश्च ततो मताः ॥

त्रियार्षेया इमे ज्ञेयाः ऋषयः परिकीर्तिताः ।
अङ्गिराश्च कपित्याश्च अम्बरीष इति त्रयम् ॥

विष्णुवृद्धादयः सर्वेऽप्योगिनः स्युः परस्परम् ।
राज्ञां विशां च वक्ष्येऽहं मनुश्चैलः पुरूरवाः ॥

क्षत्रियाणां ततः प्रोक्तास्ततो लोहन्दनौकिलः ।
वात्सप्रमोदको वैश्ये नारासाख्यादयोऽपि च ॥ 215

आत्रेयश्चैव वाध्रेयो वाधूलश्चापि संकृतिः ।
वसिष्ठः शुनकश्चैव कण्वो यस्क इमेऽष्ट च ॥

नारासाख्याः समाख्याता मनुर्वा प्रवरस्त्विह ।
अथ क्षत्रियवैश्यानामाचार्यप्रवरोऽपि वा ॥

समानगोत्रप्रवराञ्ज्ञात्वा संबन्धमाचरेत् ।
समानगोत्रप्रवरां कन्यां न वृणुयात्सदा ॥

ऊढा चेद्भगिनी यद्यस्मात्तत्परिरक्षयेत् ।
तस्याश्च रक्षणं कार्यमाहाराच्छादनादिभिः ॥

विवाहदोषशुद्ध्यर्थं व्रतं चान्द्रायणं चरेत् ।
तया सह प्रमादेन संयोगाद्यं कृतं यदि ॥ 220

प्रायश्चित्ती सदा स स्यात्तद्विधानमिहोच्यते ।
सकृदागमने कुर्यात् तेन चान्द्रायणेन च ॥

सहस्राघोरहोमं तु द्विवारे द्विसहस्रकम् ।
एवं योगविवृद्धया तु होमवृद्धिरिहोच्यते ॥

मासोर्ध्वमाचरेत् कृच्छ्रं होमं चान्द्रायणान्वितम् ।
षण्मासादब्दपर्यन्तं पूर्वोक्त[illegible]वमाचरेत् ॥

तदूर्ध्वमतिकृच्छ्रान्तैर्यावत्[illegible]त्सरत्रयम् ।
निर्वाणाख्या तदूर्ध्वं स्याद् दीक्षा संसारमोचनी ॥

तदुद्भूताश्च ये पुत्रास्ते सर्वे न द्विजा मताः ।
तत्पुत्रपौत्रसंयोगे प्रायश्चित्तं तदेव हि ॥ 225

उपवासस्तथा स्नानं पञ्चगव्याशनं जपः ।
होमश्चैव मलं हन्ति सर्वसङ्करजं नृणाम् ॥

सायं चाद्यन्तयोरह्नोर्मध्यमेऽह्नि च रात्रिके ।
चतुर्भुक्तिविहीनो य उपवास इति स्मृतः ॥

त्रिकालहीनो वा स स्याद्रात्र्यहोरात्रिषु क्रमात् ।
द्विकालहीनो वा क्षीणसत्त्वानां दुर्बलात्मनाम् ॥

इति उत्तरकामिकाख्ये महातन्त्रे गोत्रनिर्णयविधिः पञ्चविंशतितमः पटलः ॥

—(o)—



॥ शताभिषेकविधिः ॥

शताभिषेकं वक्ष्येऽहं संक्षेपाद् द्विजसत्तमाः ।
अकालमृत्युमथनमायुरारोग्यवर्धनम् ॥

वृद्धिदं धनधान्यानां पुत्रपौत्रविवर्धनम् ।
दीक्षितानां पुरा चन्द्रसहस्रस्यावलोकिनाम् ॥

उत्तरायणकाले तु शुक्लपक्षे विशेषतः ।
सुलग्ने च सुवारे च सुतिथौ शोभने दिने ॥

स्थापयेद्देशिकः शान्तः सर्वलक्षणसंयुतः ।
मङ्गलाङ्कुरसंयुक्ते मण्डपे समलंकृते ॥

कूटे वाथ प्रपायां वा शुद्धदेशे मनोरमे ।
पञ्चादिपञ्चपञ्चाशत्करसोमासमन्विते ॥ 5

मुखायामयुते चापि चतुर्द्वारसमन्विते ।
एकादिपञ्चपञ्चान्तभक्तिभिः परिमण्डिते ॥

ब्राह्मणं क्षत्रियं वाथ वैश्यं शूद्रमथापि वा ।
अनुलोमसमुद्भूतं विशेषाद्भूपतिं द्विजाः ॥

राजस्त्रियं वा सामन्तममात्यं वा पुरोहितम् ।
तत्तज्जातिसमुद्भूतस्त्रियं वा शिवदीक्षकाः ॥

पञ्चाङ्गभूषणोपेतस्त्वभिषेकं समाचरेत् ।
अभिषेकदिनात्पूर्वरात्रौ कौतुकबन्धनम् ॥

कारयेद्यजमानस्य दक्षहस्ते गुरूत्तमः ।
तत्पत्न्याश्च प्रधानाया वामहस्ते तु बन्धयेत् ॥ 10

प्रधानपत्न्यो बहुश्चेत् सर्वासामेव कारयेत् ।
तद्रात्रौ तु पयः पीत्वा शय्यायां कम्बलादिभिः ॥

कल्पितायामथैकेन स्वपेद्दक्षिणमस्तकः ।
मण्डपं कारयित्वाथ पूर्वोक्तविधिना युतम् ॥

विलुप्य शिल्पिनं पश्चात् पुण्याहं वाचयेद्गुरुः ।
पूर्वाग्रमुत्तराग्रं च मनुसूत्रं प्रकल्पयेत् ॥

शतं षष्ट्युत्तरं नन्दपदयुक्तं भवेत् स्फुटम् ।
तेषां मध्ये गृहीत्वा तु पदानां पञ्चविंशतिम् ॥

परितस्संलजेदेकपदं द्वाराष्टकान्वितम् ।
चतुर्दिक्षु चतुर्द्वारं पदद्वयविलोपनात् ॥ 15

अष्टोत्तरशतानि स्युः पदान्यत्र विचक्षणाः ।
तन्मध्ये स्थण्डिलं कार्यं शालिभिर्द्रोणसंमितैः ॥

वर्धन्याश्च तदर्धं स्यात् कलशेष्वाढकं भवेत् ।
अधमं त्वेकमाढकं प्रोक्तं द्विगुणं मध्यमं भवेत् ॥

त्रिगुणं चोत्तमं विद्याच्छ्रेष्ठक्रम उदाहृतः ।
आढकं वा तदर्धं वा तदर्धं वा दरिद्रके ॥

अयं क्षुद्रक्रमः प्रोक्तो व्रीह्यभावे द्विजोत्तमाः ।
शाल्यभावे च व्रीहिः स्याद् तेषामर्धं तण्डुलं क्षिपेत् ॥

तदर्धं तु तिलं प्रोक्तं चतुर्थांशं तु वा क्षिपेत् ।
अष्टांशं क्षीणवित्तस्तु क्षिपेत् स्थण्डिलशुद्धये ॥ 20

मध्यमे शिवकुम्भं तु द्वात्रिंशत्प्रस्थपूरितम् ।
वर्धनी च तदर्धेन पूरिता शिवपूरिताः ॥

बाह्यस्थकलशा ज्ञेयास्त्वाढकेनाथ पूरिताः ।
त्रिसूत्र्या वेष्टनं कुम्भे द्विसूत्र्या करके भवेत् ॥

अन्येषामपि सर्वेषामेकसूत्रेण वेष्टनम् ।
पृथग्वस्त्रसमोपेतं पृथक्कूर्चसमायुतम् ॥

चन्दनागरुकर्पूरकुष्ठोशीरजकल्कयुक् ।
नादेयाम्भः प्रशस्तं स्यात्कलशकुम्भादिपूरणे ॥

नानागन्धसमायुक्तं नानाबीजसमन्वितम् ।
नानाधातुसमायुक्तं नानालोहसमन्वितम् ॥ 25

नानादिव्यौषधोपेतं नानाफलसमन्वितम् ।
नानापुष्पसमायुक्तं नानागन्धसमायुतम् ॥

संस्थाप्य कलशं सर्वं पूजयेत्तत्रपुष्पकैः ।
अष्टोत्तरशतानां तु रुद्राणां नाम कीर्तयेत् ॥

पृथग्द्रव्यनिवेद्येन मानयेद्देशिकोत्तमः ।
वस्त्रयुग्मेन संवेष्ट्य शिवकुम्भं च वर्धनीम् ॥

नवरत्नादिकं रत्नं शिवे शक्तौ च विन्यसेत् ।
प्रथमावरणे विद्वानष्टलोहादि विन्यसेत् ॥

हिरण्यं रजतं ताम्रमारकूटं च सीसकम् ।
आयसं त्रपु कांस्यं चाप्यष्ट विद्येश्वरान्न्यसेत् ॥ 30

द्वितीयावरणे चैवं धातूनेतांश्च विन्यसेत् ।
अगरुं गन्धकं तालं माक्षिकं च मनश्शिलाम् ॥

रसमभ्रद्वयं चैव गैरिकाञ्जनमेव च ।
जातिलिङ्गं च सिन्दूरं तुत्थं च विमलद्वयम् ॥

कान्तं च षोडशैतानि द्वितीयावरणे न्यसेत् ।
ऐन्द्रद्वादशकोष्ठेषु विन्यसेद्द्वारपार्श्वयोः ॥

पालाशाः खादिराश्चाम्रप्लक्षन्यग्रोधसंभवाः ।
बैल्वाश्चैव शमीजाताः शिरीषाश्वत्थसम्भवाः ॥

औदुम्बरी च नारङ्गमातुलुङ्गसमुद्भवाः ।
वृक्षाणां च त्वचस्त्वेतास्त्वन्तर्वामादितो मताः ॥ 35

आग्नेय्यां नवकेसम्यग् विन्यसेन्मृत्तिकाः पराः ।
नदीतटे तथा गोष्ठे वल्मीके गजदन्तके ॥

सागरे च ह्रदे क्षेत्रे पर्वतेऽश्वत्थमूलके ।
उत्पलस्य द्वयं चैव पङ्कजस्य द्वयं तथा ॥

बकुलं करवीरं च पाटलं कुरवं तथा ।
मालतीं मुनिपुष्पं च नन्दिकावर्तमेव च ॥

चम्पकं द्वादशैतानि विन्यसेद्दक्षिणे गुरुः ।
चन्दनोशीरकुष्ठं च कुङ्कुमं च नरं तथा ॥

तक्कोलमगरुं चैव पत्रं चैव लवङ्गकम् ।
नैर्ऋते नवके ज्ञेयं वारुण्यामथ कथ्यते ॥ 40

वैणवं माषनीवारगोधूमं यवमेव च ।
अपामार्गं तिलं मुद्ग प्रियङ्गुं सर्षपं तथा ॥

श्यामाकमाढकं चैव विन्यसेदानुपूर्वशः ।
लक्ष्मीश्च शंखपुष्पी च विष्णुक्रान्तिश्च हंसिनी ॥

तुलसी सहदेवी च इन्द्रवल्ली च पद्मिनी ।
सूर्यावर्तं च कथ्यन्त वायव्यां नवके मताः ॥

पञ्चगव्यं तथा क्षीरं दधि गोमूत्रमेव च ।
गोमयं नालिकेरं च मातुलुङ्गफलं तथा ॥

नारङ्गं बिल्वकं चैव पनसं चाम्रमेव च ।
दाडिमीसंभवं चैव न्यस्तव्याः क्रमशस्ततः ॥ 45

गन्धोदकमथैशान्यां कलशेषु नवस्वपि ।
एवं द्रव्याणि विन्यस्य शिवादीनर्चयेत् क्रमात् ॥

आचार्यो मूर्तिपैस्सार्धं स्नानं कृत्वा विभूषितः ।
वसानो नूतनं वाससोर्णावस्त्रोत्तरीयकः ॥

पञ्चाङ्गभूषणोपेतस्साङ्गुलीयक एव च ।
मण्टपे द्वारपूजादि सर्वं कर्म समाचरेत् ॥

पूजयेन्मध्यमे कुम्भे शिव सर्वाङ्गसंयुतम् ।
मनोन्मनी च वर्ध... मेकपत्नी भवेद्यदि ॥

बहुपश्चेद् बहुप... स्युस्तासु तामेव पूजयेत् ।
दीक्षितश्चेन्न चे... क्षा तस्मिन्कालेऽथ दीक्षयेत् ॥ 50

मण्डले पूर्वदिक्स्थाने कल्पयेद्वेशदेशके ।
उत्तरे दक्षिणे वाथ वह्निकुण्डेन संयुते ॥

अथवैतत् परित्याज्यं शम्भुकुम्भस्थिते भवेत् ।
पुष्पपातादिकं कृत्वा होमं कुर्याद्विशेषतः ॥

गन्धैः पुष्पैश्च दीपैश्च धूपैरन्यैर्विशेषतः ।
नवाग्निं वाथ पञ्चाग्निमेकाग्निं वाथ कल्पयेत् ॥

समिदाज्यचरूँल्लाजतिलवैणवमाषकान् ।
जुहुयात् क्रमशो विद्वान् होमयोग्यांश्च संभवान् ॥



उदुम्बरवटाश्वत्थवृक्षा इन्द्रादिदिक्षु च ।
शमीखदिरमायूरश्रीवृक्षास्तु विदिक्षु च ॥ 55

पलाशस्तु प्रधाने स्यात्छिन्नब्रह्माङ्गकैः क्रमात् ।
सर्वद्रव्याणि जुहुयाद् देव्याश्चापि प्रधानके ॥

शतमर्धं तदर्धं वा जुहुयान्मूलमन्त्रतः ।
ब्रह्माङ्गानां दशांशं तु जुहुयात्तु पृथक् पृथक् ॥

होमं कृत्वा क्रमेणैव रात्रिशेषं व्यपोह्य च ।
गुरूत्तमः प्रधानाग्नौ तेषां दीक्षां समाचरेत् ॥

अदीक्षिताश्चेत् कर्तारश्शिवकुम्भे शिवं यजेत् ।
किंतु पञ्चाक्षरेणैव शिवायै नम इत्यपि ॥

वर्धन्यां च यजेद् गौरीमशेषकलशेषु च ।
पञ्चाक्षरेण मन्त्रेण रुद्रमेव समर्चयेत् ॥ 60

दीक्षार्थं तु शतं ह्येतन्मण्डलं दर्शनार्थकम् ।
कल्पयेत् सर्वतोभद्रं सर्वपापविमुक्तये ॥

सर्वाभीष्टप्रसिद्ध्यर्थं दिव्यादिव्यरजोमयम् ।
प्रातस्स्नानविलिप्ताङ्गं भूषितं भूषणादिकैः ॥

सर्वालङ्कारसंयुक्तमानयेन्मण्टपान्तिकम् ।
पादप्रक्षालनोपेतमाचान्तं शान्तमानसम् ॥

आनयेद्दक्षिणद्वारं संप्रोक्ष्य प्रणवेन तु ।
पुष्पाञ्जलिं च तेनैव प्रदक्षिणनमस्कृती ॥

कारयित्वाथ कुम्भस्थे शिवे मण्डलसंस्थिते ।
कुण्डस्थेऽपि ततःस्नानवेद्यां संस्थाप्य देशिकः ॥ 65

भद्रपीठे पयोवृक्षजाते वाम्रसमुद्भवे ।
पानसे बिल्वजे वाथ जम्बुजे ब्रह्मवृक्षजे ॥

सहस्रधारयोपेतं राज्ञां चेदभिषेचनम् ।
अन्येषामपि सर्वेषां शतधाराघटेन वा ॥

हैमेन राजतेनापि तयोरन्यतरेण वा ।
सर्वालङ्कारसंयुक्तमन्ते चामलकादिभिः ॥

स्नात्वैवान्यैरपि द्रव्यैः प्रमृजेच्छुद्धवाससा ।
गात्रस्थं तोयमत्रैव वस्त्राद्यं परिधाय्य च ॥

विलिप्य चन्दनाद्यैश्च गन्धपुष्पैरलङ्कृतम् ।
तदन्यत्र शुभे देशे विलिप्तेऽलङ्कृते गुरुः ॥ 70

स्थण्डिलं कारयित्वा तु तस्मिन् भद्रासनं क्षिपेत् ।
सवैयाघ्रं सवस्त्रं च सहेमाम्बुजमस्य तु ॥

स्थापयित्वाभिषिक्तं तु मध्यमे भार्यया युतम् ।
आचान्तं मन्त्रदेहान्तं गन्धपुष्पैर्वा तुमालया ॥

गन्धपुष्पैरलङ्कृत्य सर्वालङ्कारसंयुतम् ।
पटेन महताच्छाद्य तदग्रेऽथ विलिप्तके ॥

स्थाने सर्वाणि धान्यानि मधुपात्रं सहेमकम् ।
स्थापयित्वा सवत्सां गां दर्शयेच्च पयस्विनीम् ।

बन्धुभिः पूजितं हृष्टं वस्त्रहेमाङ्गुलीयकैः ॥
सुवर्णपुष्पैरन्यैश्च गेयवाद्यसमन्वितम् ॥ 75

आरोप्य शिविकादौ तु कृत्वा ग्रामप्रदक्षिणम् ।
गृहद्वारे पुरस्ताच्च विलिप्ते मङ्गलाङ्कुरे ॥

पूर्णकुम्भयुते दीपसंयुते फलकोपरि ।
स्थापयित्वा तु तत्पादौ क्षीरैः प्रक्षालनं जलैः ॥

कारयित्वा ततः स्त्रीभिः रजनीजलधारया ।
दीपेन सहिताभिश्च कारयेत्त्रिःप्रदक्षिणम् ॥

ततः पादुकमास्थाय प्रविशेत्स्वगृहं प्रति ।
श्रेष्ठमार्गोऽयमेकोनपञ्चाशत्कलशैस्तु वा ॥

पञ्चविंशतिकलशैर्नवभिः पञ्चभिस्तु वा ।
एकेनवाभिषेकं तु कारयेदभिषेचनम् ॥ 80

दक्षिणां च गुरोर्दद्यादुत्तमादिषु संभवाम् ।
दासीदासं सुवं गां च गृहोपकरणानि च ॥

मूर्तिपानां तदन्ते च तदन्ते जापिनामपि ।
स्तोतॄणामपि भक्तानां दक्षिणा पूर्ववद्भवेत् ॥

पूजयेत् कल्पयेद्वित्तरूपानुसरणाय च ।
एवं यः कारयेन्मर्त्यस्तस्य धर्मे मतिर्भवेत् ॥
इहैव धनवानाढ्यः पुत्रवान् विजयी भवेत् ।
आयुरारोग्यमिष्टाः श्रीर्मुक्तश्चाप्नोति परां गतिम् ॥
यत्रैव क्रियते राज्ये त्वभिषेकविधिक्रमः ।
नाकालमृत्युस्तत्रास्ति नालक्ष्मीः पापकृत्त्वपि ॥ 85
नोपसर्गभयं तत्र न परागमविप्लवः ।
स्वकालवर्षी पर्जन्यः सुभिक्षं विजयी नृपः ॥
शान्तानि सर्वभूतानि पयस्विन्यः पयोभृतः ।

इति उत्तरकामिकाख्ये महातन्त्रे शताभिषेकविधिः षड्विंशतितमः पटलः ॥

—(0)—

## ॥ अन्त्येष्टिविधिः ॥

अन्त्येष्टिं संप्रवक्ष्यामि दीक्षितानां द्विजोत्तमाः ।
ब्राह्मणः क्षत्रियो वाथ वैश्यशूद्रानुलोमजाः ॥
आचार्यास्साधका वा स्युः पुत्रकास्समयस्थिताः ।
गतासवो यदा तेषां कार्यान्त्येष्टिस्तु दीक्षितैः ॥
आचार्यादित्रयाणां स्यादत्वशुद्धिसमन्विता ।
अन्त्येष्टिरितराणां स्यादत्वशुद्धिविवर्जिता ॥
आचार्याश्चाव्रतश्चैते यथाचारविवर्जिताः ।
प्रायश्चित्तमकुर्वाणा मृताश्चान्त्येष्टिकर्मणि ॥
तत्त्वशुद्ध्या च नित्यादिकर्म सम्यगनुष्ठितम् ।
परिहृत्य निषिद्धं च यैस्तेषाम प्रमादिनाम् ॥ 5
तत्त्वशुद्धिं विहायैव केवलान्त्येष्टिरुच्यते ।
सद्योत्क्रान्तिः कृता यैर्वा ब्रह्मरन्ध्रादिभेदतः ॥
योगविद्भिर्न तेषां च कर्तव्यं तत्त्वशोधनम् ।
यस्य प्राणवियोगाख्यकालो जन्तोस्समागतः ॥
विधाय स्नानमग्रेऽयं मन्त्रसंनद्धविग्रहम् ।
मुमुक्षोश्च तथाग्रेऽयं मन्त्रकायं विधाय च ॥
अष्टपुष्पिकया देवं पूजयित्वा मुमुक्षवे ।
स्वकरेण परेषां वा कराभ्यां चन्दनादिभिः ॥
संस्थाप्य तस्य हृदये लिङ्गरूपं महेश्वरम् ।
स्पर्शयित्वाञ्जलिं तस्य मस्तके संनिधाप्य च ॥ 10
तदर्थमेतद्वाक्यं च पठेद्देवेशसंनिधौ ।
दीक्षितोऽयं त्वया देव शिवाज्ञापरिपालकः ॥
नेयः शिवत्वमचिरात् सपिण्डीकरणोत्तरम् ।
एवं विज्ञाप्य देवेशं स्वस्थाने विनिवेशयेत् ॥



एकधा बहुधा वापि क्रियामेनां समाचरेत् ।
पठेदुत्क्रान्तिसमये कर्णोपान्तेऽणुसंहिताम् ॥
विशेषाच्छिवमन्त्रं च मन्त्रं पञ्चाक्षरं तु वा ।
एतत्सर्वं विधेयं तु देशिकेनेतरेण वा ॥
तद्गोत्रजेन वान्येन वक्ष्यमाणं च कर्म यत् ।
गतप्राणे नरे तस्य स्नानार्थं तीर्थसंभवम् ॥ 15
जलं शतघटाद्यैस्तु सुस्नातैः परिगृह्य वा ।
तैः स्नापयेद् गृहस्थश्चेल्लौकिकस्नानसंयुतम् ॥
विधायैवं घटान्वापि कलशान् स्नपनोक्तितः ।
संस्थाप्य वर्धनीहीनं केवलोदकसंयुतम् ॥
स्थण्डिलाद्यं सवस्त्रं च सहिरण्यं सकूर्चकम् ।
पिधानाक्षतसंयुक्तं विधायाङ्गहृदयार्चितम् ॥
स्नापयेद्वा गृहे त्वेवश्मशाने वा समाचरेत् ।
अथवा स्नपनोपेतं संस्नाप्याग्नेयमादरात् ॥
कृत्वा संहारमार्गेण कौपीनं वसनं तथा ।
परिवस्त्राक्षमालाद्यैर्मूलवर्गैर्भूषणार्हकैः ॥ 20
दीक्षितानामथान्येषां शिवशासनधारिणाम् ।
अन्येषां च यथायोग्यं रात्रिचूर्णं च तैलयुक् ॥
ताम्बूलसहितं सर्वं जनेभ्यो दापयेत्तदा ।
आसन्दकां नयेद्यज्ञवृक्षैरन्यैरनिन्दितैः ॥
पुरुषायतमानां च षडङ्गुलविवर्धनात् ।
त्रिहस्तान्तसमायामां त्रिचतुर्भ्यश्चमांशतः ॥
सुविस्तारसमायुक्तामोभ्यःसंवयान्तविस्तराम् ।
आसन्दिकां समारोप्य कूटान्तोर्ध्वकृतक्रियाम् ॥
रक्तमाल्याम्बरकलशवितानालम्बनान्विताम् ।
इतरं चेदयोऽकल्प्या संस्थितं शिवयोगिनम् ॥ 25
निस्सारयेदलंकृत्य शुभैस्तं सर्वभूषणैः ।
शिबिका वदर्शी शुद्धामनीवारोऽपविच्छिवम् ॥
खनता सुखरेणोवैरातोद्यनाग्रगात्मना ।
संघेन समवस्थानां पृष्ठतश्चाभिनन्दितम् ॥
शङ्खध्वनिसमायुक्तं गानध्वनिसमन्वितम् ।
तज्ज्ञातयोऽनुगच्छेयुरनुद्घाटितमस्तकाः ॥
निगृह्याक्षिजलं बाष्पोष्णंसारामारभाविताः ।
दक्षिणस्थशिरोयुक्तं बद्धाङ्गुष्ठद्वयान्वितम् ॥
दर्भरज्ज्वा समावेष्ट्य तदैशानीं दिशं नयेत् ।
दीक्षितैस्तुल्यजातीयैरपसव्योपवीतकैः ॥ 30
जपद्भिरस्त्रमन्त्रैर्वा वाहयित्वोदकान्वितम् ।
वह्निं च तत्पुरोऽन्येन सधूमं त्रिकटिस्थितम् ॥
वाहयेदर्धविश्रामदक्षिणावनते मनाक् ।
सुविशुद्धे भुवः पृष्ठे मृतं दक्षिणमस्तकम् ॥
व्रतस्थमव्रतस्थं वा ब्राह्मणं शिवदीक्षितम् ।
विपन्नं यो वहेत्तस्य नाकालमरणं भवेत् ॥
गत्वा च तमनुस्नात्वा दत्त्वा निर्वापवारि च ।
ईप्सितं सुखमाप्नोति परत्रेह च भावितः ॥
नोत्तमेनानुगन्तव्यो हीनवर्गो व्रतोज्झितः ।
अनुगम्याम्भसि स्नात्वा सजातीशं शतं जपेत् ॥ 35
असहायमनाथं च गतासुं शिवयोगिनम् ।
नीत्वा संस्कारयेद्यस्तु सोऽरिष्टैर्विप्रमुच्यते ॥
वैश्यादित्रितयेऽन्यस्मिन् न्यायोऽयं परिकल्पितः ।
अथ स्थानमदूरस्थमुदकस्य समं शुचि ॥
प्राप्य कूटं प्रपां वापि विधायैवं तदन्तरे ।
षडङ्गुलोच्छ्रयोपेतं मेखलैकं युगाश्रकम् ॥
कृत्वा कुण्डं विधानेन हास्तिकं तन्मृगानिले ।
संकल्प्य स्थण्डिलं तदधिताश्रातं चतुष्कम् ॥
हस्तद्वितयविस्तीर्णमष्टाङ्गुलगभीरकम् ।
कुण्डदक्षिणतः कुर्यात् निधायैवं अथ गुरुः ॥ 40

गोमयेनोपलिप्याथ तत्समीपस्थितां भुवम् ।
शुचिः स्नातो गुरुर्मन्त्रकायश्चाखाङ्कुकीकरः ॥

प्रदक्षिणक्रमाद् गत्वा स्थण्डिलान्तमुदङ्मुखः ।
विपरीतकृतन्यासो हेतिमन्त्रेण रक्षितः ॥

कृतान्तर्यजनोऽस्त्रेण समालभ्यास्त्रवर्धनीम् ।
तज्जलप्रोक्षितैर्द्रव्यैः पूजां संकल्प्य चात्मनः ॥

आवर्त्य संहितामन्त्रान् कलासंहारवर्त्मना ।
ब्रह्मादिकारणोपेताः स्वस्मिन् विन्यस्य देशिकः ॥

संहारहस्तं च कृत्वा स्मृत्वा शिवं सकृत् ।
विकीर्य विकिरांस्तत्र कुशान् भस्म तिलानथ ॥ 45

समाहृत्य विगानेन चितायास्तु प्रपूजयेत् ।
पञ्चभागीकृते क्षेत्रे पञ्चपञ्चककोष्ठके ॥

पृथिव्यादियथारूपैः पञ्चवर्णैर्विचित्रिते ।
वंशरज्ज्वादिसंपन्ने विन्यसेद्वास्तुदेवताः ॥

तत्र मध्ये भुवा सार्धं ब्रह्माणं पञ्चकोष्ठके ।
नैरृत्यां वारिणा सार्धं विष्णुं कोष्ठचतुष्टये ॥

आग्नेय्यामग्निना सार्धं रुद्रं कोष्ठचतुष्टये ।
वायुकोणे चतुष्कोष्ठे वायुना समभीश्वरम् ॥

गगनेन सदेशानमैशकोष्ठचतुष्टये ।
पूर्वादिवेदकोष्ठेषु शक्रादींश्चतुरो यजेत् ॥ 50

निजनाम्ना च नत्वा च स्वाहान्तेन बलिं क्षिपेत् ।
ऐशान्यां दिशि वर्धन्यामिष्ट्वा पाशुपतास्त्रकम् ॥

शूलात् कुलिशपर्यन्तान्यस्त्राण्यष्टासु दिक्षु च ।
निधाय पूजयेदूर्ध्वमधः पद्मारिणावपि ॥

स्थिलदर्भान्तरे सम्यग्यजेन्मण्डलके भवम् ।
ऐश्वर्याद्यासनं दत्वा सदलाम्भोजमध्यमे ॥

मनोन्मन्यादि वामान्तं शक्तिचक्रं प्रपूजयेत् ।
व्युत्क्रमामनमिष्ट्वैवं साङ्गं संपूज्य शङ्करम् ॥

संस्कृत्य पूर्ववत् कुण्डं शक्तिमभ्यर्च्य तत्र च ।
क्रव्यादांशोज्झितं वह्निं विनिक्षिप्याप्रदक्षिणम् ॥

संस्कारैः पञ्चभिर्जातजातवेदोहृदम्बुजे ।
शिवं स्थल इवाभ्यर्च्य तर्पयित्वा सितैस्तिलैः ॥

साज्यैः पूर्णाविशिष्टैश्च चिनुयात्तु चितिं ततः ।
अथवा पञ्चवर्णोत्थमण्डलानि विहाय च ॥

संस्कृतैः कलशैः प्रान्तैस्संस्कारैर्वीक्षणादिभिः ।
चितिगर्तेऽथ पीठे च माहेन्द्रं पुरमालिखेत् ॥

रजसा लोहितेनापि तन्मध्ये कृष्णवर्त्मनः ।
तयोस्तद्देवते योज्ये शङ्कून् कोणेषु रोपयेत् ॥

आग्नेय्यादिष्वसव्येन शुष्ककाष्ठीयकीलकान् ।
ऊर्ध्वमूलानधोऽग्रांस्तानस्त्रलब्धान सकृत् सकृत् ॥ 60

पञ्चरञ्जितसूत्रेण कवचेन च वेष्टयेत् ।
अथवा रक्तसूत्रेण समन्तात् परिवेष्टयेत् ॥

शिवाहुतिशिखाग्नेः स्याद्रक्षोभ्यो रक्षणाय तु ।
शवशय्यां घनां तत्र काष्ठैरास्तीर्य याज्ञिकैः ॥

चन्दनागरुसंमिश्रैर्विपर्यस्तपटावृताम् ।
संपूज्य चास्त्रराजेन सकुशैः कुसुमैस्तिलैः ॥

कृत्वा मृतं मृदोद्घृष्टं गोमयेन सहाम्भसा ।
स्नापितं धूपितं तत्र भस्मना नववर्त्मना ॥

सब्रह्मसूत्रवसनं पूर्ववर्णानपेक्षया ।
आग्नेय्यां शिवमिष्ट्वाग्नेर्दक्षिणस्यां कुशासने ॥

वीक्षणादिविशुद्धस्य धारणाभिश्च पञ्चभिः ।
ततोऽस्य मन्त्रकायस्य हृत्सरोरुहकोटरे ॥

भोग्यकर्माशयारब्धप्रासाधारदेहकम् ।
महाजालेन तल्लिङ्गं संहृत्य विनिवेशयेत् ॥

ओं हूं हामथ हं हां हूं महाजालमिदं मतम् ।
उत्क्रान्ते मृतदीक्षाढ्यां नत्यन्तां भावितो गुरुः ॥







शिवादेहं च तद्देहे संहृत्य पञ्च ताः कलाः ।
स्वपदङ्कं शिवं न्यस्त्वा मूलेन जुहुयाच्छतम् ॥

चैतन्यसंनिधानार्थं ततस्तत्त्वानि शोधयेत् ।
निवृत्त्यादि समादाय युगपद्वा क्रमेण वा ॥ 70

कलास्तास्साधिपाः प्राग्वद्वह्नौ संपूजयेत्ततः ।
ताडनादिविभेदेन लिङ्गादादाय लिङ्गिनम् ॥

योजयेत्पूर्ववत्तत्र जन्मकर्माधिकारिताः ।
भोगो लयोऽथ संशुद्धिस्तत्त्वानां स्रोतसामपि ॥

तिरोभावः पशुत्वस्य पाशविश्लेषभेदने ।
तद्वाह्यो व्युत्क्रमैः कृत्यं कारणाद्वा पशूद्धृतिः ॥

विश्लिष्य तेन पूर्वेण पशुं निर्वाणकर्मणा ।
एवमेवोपरिष्टाच्च पाशानन्यान्विशोधयेत् ॥

उक्तया कर्मपद्धत्या तानप्येवं शिवावधि ।
अग्नेरुद्धृत्य होमान्ते योजयेदमले पदे ॥ 75

यत्कृतो न पुनर्जातु पराधीनो भवेदणुः ।
कृतनिश्शेषपाशान्तमिष्ट्वेशं च विवर्जयेत् ॥

शिवादेहं च तद्देहे संहृत्य स्वपदे गुरुः ।
स्थण्डिलेशानमप्येवं संहृत्य स्वपदे गुरुः ॥

शवमभ्येत्य शय्यायामारोप्य प्रावृतं कुशैः ।
याम्यशीर्षमुदक्पादं मुक्तानां स्रुक्स्रुवान्वितम् ॥

आचार्यं साधकं चैव ताभ्यामन्यं तदुज्झितम् ।
तुरुष्कागरुकर्पूरचन्दनोत्तरदारुभिः ॥

संछाद्यानीय कुण्डाग्निं शिरोदेशे विनिक्षिपेत् ।
मधुसतैलसर्पींषि प्रक्षिप्योज्ज्वलितेऽनले ॥ 80

सर्पिर्भिश्चप्य पूर्णां स्रुवमुत्क्षिप्य पूजिताम् ।
गुरुःस्थित्वा शिरोदेशे सौम्याशाभिमुखाननः ॥

पावकास्ये क्षिपेद्धारामिति वाक्यमुदीरयन् ।
त्वमग्ने दक्षिणः कालः कालेनैवोपपादिताम् ॥

गृहाण मन्त्रसंपूतां शाम्यामेनां महाहुतिम् ।
प्रक्षिप्यावाङ्मुखौ तत्र स्रुक्स्रुवावप्यनन्तरम् ॥

नियुज्य संक्रियाकर्मकुशलांश्चतुरो गुरुः ।
अप्रदक्षिणमादाय गृहीत्वा खड्गवर्धनीम् ॥

उत्क्षिप्यारोप्य वामांसे छन्नमूर्धा पराङ्मुखाम् ।
धारां विमुच्य संयुक्तः स्ववर्मस्थैः प्रदक्षिणम् ॥ 85

अपसव्यक्रमात् कृत्वा वर्धनीं तामधोमुखीम् ।
क्षिपेत् तत्र यतो देशादुद्धृता सास्त्रवर्धनी ॥

ततो जलाशयं गत्वा स्नात्वा प्रस्तीर्य सत्कुशान् ।
तदूर्ध्वमपसव्येन प्रणवं हृदयं पुरा ॥

शुद्धात्मन्निति चेशादिशान्तपर्यन्तनामयुक् ।
स्कन्दपूर्वं गणेशान्तं नाम वा भवपश्चिमम् ॥

उक्त्वा यथार्हं मन्त्री त्रिः स्वधान्तं तर्पयेत्पुनः ।
भूयः स्नात्वा जपेयुश्च सौम्यास्याश्शिवसंहिताम् ॥

अशेषास्तेऽथवास्त्राणामेकं वा रूपिणश्शतम् ।
द्विगुणं स्कन्धदातारस्तथा तद्वाहका अपि ॥ 90

शावशौचं विधायैवमागच्छेयुः स्वमन्दिरम् ।
विदंश्य निम्बपत्राणि नियता द्वारि वेश्मनः ॥

आचम्याथाग्निमुदकं गोमयं गौरसर्षपान् ।
प्रविशेयुस्समालभ्य कृत्वाश्मनि पदं शनैः ॥

शिष्टस्य समयस्थस्य हीनस्योत्तरदीक्षया ।
निर्वाणदीक्षा कर्तव्या ममेत्याहितचेतसः ॥

विपन्नस्यापि सा तत्त्वशुद्धान्त्येष्टिरिहेष्यते ।
जलेन वाग्निना शस्त्रैर्विशेषेणाभिसंहतः ॥

शार्दूलेनान्यसत्त्वैर्वा वृक्षादिपतनेन वा ।
स्वहस्तताडनोच्छेदरज्जुबन्धनपातनैः ॥ 95

अन्यैरेतादृशैर्येषां मरणं पूर्ववत् क्रिया ।
अविद्यमानदेहानां तथा विकलदेहिनाम् ॥

क्षयकुष्ठविसूर्चादिमहारोगशरीरिणाम् ।
कुशादिनिर्मिते देहे क्रियास्सर्वास्समाचरेत् ॥

विकलाङ्गं मसूर्यादिरोगिणं च नरं मृतम् ।
दहेद्वा केवले वाऽथवाऽन्त्रं निखनेत्तु वा ॥

क्षिपेद् गङ्गादितीर्थे वा वडवादीनां प्रवेशनम् ।
इष्यते यदि पुण्यार्थं ज्ञात्वैवं कर्म तन्नयेत् ॥

कुशैर्दर्भैः पलाशोत्थैर्दलैस्तन्तुसमन्वितैः ।
कुर्यात् प्रतिकृतिं पैष्टीं पञ्चगव्यपरिप्लुताम् ॥ 100

प्रतिमां गोमयोत्थां वा कारयेद्विष्टमानतः ।
अस्यां च कर्म कर्तव्यं यथापूर्वमुदाहृतम् ॥

किं तु सर्पिर्मधुक्षीरसिक्तां तां प्रतिमां दहेत् ।
भद्रे त्रिपदनक्षत्रे शुक्राङ्गारबृहस्पतौ ॥

दहनं मरणं येषां तत्कुलक्षयकारणम् ।
तदर्थमेवं कर्तव्यं पुनर्दहनमादरात् ॥

नृणामकृतचूडानां मृतानामवटक्रिया ।
न तेषां दहनं नैव बलिर्नैवोदकक्रिया ॥

नृणां चौलान्तरे वा स्याद्दहनं वावटक्रिया ।
ऊनद्विवर्षके प्रेते नाग्निर्नैवोदकक्रिया ॥ 105

यतीनां ज्ञानिनां वापि क्रिया स्यादवटक्रिया ।
लवणापूरणोपेता विना बल्युदकौदनैः ॥

कृतचूडस्य दहनं भवेत् पिण्डोदकान्वितम् ।
प्रत्यब्दसूद्रया वृद्धः स्यात् पिण्डे बोदककर्मणि ॥

दशाहं स्यादशाब्दे तु तदूर्ध्वं च विशेषतः ।
कर्म यथावटे देहे शुद्धिं कृत्वोक्लेदने ॥

सिकतास्तरणे दर्भानास्तीर्योत्तरमस्तकम् ।
आरोप्य शिबिकादौ च श्मशाने शुद्धभूतले ॥

बाहुमात्रं खनेद्भूमिं तच्छ्रायायामविस्तराम् ।
न्यस्त्वा दत्वाक्षतांश्च तूष्णीं गन्धादिनार्चयेत् ॥ 110

तत्र न्यस्त्वा मृतं याम्यमस्तकं पूरयेन्मृदा ।
योगिनां दण्डमात्रं वा खनेद्दण्डार्धमात्रतः ॥

लवणेनाथवापूर्य तत्समीपप्रदेशतः ।
तत्रैवालयसंयुक्तं पीठं वा लिङ्गमेव वा ॥

बेररूपं स्वरूपं वा कृत्वा संस्थाप्य पूजयेत् ।
तत्र पिण्डोदके श्राद्धं यदन्यदपि नेष्यते ॥

अङ्गुष्ठबन्धनं चास्य ताम्बूलक्षेपणं च यत् ।
भक्तानामथवाप्येषां नेष्यते मुनिपुङ्गवाः ॥

अशन्यग्निजलाद्यैश्च मृतानां दहनं नयेत् ।
समा वातीत्य भर्ता तु यदि देशान्तरं गतः ॥ 115

द्वादशाब्दमतीत्यैव वैधव्यं व्रतमाचरेत् ।
मृतो वा न मृतो वाप्यविज्ञातश्चेत्स सर्वथा ॥

वेदाश्रमण्डलं कृत्वा तत्र कीलत्रयोर्ध्वतः ।
पात्रमध्ये तुषान् क्षिप्त्वा दहेदग्निकणान्तकम् ॥

मृतस्य दहनार्थं तु वह्निमेवं हि संहरेत् ।
होमशेषघृतोपेतं तण्डुलं क्षीरसंयुतम् ॥

श्रवणास्यास्यहृन्नाभिदेशेषु हृदयाणुना ।
नवद्वारेषु हैरण्यशकलक्षेपणं हृदा ॥

तण्डुलं क्षीरसंमिश्रं वामदेवेन निक्षिपेत् ।
अङ्गुष्ठबन्धनच्छेदमघोरास्त्रेण कारयेत् ॥ 120

सकृत्पातं च ततः कुर्युस्सपिण्डा भ्रातृभिस्सह ।
वस्त्राग्रेण तदा सर्वे तत्प्रदक्षिणकारिणः ॥

दाहकस्तु पूर्णकुम्भं च समादाय प्रदक्षिणम् ।
त्रयं विधाय तद्वामे निक्षिपेदस्त्रमन्त्रतः ॥

तोयं भिन्नकपालस्थं प्राणस्थानेषु निक्षिपेत् ।
स्नानान्ते पञ्चगव्यं वा घृतं पीत्वा जपेच्छिवम् ॥

यथाशक्ति तदा दानं कृत्वा च श्मदाहयोः ।
तिलोदकं च दातव्यं मृतनाम्ना समन्वितम् ॥



इत्यादि कर्म कर्तव्यं तत्त्वशुद्धिविहीनया ।
अन्त्येष्ट्या च समेतानां तेषां माहेश्वरात्मनाम् ॥ 125

प्रत्यहं तर्पणं कार्यमीशस्कन्दादिनामतः ।
पृथक् पृथक् त्रयं कार्यं तर्पणं प्रथमेऽहनि ॥

प्रत्यहं वर्धयेदेकं द्वादशान्तं पृथक् पृथक् ।
पञ्चसप्ततिसंख्यातं तर्पणं प्रतिभोजनम् ॥

कल्पयेद् द्विशतं पञ्चपञ्चसंख्यासमन्वितम् ।
ईशादित्रयतृप्त्यर्थं त्वेकभोजनमेव वा ॥

नवप्रच्छादनं दद्याद् दीक्षिताय कुटुम्बिने ।
दाहान्ते मृतमुद्दिश्य वस्त्रतण्डुलसंयुतम् ॥

तर्पणान्ते बलिं दद्यान्नद्यादौ वा गृहेऽपि वा ।
नैष्ठिकस्य न कर्तव्यं प्रत्यहं तर्पणं बलिः ॥ 130

एकाहं किं तु दाहान्ते ईशादित्रिभिरेव हि ।
तदर्थं तर्पणं कृत्वा तदर्थं पूजयेच्छिवम् ॥

वीतशोकस्य सक्तानां नराणां मूढचेतसाम् ।
समुद्भ्रापनयेयुश्च याथात्म्यस्मरणाच्छुचम् ॥

शिवव्रतधरा ये च शैवा ये गृहिणीसखाः ।
न शुचः कारणं तेषामस्ति किञ्चिद्विवेकिनाम् ॥

तथा चात्मा विभुर्नित्यश्चेतनश्शिवश्शस्सदा ।
न विनाशोऽस्ति तस्येह स चेदस्ति तथा न सः ॥

आत्मनो भोगहेतुत्वाभावादुपचर्यते ।
तन्नाशस्तत्क्षयो मृत्युः स्वगुणानुपलब्धितः ॥ 135

स्वस्थात्मनोऽनुकूलोऽपि प्रतिकूलं समाचरेत् ।
अनिष्टापगमे यस्य न भवेद्दिष्टशेमुषी ॥

सर्वज्ञःस्यात् तनोश्चान्ते येनोक्तश्शिवदीक्षितः ।
चितेवरणगस्तायं भोगस्तद्भोगसाधनम् ॥

देहोऽयं तद्वियोगो यस्सोऽत्यन्तं हित उच्यते ।
मानुष्यकदलीस्तम्भे निस्सारे सारमार्गणम् ॥

यः करोति स संमूढो जलबुद्बुदसंनिभे ।
पञ्चधा संभृतः कायो यदि पञ्चत्वमागतः ॥

कर्मभिस्स्वशरीरोत्थैः का तत्र परिवेदना ।
गन्त्री वसुमती नाशमुदधिर्दैवतानि च ॥ 140

फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति ।
श्लेष्माश्रु बान्धवैर्मुक्तं यतो भुङ्क्ते मृतोऽवशः ॥

अतो न रोदितव्यं स्यात् क्रिया कार्या तु शक्तितः ।
द्वितीयेऽहनि शेषाङ्गदहनं कारयेन्न वा ॥

घृतक्षीरसमायुक्तं सपिण्डैश्च समायुतः ।
तृतीयेऽप्यथवाथेऽह्नि कुर्यात् संचयनं चितेः ॥

हुत्वाथ मृण्मयं पात्रं क्षीरेण पयसाथवा ।
पूर्णां त्रिकाष्ठिकां तत्र कृत्वा तत्तत्र विन्यसेत् ॥

अस्थिसंग्रहणं वाथ कुर्यात् संचयनं विना ।
एकत्रिपञ्चसप्ताहे नवभाण्डे तु मृण्मये ॥ 145

अस्थिसंग्रहणं विप्रप्रमुखाणां क्रमेण वा ।
सक्तुलाजौदनाद्यैश्चतुर्दिक्षु बलिं क्षिपेत् ॥

पिशाचबलिरेव स्यात् तेषां तृप्त्यर्थमाचरेत् ।
अङ्गैरङ्गानि संहृत्य तन्मन्त्रेणैव निक्षिपेत् ॥

ग्रामाद् बाह्ये तु निक्षिप्य गङ्गादिक्षेपणाय च ।
तद्दिने वाथ पक्षान्ते मासान्ते वा त्रिमासिके ॥

षण्मासे वाब्दसंपूर्णौ तदूर्ध्वे वाथ निक्षिपेत् ।
निक्षिप्य तत्र तत्तीर्थे स्नानं कृत्वा तिलैस्सह ॥

पैतृकं तर्पणं कृत्वा देवादीनपि तर्पयेत् ।
दानं कुर्याद्यथाशक्ति पिण्डं दद्याच्च तद्भुवि ॥ 150

शिष्यैकगुरुसंबन्धा गुरुसंबन्धिनश्च ये ।
त्यजेयुस्त्रिदिनं कर्म नित्यादन्यज्जपादिकम् ॥

तेभ्योऽन्ये शैवमार्गस्था गृहिणोऽगृहिणोऽपि वा ।
दिनमेकं क्षिपेयुस्ते शावाशौचाय दीक्षिताः ॥

गृहिणो लोकमार्गस्था लङ्घयेयुर्न लौकिकम् ।
आचारं दीक्षितास्तस्मात् कुर्वीरँल्लोकसंवृतिम् ॥

शिवव्रतधरस्यास्य न मृतिर्न च सूनकम् ।
पूर्वाश्रमानपेक्षत्वादस्तसंसारहेतुतः ॥

पूर्वाश्रमस्थितस्यापि गृहस्थस्य तु दीक्षया ।
अस्तसंसारबीजस्य ज्ञानिनः सत्क्रियावतः ॥ 155

क्षणमात्रं भवेत्तच्च स्नानादेव निवर्तते ।
विप्रे शुद्धिर्दशाहे स्यात् क्षत्रिये द्वादशाह्निका ॥

दशपञ्चाह्निका शुद्धिर्वैश्ये शूद्रे हि मासिका ।
उद्वाहितास्तत्र तत्तु ब्राह्मणेन स्त्रियो यदा ॥

क्रमेण सूतकं प्राह्यं दशषट्त्र्येकवासरम् ।
सूतकं तत्सुतादीनां मातृपक्षे यथामतम् ॥

पूर्णगर्भान्मृतो जातश्शुद्धिः स्नानात् क्षणात्मिका ।
माससंख्योदिता मातुः स्त्रीपुंसोर्गर्भनाशने ॥

नाम्नः प्राग्दन्तजननात्तथोपनयनादपि ।
स्नानमेकदिनं प्रोक्तं त्रिदिनं च क्रमेण तु ॥ 160

तदूर्ध्वं च दशाहं स्याज्ज्ञातीनां त्रिषु कथ्यते ।
क्षौरादष्टमवर्षाच्च विवाहात् पूर्ववत् क्रमात् ॥

भ्रातॄणां च दशाहं स्यात् कृते नाम्नि तु सर्वदा ।
पित्रोर्दशाहमेव स्यात् सर्वत्राशौचमग्रजाः ॥

पक्षिणी स्यात् प्रदत्तायाः पित्रोः सोदरयोर्मृतौ ।
तत्सुतानां प्रयाणे च पक्षिणी द्विजसत्तमाः ॥

दिवसद्वयमध्यस्था रात्रिर्वा रात्रिमध्यगम् ।
दिनं वा पक्षिणीत्युक्ता ज्ञात्वैवं कर्म कारयेत् ॥

त्रिदिनं च सपिण्डानां यत्र तत्रैकवासरम् ।
समानोदकवर्गाणामाशौचं विहितं विधौ ॥ 165

ऊर्ध्वं दन्तोद्भवात् स्नानं तेषामत्र प्रकीर्तितम् ।
आमौञ्जीबन्धनाद्विप्रः क्षत्रियश्च धनुर्ग्रहात् ॥

आप्रतोदग्रहाद्वैश्यश्शूद्रो वस्त्रद्वयग्रहात् ।
पूर्णाशौचं भवेदूर्ध्वं मृतो यदि नरोत्तमाः ॥

यदा निवृत्तचूडस्स्यात् क्षत्रियष्षड्दिनैश्शुचिः ।
वैश्यश्चेत्त्रिभिश्शुद्धः शूद्रो द्वादशभिर्दिनैः ॥

एतत्सर्वं तु विहितं ज्ञातीनां मुनिपुङ्गवाः ।
भवेत् त्रिरात्रमाशौचमाचार्यमरणे सति ॥

तस्य पुत्रस्य पत्न्याश्च दिवारात्रमिति स्मृतम् ।
शावाशौचे समुत्पन्ने सूतकं तु यदा भवेत् ॥ 170

शावेन शुध्यते सूतिर्न सूतिश्शावशोधिनी ।
सूतके सूतकं भूयो यद्यपि स्याद् द्विजोत्तमाः ॥

प्राक्शेषेणैव शुद्धिस्स्यान्मृतके मृतकं तथा ।
सूतके मृतकं चेत् स्यात् सूतके सूतकं तथा ॥

तत्राधिकेन शुद्धिस्स्यान्न तु न्यूनदिनैश्शुचिः ।
अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत् ॥

सूतेऽतीते दिनैकं स्यात् स्नानमेवोर्ध्वमब्दतः ।
कृतनित्याग्निकार्यस्य मृतस्य दहनादितः ॥

अनाहिताग्नेराशौचं मरणाद्धात्प्रकीर्तितम् ।
ये च माहेश्वरास्शूद्रा भस्मरुद्राक्षधारिणः ॥ 175

तेषां पञ्चदशाहे तु शुद्धिस्सूतौ मृतावपि ।
तथैव रुद्रकन्यानां पञ्चाचार्येऽपि संमतम् ॥

हीनानुलोमिनां तद्वद्भस्मरुद्राक्षधारिणाम् ।
न स्पृशेयुस्सपिण्डाश्च दाहकं तत्र कथ्यते ॥

सूतकाद् द्विगुणं शावं शावाद्द्विगुणमार्तवम् ।
आर्तवाद् द्विगुणा सूतिस्तस्या अपि च दाहकम् ॥

प्रेतस्पर्शः कृतो यैस्तु बाहकैर्ग्रामवासतः ।
नक्षत्रदर्शनाद्वापि वसेयुस्सूर्यदर्शनात् ॥

स्पृष्ट्वान्तेऽग्निं पिबेयुस्ते पञ्चगव्यं घृतं तु वा ।
इदं सामान्यमर्त्यानां विधानं परिकीर्तितम् ॥ 180



ये च माहेश्वरास्शूद्रा इत्याद्याः परिकीर्तिताः ।
शिवगानविदां तद्वच्छिवाश्रमनिषेविणाम् ॥

दिनैर्विंशतिभिश्शुद्धिर्देवदास्याः प्रकीर्तिता ।
आशौचं दासदासीनामधिष्ठातृकुलोचितम् ॥

प्रतिलोमेषु नाशौचमिष्यते द्विजसत्तमाः ।
कुलं तु रुद्रकन्यानां मातृजं परिकीर्तितम् ॥

तथैव देवदासीनां मातृजं कुलमीरितम् ।
राज्ञां पुरोहितानां च नाशौचं मृतसूतयोः ॥

समयस्थस्य नाशौचं नित्यकर्मणि सर्वदा ।
गृहिणोऽगृहिणो वापि व्रतयुक्तस्य सर्वतः ॥ 185

निर्वाणदीक्षायुक्तानामनुष्ठानाहितात्मनाम् ।
गृहस्थानां च नाशौचं नित्ये नैमित्तिकेऽपि वा ॥

काम्यकर्मणि चाशौचं यतः स्नानान्निवर्तते ।
स्नानं च व्रतिनो नोक्तं पृथक् पाकभुजो यदि ॥

स्वार्थे वाथ परार्थे वा विधानमिदमीरितम् ।
परित्यजेत् परार्थं वा लोकसंवरणाय च ॥

मातृपुत्रपितृभ्योऽन्ये बान्धवा ज्ञातयः स्मृताः ।
ज्ञातीनां स्त्रीषु जातासु नाशौचं प्रविधीयते ॥

आसप्तपौरुषाद् ग्राह्यं तत्पुंसां मृतसूतयोः ।
तत्रापि त्र्यहमाशौचं परतः पञ्चपौरुषात् ॥ 190

तदूर्ध्वं पक्षिणी ग्राह्या विज्ञातं यदि बान्धवम् ।
विप्रस्य विधिनोढासु रक्ताद्यासु विशुध्यथ ॥

एकद्वित्रिदिनह्रासाज्जातानां ब्राह्मणादितः ।
अन्त्यायजानां शुद्धिस्तु द्वित्रिवेददिनर्द्धितः ॥

नाशौचं प्रतिलोमानां ते नित्याशुचयो यतः ।
साधारणस्त्रियो याश्च पूता नैव कदाचन ॥

राजानस्सर्वदा पूतास्त्वभिषेकेन संयुताः ।
महान्तो मन्त्रिणश्चापि यदि भक्ता महेश्वरे ॥

शिवकर्मरता ये तु शूद्रा भस्मादिसंयुताः ।
दिनैर्विंशतिभिश्शुद्धाः पञ्चविंशतिभिः परे ॥ 195

प्रेतसूतकसंबन्धि नित्यहानिं करोति यत् ।
तस्य तावत्तिथौ शुद्धिर्यावन्ति दिनानि तु ॥

प्रायश्चित्तं तदर्थं तु नक्तं यावकभोजनम् ।
त्रिकालस्नानपूजाग्निजपहोमपुरस्सरम् ॥

विना हानिं यदा योगस्तदन्ते च त्रिरात्रकम् ।
योगं विना यदा हानिस्तत्राप्यन्ते दिनत्रयम् ॥

भक्तिर्ज्ञानं च वैराग्यमेतेष्वेकतमं तु वा ।
यस्य सम्यग् भवेत्तेन कार्यं समयिनार्चनम् ॥

मन्दमन्दतरं वापि यस्यैतत् त्रितयं भवेत् ।
अन्तर्यागश्च तेनापि कर्तव्योऽन्ते दिनद्वयम् ॥ 200

एकाहं वा यवाहारी चरुभुग्वा सहस्रकम् ।
जपेदघोरं स्नानान्ते दशांशो होम एव वा ॥

यस्य नास्ति शिखाच्छेदस्तस्य पादार्धकस्य च ।
अयमेव विधिः प्रोक्तः समयस्थस्य हे द्विजाः ॥

निर्वाणदीक्षितस्यापि शिखाच्छेदयुतस्य च ।
नित्ये नैमित्तिके काम्ये सर्वत्रैवाधिकारिता ॥

शिखाच्छेदविहीनस्य नित्यकर्मणि योग्यता ।
एतेषामपि सर्वेषां प्रासादादिप्रवेशनम् ॥

अग्रमण्डपबाह्ये तु न दोषाय प्रकल्पते ।

इति उत्तरकामिकाख्ये महातन्त्रे अन्त्येष्टिविधिः सप्तविंशतितमः पटलः ॥

## ॥ पितृयज्ञविधिः ॥

पितृयज्ञविधिं वक्ष्ये श्रूयतां मुनिपुङ्गवाः ।
आवश्यकं गृहस्थानां लोकमार्गानुयायिनाम् ॥

अङ्गणे बाह्यदेशे वागारे पितृगृहं नयेत् ।
पीठं पीठोक्तरीत्या तु सत्रिमेखलमाचरेत् ॥

तत्पुरस्ताल्कमात्रेणावटं कुर्यान्नवं गुरुः ।
गोमयाम्भोभिरालिप्य न्यस्य पीठस्य मध्यमे ॥

कूर्चं प्रादेशमात्रं तु पञ्चभिस्सप्तभिस्तु वा ।
विप्रादीनां क्रमाद्वापि रुद्रान्तकुशसंमितैः ॥

दर्भैर्वा सत्कुशैः कूर्चं दक्षिणाशाग्रसंयुतम् ।
प्रणवेनासनं दत्वा मूर्तिमावाहयेत्ततः ॥ 5

तद्गोत्रादिसमोपेतं देवदत्तादिमूर्तये ।
स्वधेत्युक्त्वा विनिक्षिप्य तद्वदात्माणुसंयुतम् ॥

तद्गोत्रादिसमोपेतमात्मानं प्रणवं न्यसेत् ।
पाद्यादिनिचयं वस्त्रं गन्धपुष्पतिलान्वितम् ॥

धूपं दीपं च नैवेद्यमाढकादिविनिर्मितम् ।
तदर्धनिर्मितं वापि तस्य प्रीतिकरं च यत् ॥

गुलखण्डाज्यसंयुक्तं सोपदंशं प्रकल्पितम् ।
आशौचरहितैः स्नातैर्नवमृद्भाण्ड एव हि ॥

ताम्बूलसहितं दद्यान्नित्यं कालद्वयेऽपि च ।
द्वयमह्नयेव कर्तव्यमेककालेऽथवा द्वयम् । 10

एतत्सर्वं च तन्नाम्ना स्वधान्तेन हृदान्वितम् ।
अथवार्ध्यबलिं दद्यादन्यत्रान्नं प्रकल्पयेत् ॥

पिण्डत्रयं तु वा देयं केवलं स्वधटं हि वा ।
कृत्वेष्टकां वा पाषाणे शरावे वा निधाय च ॥

कूर्चं पुरोदितं दत्वा तत्रैतत् कर्म वा नयेत् ।
सप्ताहं वा नवाहं वा दशाहं वा तदाचरेत् ॥

तदन्ते चापराह्णे वा पूर्ववद्विधिनार्चयेत् ।
मृदमुद्वास्य तत्स्थानात् पिण्डं पुष्पसमन्वितम् ॥

तत्कूर्चमिष्टकायुक्तं पाषाणं पीठिकां च वा ।
संप्रक्ष्य पीठिकादौ च धूपदीपादिसंयुतम् ॥ 15

आतोद्यसहितं वाथ निक्षिपेत् तीर्थमध्यमे ।
एतत्सर्वं तु वा पुण्यस्थाने नद्यादिके नयेत् ॥

विप्रादीनां तु सामान्यं विशेषस्त्वधुनोच्यते ।
ब्राह्मणे दशपिण्डास्तु क्षत्रिये द्वादश स्मृताः ॥

वैश्ये पञ्चदश प्रोक्ताश्शूद्रे त्रिंशत् प्रकीर्तिताः ।
आशौचं यावदेतेषां तावत् पिण्डोदकक्रिया ॥

प्रथमे ह्येकपिण्डं तु द्वितीये चतुरस्तथा ।
तृतीये पञ्च वै दद्यात् त्रिदिनादौ मतो विधिः ॥

दशाहे समतिक्रान्ते एकोद्दिष्टे कृते सति ।
पिण्डमेकं तदा देयमाशौचं चाप्रदानतः ॥ 20

इति उत्तरकामिकाख्ये महातन्त्रे पितृयज्ञविधिः अष्टाविंशतितमः पटलः



## ॥ शैवश्राद्धविधिः ॥

ततः श्राद्धविधिर्लेशात् कथ्यते दीक्षितात्मनाम् ।
नित्यं नैमित्तिकं काम्यं वृद्धिः पार्वणमेव च ॥

प्रोक्तं पञ्चविधं श्राद्धं ज्ञात्वा कर्म समाचरेत् ।
नित्यं दद्यादहरहर्नैमित्तं स्यान्मृतेऽहनि ॥

कामाय विहितं काम्यं कुह्वौ पार्वणमिष्यते ।
वृद्धिश्राद्धं विवाहादावेवं पञ्चविधं भवेत् ॥

तदर्थं श्रद्धया दत्तं भोजनं श्राद्धमुच्यते ।
तत्संशुद्धिदिनाद्यावदब्दमासादिभेदतः ॥

एकोद्दिष्टं प्रकर्तव्यं प्रतिसंवत्सरं कृतम् ।
श्राद्धं स्यादेकवर्षोर्ध्वं श्राद्धपक्षे विशेषतः ॥ 6

नवश्राद्धं भवेदाद्यं ततः स्यात्षोडशात्मकम् ।
चतुर्थे पञ्चमे त्वह्नि नवाहैकादशाहयोः ॥

मृतमुद्दिश्य यद्दानं नवश्राद्धमिति स्मृतम् ।
नवश्राद्धममन्त्रं तु पिण्डोदकविवर्जितम् ॥

अनूदकमधूपं च गन्धमाल्यविवर्जितम् ।
आशौचान्ते प्रकर्तव्यमेकोद्दिष्टं द्विजोत्तमाः ॥

एकादशे त्रिपक्षे च तथा च प्रतिमासके ।
वत्सरार्धे च यत्कर्म सांवत्सरिकसंयुतम् ।

षोडशश्राद्धमित्युक्तं दानमेतेषु यत्कृतम् ।
एतच्च षोडशश्राद्धमेकोद्दिष्टमिति स्मृतम् ॥ 10

यस्यैतानि न कुर्वन्ति श्राद्धानि नव षोडश ।
पिशाचत्वं चिरं तस्य दत्तैश्श्राद्धशतैरपि ॥

द्वारे च भस्मनिचये चाकाशे च यथाक्रमम् ।
त्र्यहाणि त्रीणि चैकं च प्रेतीभूतस्स तिष्ठति ॥

सपिण्डीकरणादूर्ध्वं शिवलोकं स गच्छति ।
मरणाद्दिवात् समारभ्य प्रत्यहं वत्सरावधि ॥

भोजनं सोदकुम्भं च प्रदद्याद्देशिकात्मने ।
विधायाथ नवश्राद्धमेकोद्दिष्टसमन्वितम् ॥

सोदकुम्भयुतं पश्चात् सपिण्डीकरणं समे ।
विधातव्यं प्रयत्नेन ब्रह्मचर्यमनुज्ञता ॥ 15

षण्मासान्ते त्रिमासान्ते मासान्ते वा समाचरेत् ।
एकोद्दिष्टद्वितीयाहे सपिण्डीकरणक्रियाम् ॥

अर्वाक् सपिण्डीकरणं यस्य संवत्सराद्भवेत् ।
तस्याप्यन्नं सोदकुम्भं दद्यात्संवत्सराद्गुरुः ॥

पूर्वमेव नवश्राद्धमेकोद्दिष्टसमन्वितम् ।
सपिण्डीकरणं कुर्याद्भोजनं चैकवर्धनम् ॥

समूह्य वै तत् कर्तव्यं विशेषाद्देशिकात्मने ।
शिवाय वा प्रदातव्यमथवा दीक्षितात्मने ॥

एकोद्दिष्टक्रियान्ते तु पक्षश्राद्धं विशां मतम् ।
पाक्षिकं मासिकं श्राद्धं शूद्राणां च तथा भवेत् ॥ 20

अन्यत्सर्वं समानं स्याद्ब्राह्मणैश्च त्रिवर्णिनाम् ।
घटकन्यागते सूर्ये कृष्णपक्षे विशेषतः ॥

चतुर्थी सप्तमी चैव नवमी च त्रयोदशी ।
अमावास्या मघा चासु पितृपक्षं प्रकल्पयेत् ॥

अष्टम्यां पर्वशेषेषु मातृवर्गं प्रकल्पयेत् ।
व्यतीपातेऽयने वापि स्वर्भानोरपि दर्शने ॥

विष्णोरपि गजच्छायासंक्रान्त्यादिषु कारयेत् ।
शस्त्राग्निभृगुपाताम्बुप्रवेशविधिना मृताः ॥

एतेषां तु चतुर्दश्यां श्राद्धं कुर्यात् सुतृप्तये ।
अन्यदा वापि कर्तव्यं संभवे वसुपात्रयोः । 25

रात्रौ तु राक्षसं श्राद्धं सन्ध्ययोरुभयोरपि ।
रात्रावपि च कर्तव्यं यदि स्याद्राहुदर्शनम् ॥

गृही त्रयोदशीश्राद्धं न च कुर्वीत पुत्रवान् ।
मघासु कुर्वतः श्राद्धं ज्येष्ठपुत्रो विनश्यति ॥

नन्दायां दारसूनू च चतुर्दश्यां त्रिजन्मसु ।
यदि कुर्यात्तयश्राद्धं कुलक्षयकरं भवेत् ॥

शुक्रे च बुधवारे च गुरोस्सोमस्य वारयोः ।
एतेषु कुर्वतः श्राद्धं कर्तुर्मरणमादिशेत् ॥

पौष्णमादित्यमैन्द्राग्नी रोहिणी त्रय उत्तराः ।
आत्मनश्च त्रिजन्मानि चतुर्विंशतिभं तथा ॥ 30

सप्तविंशति ऋक्षं च श्राद्धकर्मणि वर्जयेत् ।
एतेषु कुर्वतः श्राद्धं पुनर्मरणमादिशेत् ॥

अमाद्वयस्तु वै मासो मलिनः पापसंभवः ।
गर्हितः पितृदेवेभ्यः सर्वकर्मसु संत्यजेत् ॥

नित्यनैमित्तिकं कुर्यात् प्रयतस्सन्मलिम्लुचे ।
वैशाखे शुक्लपक्षस्य तृतीया शुक्लकार्तिके ॥

नवमी स्यादमावास्या नभस्ये कृष्णपक्षके ।
तिथिस्त्रयोदशी माघे तथा पञ्चदशी मता ॥

तिलोऽष्टकायने सूर्याचन्द्रयोर्ग्रहणेऽपि च ।
कालेष्वेतेषु वा दद्यादुदकं तिलसंयुतम् ॥ 35

अमासहस्रं तच्छ्राद्धं भवत्येव न संशयः ।
कन्यां गते सवितरि पितरो यान्ति वै सुतान् ॥

ततो वृश्चिकसंप्राप्तौ निराशाः पितरो गताः ।
ततः स्वभवनं यान्ति शापं दत्वा सुदारुणम् ॥

अकुर्वाणश्च तच्छ्राद्धं पङ्के गौरिव सीदति ।
उपात्तेषु सुसंतानं शकुना इव पिप्पले ॥

मधुमांसैश्च पाकैश्च पयसा पायसेन च ।
एष नो दास्यति श्राद्धं वर्षासु च मघास्वपि ॥

पूर्वाह्णे दैविकं श्राद्धमपराह्णे तु पैतृकम् ।
एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम् ॥ 40

शुक्लपक्षे तु पूर्वाह्णे कृष्णे स्यादपराह्णके ।
आमश्राद्धं प्रकर्तव्यं पूर्वाह्णे द्विजसत्तमाः ॥

आपद्यनग्नौ तीर्थे च चन्द्रसूर्यग्रहे तथा ।
आमश्राद्धमशक्तौ स्याच्छूद्रश्चैस्तु सदैव हि ॥

द्विजोत्तमादयस्सर्वे प्रशस्ताः श्राद्धसंपदि ।
स्वजात्युत्कर्षतो ग्राह्याः स्वस्वजात्युद्भवाश्च वा ॥

आचार्यलक्षणप्रोक्तलक्षणा न तु निन्दिताः ।
न ब्राह्मणं परीक्षेत दैवकर्मणि धर्मवित् ॥

पित्र्ये कर्मणि तु प्राप्ते परीक्ष्येत प्रयत्नतः ।
उपकारवियुक्ताय दत्तं यत् तद्धि सात्त्विकम् ॥ 45

शिवज्ञानार्थविदुषे बहुविद्याय यद् द्विजाः ।
दरिद्राय प्रदत्तं यत् सात्त्विकं हृष्टचेतसा ॥

शिवशास्त्रविहीनाय यत्तु पूर्वोपकारिणे ।
समृद्धाय च यद्दत्तं तत्सर्वं राजसं मतम् ॥

संबन्धिने च यद्दत्तमव्रतस्थाय सुव्रताः ।
फलार्थिभिश्च रात्रौ च तद्दानं राजसं मतम् ॥

शिवार्चनादिहीनाय शिवज्ञानापहारिणे ।
दीयते तस्करायापि तद्दानं तामसं स्मृतम् ॥

सरोषमपसव्यं च यैश्च युक्तमवज्ञया ।
सेवकाय च यद्दत्तं तद्दानं तामसं स्मृतम् ॥ 50

कल्पस्त्वेवं समाख्यातस्त्वनुकल्पश्च कथ्यते ।
मातामहो मातुलश्च स्वस्रीयः श्वशुरो गुरुः ॥

दौहित्रो विट्पतिर्बन्धुर्ऋत्विग्याज्योऽपि वा मताः ।
व्रतस्थमपि दौहित्रं श्राद्धे यत्नेन भोजयेत् ॥



अलाभे त्वथ भिक्षूणां भोजयेद् ब्रह्मचारिणम् ।
श्राद्धं कृत्वा परश्राद्धं यस्तु भुञ्जीत मोहितः ॥

पतन्ति पितरस्तस्य लुप्तपिण्डोदकक्रियाः ।
पुनर्भोजनमध्वानं भाराध्ययनमैथुनम् ॥

दानं प्रतिग्रहं होमं श्राद्धं भुक्त्वाष्ट वर्जयेत् ।
श्राद्धार्थे वरणं कृत्वा न प्रयच्छति यः पुमान् ॥ 55

तस्मै प्रार्थयते सोऽयं रौरवं नरकं व्रजेत् ।
प्रणीतश्राद्धतन्त्रो यो न भुङ्क्ते श्राद्धकर्मणि ॥

सोऽयं नरकमाप्नोति कुम्भीपाकं न संशयः ।
त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्वरम् ॥

श्राद्धे त्रीणि पवित्राणि सकुशाः कुतपास्तिलाः ।
सैन्धवं लवणं चैव तथा मानससंभवम् ॥

पवित्रे परमे ह्येते प्रत्यक्षमपि नित्यशः ।
रामठं च प्रशस्तं स्यादशुष्कव्यञ्जनानि च ॥

यत् किंचित् पच्यते गेहे भक्ष्यं वा भोज्यमेव वा ।
अनिवेद्य न भोक्तव्यं पिण्डार्थं न कदाचन ॥ 60

कोद्रवं लवणं सर्वं तथा जम्बूफलानि च ।
कूश्माण्डालाबुवार्ताकं माहिषं क्षीरमेव च ॥

बीजपूरकमाषाणि मरीचिं पिप्पलीमपि ।
कृतं च लवणं सर्वं वंशाग्रं च विवर्जयेत् ॥

वर्ज्यं च लोहितं सर्वं हित्वा कुङ्कुममेव च ।
आरक्ता ये च निर्यासाः प्रत्यक्षलवणानि च ॥

कुलत्थं पादसंस्पृष्टं शुक्लं पर्युषितं च यत् ।
पिण्याकं मथितं चापि तथातिलवणं च यत् ॥

हस्तदत्तास्तु ये स्नेहाल्लवणं व्यञ्जनानि च ।
दातारं नोपतिष्ठन्ते भोक्ता भुङ्क्ते च किल्बिषम् ॥ 65

निरङ्गुष्ठं च यच्छ्राद्धं बहिर्जानु च यद्धुतम् ।
बहिर्जानु च भुक्तं यत् सर्वमेवासुरं भवेत् ॥

दानं प्रतिग्रहो होमो भोजनं बलिरेव च ।
साङ्गुष्ठेन तथा कार्यमासुरं स्यात् तथान्यथा ॥

अन्तर्जानु विशेषेण तथैवाचमनं भवेत् ।
दर्भाः पवित्रं पूर्वाह्णे हविष्याणि च सर्वशः ॥

विनियुक्तास्तु ये श्राद्धे दैवे वा मांसमुत्सृजेत् ।
यावन्ति पशुरोमाणि तावन्नरकमृच्छति ॥

यो वेष्टितशिरो भुङ्क्ते यश्च वै दक्षिणामुखः ।
सोपानत्कश्च यो भुङ्क्ते तद्वै रक्षांसि भुञ्जते ॥ 70

मृण्मयेषु च पात्रेषु श्राद्धे यो भोजयेत् पि॒न् ।
देशिकेनान्नदाता च भोक्ता च नरकं व्रजेत् ॥

घृतसंपृक्ताभिरद्भिश्च प्रोक्षणं तु विशिष्यते ।
नाभेरधश्च संस्पर्शं कर्मयुक्तो विवर्जयेत् ॥

आयुः पुत्रो धनं प्रज्ञा सौभाग्यमतुलं यशः ।
मित्राण्यारोग्यसंपच्च भवे छ्राद्धादनिन्दितात् ॥

नित्यहानिर्मनस्तापो मित्रनाशः क्षयश्श्रियः ।
कलहो विप्रवासश्च निन्दितश्राद्धतो भवेत् ॥

मौतिको ब्रह्मचारी च श्रेष्ठोऽसौ श्राद्धकर्मणि ।
शैवं सन्तानिकं लब्ध्वा पितृदेवार्थमिष्टदम् ॥ 75

नैष्ठिकं त्वतिथित्वेन लब्ध्वा सीदति कः पुमान् ।
चतुर्वेदार्थविदुषां ब्राह्मणानां महात्मनाम् ॥

आचार्येण तु भुक्तेन कोटिर्भवति भोजिता ।
लक्षं तु साधके भुक्ते दीक्षितेऽयुतमेव तु ॥

समयस्थे सहस्रं स्यात् शतं माहेश्वरे नरे ।
साधकद्वितयं दैवे पित्र्यं देशिकत्रयम् ॥

संभवे कथितं श्राद्धे सर्वे सर्वत्र वा मताः ।
ईशस्सदाशिवश्शान्तश्शिवश्राद्धे प्रकीर्तिताः ॥

रुद्रोऽनन्तश्च कथितो विश्वेदेवा इति द्विजाः ।
दीक्षितानाममी प्रोक्ता रुद्रांशानामथोच्यते ॥ 80

स्कन्दचण्डगणेशानास्त्रयः पित्रर्थमीरिताः ।
तत्र नन्दिमहाकालौ द्वौ गणौ द्वितये स्थितौ ॥

तृतैस्तैर्निखिलं तृप्तं शिवान्तं च भवेद्भुवि ।
पञ्चाभावो यदा तत्र तदा तद्द्वयकल्पना ॥

बाहुमूलशिरस्स्थाने भवेत् त्रितयकल्पनम् ।
एकत्रान्यत्र कर्तव्यं स्थानमंसद्वयं द्वयोः ॥

एकत्र बाहुयुग्मेन सह वा पञ्च कल्पयेत् ।
षड्दैवतं गृहस्थानां लिङ्गिनां तु त्रिदैवतम् ॥

इत्येवमभिसंधाय श्राद्धकर्म समाचरेत् ।
निमन्त्रयीत पूर्वेद्युर्यथावृद्धमतन्द्रितः ॥ 85

वृद्धान् संस्पृश्य जङ्घे द्वे समानान् करपल्लवौ ।
यवीयसः प्रियोक्त्या तु समाश्वास्य क्षणेदमून् ॥

ताम्बूलदानसहितं श्राद्धकृद्देशिकोत्तमः ।
वसेयू रजनीं तां च स्मरन्तः परमेश्वरम् ॥

संयम्य चेन्द्रियग्राममनुगृह्यानुकम्पया ।
अन्येद्युः स्नानपूजादिक्रिया निर्वर्त्य तानथ ॥

व्याहरेदपराह्णे तु कृतस्नानादिकर्मणः ।
अभ्युत्थानासनाद्येन स्वागतेनागतानथ ॥

संभाव्य पादशौचाय कुर्यान्मण्डलकानि तु ।
सुसमे गोमयाम्भोभिस्सुप्रलिप्ते गृहाजिरे ॥ 90

समन्ताद्दक्षरेखाभिराकीर्णरदवीपदे ।
द्वे चतुष्कोणके प्राच्यां प्रतीच्यां द्वे सुवर्तुले ॥

दक्षिणोत्तरसंस्थाने हस्तमात्रे तदन्तरे ।
प्रतिमण्डलमग्रे चावटः स्याद्द्वादशाङ्गुलैः ॥

मातृश्राद्धे पितृश्राद्धे मण्डलं चावटं तु वा ।
कल्पयेदेव पित्रर्थमर्घ्यं पात्रेषु पञ्चसु ॥

गन्धपुष्पकुशाम्भोभिर्विद्याङ्गैर्मन्त्रसंयुतैः ।
देवार्थं यवसंयुक्तैः पित्रर्थं तिलसंयुतैः ॥

अभ्युक्ष्यार्घ्याम्भसा मन्त्रैर्विद्याङ्गैरभिमन्त्रयेत् ।
पुरुषेण च वस्त्राणि गन्धं हृदयमन्त्रतः ॥ 95

पुष्पाणि ब्रह्मशिरसा शिखया धूपदीपके ।
अनुक्तमन्यच्छाद्याङ्गं हृदयेनाभिमन्त्रयेत् ॥

एवं द्रव्याणि संशोध्य ततः कर्म समाचरेत् ।
साग्रयोरवकीर्याथ यवान सद्वृत्तयोस्तिलान् ॥

तिर्यङ् मध्ये कुशान्न्यस्या मृत्पिण्डं दक्षिणे न्यसेत् ।
विद्याङ्गाक्षेण दक्षस्थं मण्डलं साश्रमर्चयेत् ॥

सुगन्धैः श्वेतपुष्पाद्यैर्विद्याङ्गहृदयेन तु ।
सौम्यस्थं प्रणवाद्येन स्वस्वनाम्ना समन्वितम् ॥

स्वाहान्तेनापसव्यस्थयज्ञसूत्रेण पश्चिमे ।
मण्डले करपृष्ठेन स्वधान्तेन समर्चयेत् ॥ 100

पात्रेभ्यः पृथगादायार्घ्योदकं पादयोः क्रमात् ।
दत्त्वार्घ्यं मृदमादाय पादौ प्रक्षाल्येदनु ॥

सौम्यमण्डलयोरेवमेषां दत्त्वा सुशीतलैः ।
तोयैराचमनं पश्चादाचान्तसंप्रवेश्य तु ॥

उपलिप्ते शुचौ देशे दक्षिणे प्रणवान्विते ।
आसनेषु सुधौतेषु ज्ञात्वा तानुपवेशयेत् ॥

ततः श्राद्धं करिष्येऽहमिति तान् प्रार्थयेदथ ।
कुरुष्वेत्यभ्यनुज्ञातो दद्याद्दर्भासनं द्वयोः ॥

न तु हस्तेषु दातव्यं पितॄणां विश्वदेवयोः ।
उदगग्रमजातेन सव्ये कृत्वोत्तरीयकम् ॥ 105

आवाहयामीति वदेदुक्तस्त्वावाहयेति तैः ।
आवाहयेदनुज्ञातः स्वनाम्ना प्रणवादिना ॥

स्थापनादि त्रयं कृत्वा वामदेवेन मन्त्रवित् ।
अथ रक्षार्थमादाय यवानवकिरेत् परि ॥

प्रदक्षिणान्तरेणैव दद्यादर्घ्यमथाञ्जलौ ।
रूपिणा संनिधानाय द्वितयस्य सकृत् सकृत् ॥



प्रतिगृह्य तदर्घ्यं तु पात्रे संस्थाप्य तद्भुवि ।
जानुभ्यामवनौ स्थित्वाघोरेणाभ्यर्चयेद्यवैः ॥

पद्भ्यां प्रभृति विश्वाङ्गमाक्रम्याक्रम्य सादरम् ।
गन्धैरालिप्य सर्वाङ्गं भूषयेत्पुष्पदामभिः ॥ 110

वामदेवाणुना धीमान्देयो धूपोऽपि रूपिणा ।
दीपं च तेन संदद्यादीशानेन पवित्रकम् ॥

वस्त्रं प्रावरणोपेतमङ्गुलीयकमादरात् ।
तदङ्गमपरं दद्यादुपवीतिक्रमेण तु ॥

कृत्वो ततोऽपसव्यं तु पितॄणामप्रदक्षिणम् ।
कुशांस्तु द्विगुणं दत्त्वा सद्योजातेन मन्त्रतः ॥

आवाहयेदनुज्ञातः पितॄंस्तत्तन्मनुं स्मरन् ।
स्थापनादि त्रयं कृत्वा वामेनैवाप्रदक्षिणम् ॥

रक्षां तिलैरथेशेन दद्यादर्घ्योदकं पुनः ।
त्रयाणां संनिधानार्थमघोरेणाञ्जलौ पृथक् ॥ 115

पूर्ववत्प्रतिगृह्यार्घ्यं स्थापयेदञ्जलौ स्थितम् ।
भूमिष्ठजानुरीशेन शिरसः प्रभृति क्रमात् ॥

तिलैरभ्यर्चयेद्वामदेवमन्त्रमनुस्मरन् ।
गन्धाद्यं धूपदीपौ च रूपिणा दापयेत्ततः ॥

ईशानेन पवित्राद्यमपसव्यं स्वधान्तकम् ।
पूर्णमस्त्विति वक्तव्यं पूर्णमस्त्विति तैरपि ॥

ततस्तां संस्रवांस्तेषां पात्रे कृत्वा विधानतः ।
पितृस्थानमसीत्येवं न्युब्जं पात्रमधो न्यसेत् ॥

सौवर्णं राजतं पात्रं ताम्रजं दलसंभवम् ।
भाजनं शुद्धमादाय भोजनायोपपादयेत् ॥ 120

हस्तप्रक्षालनायापो दत्त्वा भूयश्च शोधयेत् ।
पङ्क्तिदोषनिवृत्त्यर्थं कृत्वा तु परिहारकान् ॥

सर्वपाकविशुद्ध्यर्थं शिवाग्न्याहुतिपूर्वतः ।
शिवानले करिष्येऽहं पृच्छेद्धोममिति द्विजाः ॥

कुरुष्वेत्यभ्यनुज्ञातो वह्नौ होममथाचरेत् ।
सोमाय पितृमच्छब्दं चतुर्थ्यन्तं स्वधा नमः ॥

ततो यमायेत्युक्त्वार्याङ्गिरसे ते स्वधा नमः ।
उक्त्वाग्नये ततः कव्यवाहनाय स्वधा नमः ॥

हुतशेषं प्रदद्यात्तु भोजनेषु नरं स्मरन् ।
पित्रर्थं चैव पिण्डार्थं न दद्याद्विश्वदेवयोः ॥ 125

अन्नमिष्टं हविष्यं च दद्यादक्रोधनो नरः ।
दद्यात्तु मधुरान्नं तु पुरुषेण घृतप्लुतम् ॥

संस्पृश्याघोरमन्त्रेण तत्पात्रमभिमन्त्रयेत् ।
पवित्रीकरणायेति ततस्सव्यमधोमुखम् ॥

तदङ्गुष्ठं स्वहस्तेन गृहीत्वान्ते निवेश्य च ।
गुह्यमन्त्रं जपेद्वाथ मृत्युजिन्मन्त्रमेव वा ॥

अमृतत्वाय परितः पाणिना भ्रामयेज्जलम् ।
आपोशनार्थमाद्येन प्रदद्यात् पाणिपङ्कजे ॥

शुभं भुञ्जीध्वमित्युक्ते भुञ्जीरंस्तेऽपि वाग्यताः ।
अतिथिं भोजयेच्छ्रद्धया तत्काले न विचारयेत् ॥ 130

देवो देवी गुहो विष्णुर्धर्मस्साक्षाच्छरीरवान् ।
चरन्त्यतिथिरूपेण तस्मात् तान्न विचारयेत् ॥

जपन्नीशानमातिष्ठेदातृप्तेरुदगाननः ।
तृप्तास्स्थेति भृताश्चस्सन्तृप्तास्स्म इति कीर्तिते ॥

तदन्नं प्रक्षिपेद्भूमौ सकृदद्भिस्समन्वितम् ।
उच्छिष्टसन्निधौ कुर्याद्गोमयेनैव मण्डलम् ॥

कुशानास्तीर्य दक्षाग्रानजातेन तिलांस्तथा ।
वामेन तिलसंयुक्तं सर्वौदनसमन्वितम् ॥

दक्षिणाभिमुखो भूत्वा पिण्डत्रितयमुद्धरन् ।
मध्वाज्यतिलसंयुक्तं भूमिष्ठस्सव्यजानुना ॥ 135

दद्यादुपरि दर्भाणां क्रमादीशादिशम्बरैः ।
विधाय वारिणो धारां वामदेवमुदीरयन् ॥

क्षौमं कार्पाससूत्रं वा दद्याद्वस्त्रार्थमञ्जनम् ।
संपूज्य गन्धपुष्पाद्यैः प्रणिपत्य क्षमापयेत् ॥

क्षमध्वमिति संप्रार्थ्य पितॄनाचम्य मन्त्रवित् ।
पूर्वमाचमनं त्रिभ्यो द्वाभ्यां दद्यादनन्तरम् ॥

प्रदद्याच्छुद्धहस्तेभ्यस्ताम्बूलं चास्यशुद्धये ।
सकर्पूरं तदङ्गं यद् गृहोपकरणं तथा ॥

गोभूदास्यादिकं दद्याद्दक्षिणां तेषु तृप्तये ।
वर्द्धनीमुदकापूर्णां श्राद्धकृद्दक्षिणाननः ॥ 140

धृत्वा पठेत् स्वधाकारं वदेयुर्वाच्यतामिति ।
ईशादित्रितयं पश्चात् चतुर्थ्यन्तमुदीरयेत् ॥

स्वधान्तं श्राद्धकृत्पश्चादीशाद्यास्सर्व एव च ।
अस्तु स्वधेति ब्रूयुस्ते भूमौ सिञ्चेत्ततो जलम् ॥

एवं त्रिवारं कर्तव्यं पठेयुस्तदनन्तरम् ।
देवा रुद्राश्च तृप्यन्तामित्येते च स्वयं पठेत् ॥

दातारो नोऽभिवर्धन्तां शैवसन्ततिरेव च ।
इत्युक्ते तैरिदं वाक्यं वक्तव्यं द्विजसत्तमाः ॥

पुनश्चैवं वदेत् कर्ता उत्तरे श्राद्धकृत्ततः ।
श्रद्धा च नो मा व्यवगाद् बहुदेयं च नोऽस्त्विति ॥ 145

इत्युक्त्वा च प्रिया वाचः प्रणिपत्य क्षमापयेत् ।
यस्मिंस्ते संस्रवाः पूर्वमर्घ्यपात्रे निवेशिताः ॥

पितृपात्रं तदुत्तानं कृत्वा पश्चाद्विसर्जयेत् ।
सद्योजातेन मन्त्रेण पितृपूर्वमनुव्रजेत् ॥

अन्नशेषैः किं क्रियतामित्युक्ते श्राद्धकारिणा ।
इष्टैस्सहोपभोक्तव्यमिति ते ब्रूयुरिष्टदाः ॥

पिण्डांश्च गोषु विप्रेभ्यो दद्यादग्नौ जलेऽपि वा ।
प्रक्षिपेत् कुलपत्नी वा मध्यमं पिण्डमश्नुयात् ॥

ततोऽस्यां जायते पुत्रो रुद्रांशो लक्षणान्वितः ।
धीरश्श्रीमान्यशस्वी च विद्यासन्तानपारगः ॥ 150

गर्भाधानादिके विद्वान् संस्कारे षोडशात्मके ।
वृद्धौ नान्दीमुखे नैव पितॄन् श्राद्धेऽनुतर्पयेत् ॥

नान्दीमुखे तथान्यस्मिन् सर्वमङ्गलकर्मणि ।
दद्याच्च दधिकर्कन्धुमिश्रान् पिण्डान्यवैः क्रियाः ॥

अपसव्यं न कुर्वीत न कुर्यादप्रदक्षिणम् ।
प्रदद्यात् प्राङ्मुखः पिण्डान् वृद्धिश्राद्धेषु नित्यशः ॥

प्रागग्रेषु च दर्भेषु पिण्ड दद्यात्तु वृद्धिषु ।
अनिष्ट्वा तु पितॄन् श्राद्धे सर्वकर्म न कारयेत् ॥

नित्यश्राद्धमदैवं स्यादेकोद्दिष्टं तथैव च ।
एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकम् ॥ 155

आवाहनाग्निकरणरहितमपसव्यवत् ।
उत्तिष्ठताभित्यक्षय्यस्थाने तेषां विसर्जनम् ॥

अभिरम्यतामिति वदेद् ब्रूयुस्तेऽभिरताः स्महे ।
एको वाथ नरो ग्राह्यो निमित्तस्य च संमतः ॥

स्वनाम्ना सर्वकर्म स्यात् प्राग्वत् किं तु मद्भवेत् ।
गोभूहिरण्यसद्वेश्मवाहनाच्छादनादिकम् ॥

वस्त्राणि कांस्यपात्राणि धान्यानि विविधानि च ।
आसनं तालवृन्तं च छत्रं पादुकसंयुतम् ॥

उपधानयुतां शय्यां तदीयमपरं च यत् ।
दद्याद्दक्षिणयोपेतं जलदानयुतं पृथक् ॥ 160

आशौचान्तदिने त्वेतदेकोद्दिष्टं मद्भवेत् ।
नवश्राद्धममन्त्रं तु पिण्डोदकविवर्जितम् ॥

अनूदकमधूपं च गन्धमाल्यविवर्जितम् ।
पिण्डोदकं समाख्यातं पिण्डपात्रगतस्य च ॥

जलस्य धारया नेष्टं पिण्डोर्ध्वे भ्रमणं द्विजाः ।
प्रणामं न च कुर्वीत स्वधाकारं तथैव च ॥

नैवाग्नौ करणं तत्र प्रश्ने विप्रोत्तमान् प्रति ।
अग्नौ करिष्य इत्येदकोद्दिष्टेष्वपि स्मृतम् ॥



हविष्यान्नेन ते मासं कसरं पायसेन तु ।
तिष्ठन्ति युक्ताशीर्वादाः स्तुवन्ति च पितामहाः ॥ 165

रक्तशाल्यादिभक्तैश्च सव्यञ्जनपरिष्कृतैः ।
तृप्यन्ति पितरो दत्तैर्मासवृद्ध्या न संशयः ॥

गयायां विहितं श्राद्धं सर्वमानन्त्यमुच्यते ।
गन्धोदकतिलैर्युक्तं कुर्यात्पात्रं चतुष्टयम् ॥

अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ।
तन्नामभिरघोरादिपूर्वकैर्मन्त्रपश्चिमैः ॥

ओमित्येव पितश्चेति शेषं पूर्ववदाचरेत् ।
पात्रत्रयं तु पित्रर्थं निमित्तार्थं परं मतम् ॥

सपिण्डीकरणं त्वेतदेकोद्दिष्टं क्रिया अपि ।
कर्तव्यं सर्वकर्मार्थं यथापूर्वमुदाहृतम् ॥ 170

स्वनाम्ना कर्म कर्तव्यं सपिण्डीकरणात्पुरा ।
ईशादिनामभिः पश्चात्सर्वकर्म समाचरेत् ॥

यस्सपिण्डीकृतं प्रेतं पृथक् पिण्डेन योजयेत् ।
पितृघ्नो जायते कर्ता मातृहा च भवेद्ध्रुवम् ॥

आयुष्कामो लभेदायुः धनकामो वसूनि च ।
विद्याकामोऽमलां विद्यां रतिकामो वरस्त्रियः ॥

पुत्रान् सौभाग्यमारोग्यं यशो वीर्यं श्रियस्सुखम् ।
एतानि लभते नित्यं श्राद्धदो नावसीदति ॥

प्रमीतस्य पितुः पुत्रैः श्राद्धं देयं हि दीक्षितैः ।
ज्ञातिबन्धुसुहृच्छिष्यैर्भृत्याचार्यैश्च दीक्षितैः ॥ 175

पुत्राभावे तु पत्नी स्यात् पत्न्यभावे तु सोदरः ।
योग्यो ह्यनुपनीतोऽपि श्राद्धकर्मण्यदीक्षितः ॥

कृतचूडस्तु कुर्वीत ह्युदकं पिण्डमेव च ।
स्वधाकारं प्रयुञ्जीत मन्त्रोच्चारं न कारयेत् ॥

एकवस्त्रो न भुञ्जीत न कुर्याद्देवतार्चनम् ।
दानमाचमनं होमं भोजनं देवतार्चनम् ॥

प्रौढपादेन कुर्वीत स्वाध्यायं पितृतर्पणम् ।
आसनारूढपादश्च जान्वोर्वा जङ्घयोस्तथा ॥

परकीयप्रदेशे तु पितॄणां निर्वपेत्तु यः ।
तद्भूमिस्वामिपितृभिः श्राद्धकर्मोपहन्यते ॥ 180

अटवी चाकृतारण्यं नदीतीराणि यानि च ।
सर्वाण्यस्वामिकान्येव तेषु श्राद्धादिकं नयेत् ॥

चण्डालश्च वराहश्च कुक्कुटश्च तथैव च ।
रजस्वला च षण्डश्च नेक्षेरन्नश्नतो द्विजान् ॥

होमे प्रदाने भोज्ये च यदि तैरपि वीक्ष्यते ।
दैवे हवींषि पित्र्ये च तद्गच्छत्ययथातथम् ॥

वृद्धश्रावकनिर्ग्रन्थाः शाक्या जीवन्तिकास्तथा ।
ये धर्मान्नानुवर्तन्ते ते च नग्नादयो मताः ॥

अन्नं पश्येयुरेते तु यदि वै हव्यकव्ययोः ।
उत्स्रष्टव्यं प्रधानार्थं संस्कारश्चापदि स्मृतः ॥ 185

दिवसस्याष्टमे भागे मन्दीभूतदिवाकरः ।
स कालः कुतपः प्रोक्तस्तस्मिन् पैतृकमाचरेत् ॥

अथवान्यप्रकारेण कुतपस्त्विह कथ्यते ।
शिवोक्तिश्शौचमक्रोधस्तत्पराः पात्रवह्नयः ॥

तिलो दर्भश्च कालश्च नवैते कुतपः स्मृताः ।
पिता पितामहश्चैव प्रपितामह एव च ॥

गणोऽन्यस्सर्वसामान्यो न स्वपित्रादयो मताः ।
क्रमादीशादयः प्रोक्तास्तद्वन्मातामहादयः ॥

स्वेन भर्त्रा समं श्राद्धं माता भुङ्क्ते सुधासमम् ।
पितामही तथा स्वेन तथैव प्रपितामही ॥ 190

पिण्डदेयास्त्रयः पिण्डानेवं कुर्वन्न मुह्यति ।
मातृश्राद्धं तु युग्मे स्यात् सदैवं प्राङ्मुखैस्सदा ॥

मातृश्राद्धं तु पूर्वं स्यात् पितॄणां तदनन्तरम् ।
अपुत्रायां मृतायां तु पतिः कुर्यात् सपिण्डताम् ॥

एकोद्दिष्टं तु कर्तव्यं यावत्पित्रोस्सपिण्डता ।
सपिण्डीकरणादूर्ध्वमेकोद्दिष्टं निवर्तते ॥

न पृथक् पिण्डदानं तु तस्मादूर्ध्वं विधीयते ।
अपुत्रका मृताः केचित् स्त्रियो वा पुरुषाश्च ये ॥

तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम् ।
पित्रादित्रयपत्नीनां भोज्या मात्रे वृता द्विजाः ॥ 195

क्षीणामेवाथवा दद्यान्मातृश्राद्धे द्विजोत्तमाः ।
स्वगोत्राद् भ्रंशते नारी उद्वाहात् सप्तमे पदे ॥

स्वामिगोत्रेण कर्तव्या तस्याः पिण्डोदकक्रिया ।
चतुर्थीहोममन्त्रैस्तु मांसमज्जादिभिस्सह ॥

एकत्वं सा गता भर्त्रा ततस्तद्गोत्रभागिनी ।
पाणिग्राहणिका मन्त्राः पितृगोत्रापहारिणः ॥

आसुरादिविवाहेषु विशेषः कश्चिदिष्यते ।
क्षीणामन्यस्य भर्तुर्वै यद्गोत्रं तेन निर्वपेत् ॥

यदि त्वक्षतयोनिस्सा त्वन्यपक्षं प्रतिष्ठिता ।
तद्गोत्रेण तु दातव्यं पिण्डं श्राद्धं तथोदकम् ॥ 200

जनन्यां संस्थितायां तु सपिण्डीकरणादिकम् ।
पैतृकं तु भवेद् गोत्रमूर्ध्वं तु पितृदैवतम् ॥

पितृगोत्रं समुत्सृज्य न कुर्याद्भर्तृगोत्रतः ॥

इति उत्तरकामिकाख्ये महातन्त्रे शैवश्राद्धविधिः एकोनत्रिंशतितमः पटलः ॥

---

## ॥ प्रायश्चित्तविधिः ॥

प्रायश्चित्तविधिं वक्ष्ये श्रूयतां द्विजसत्तमाः ।
विधिर्निषेध इत्येवं चोदना द्विविधा मता ॥

अनुष्ठितायां तस्यां स्याद्यथावद्धर्मसंग्रहः ।
वैपरीत्ये स्वधर्मस्त्यागात्तेन पापं महद्भवेत् ॥

तेनाधोगमने प्राप्ते कर्तुरूर्ध्वं परं पदम् ।
यत्कर्म नयतीत्युक्तं प्रायश्चित्तमिहागमे ॥

प्रकृष्टायास्समानत्वाद्दोषः प्रायः प्रकीर्तितः ।
चिदात्मा कथितश्शास्त्रे तरणं तु तकारतः ॥

सदोषस्यात्मनो यस्मात्तरणं पततो ह्यधः ।
तस्मात्प्रकीर्तितं विप्राः प्रायश्चित्तं शिवाश्रिताः ॥ 5

विधिर्निषेधो वा नास्ति यस्मिन् कर्मण्यनुष्ठिते ।
तस्मिन् पुण्यं च पापं वा नेति शास्त्रार्थनिश्चयः ॥

आवश्यके कृते पूर्वमुखेनैव प्रतिक्रिया ।
कर्तव्या पश्चिमास्येन कोणास्येन न वेति च ॥

प्रायश्चित्तं विभेदेन न शक्यं वक्तुमग्रजाः ।
कर्मणामप्यनन्तत्वाद् ग्रन्थविस्तारदोषतः ॥

ततो निगद्यते लेशात् प्रायश्चित्तं सनातनम् ।
स्नानं जपश्शिवध्यानं प्राणायामः प्रदक्षिणम् ॥

लिङ्गबेरागमादीनां स्वगुरोर्देशिकस्य च ।
शिवज्ञानरतानां च दर्शनं तन्निरीक्षणम् ॥ 10

नमस्कारादयमेतेषां शिवधामनिषेवणम् ।
शिवाग्निगुरुपूजा च भोजनं दीक्षितात्मनाम् ॥

पुण्यतीर्थावगाहश्च पञ्चगव्याशनं ततः ।
शिवास्त्राम्भस्ततो दीक्षा पुण्यक्षेत्राधिवासनम् ॥



उपवासश्चरोर्भुक्तिः पात्रशेषाशनं च यत् ।
शान्तिश्च शान्तिहोमश्च दिशाद्यः संहिताहुतिः ॥

मूर्तिहोमो घृतक्षौद्रक्षीरस्नानाद्यनेकधा ।
एकाहाद्युत्सवश्शीतकुम्भो वैशेषिकार्चनम् ॥

एवमादि समुद्दिष्टं प्रायश्चित्तं सनातनम् ।
विभज्य लक्षणं तेषां केषांचिदिह कथ्यते ॥ 15

पञ्चगोचरसंभूतश्शिवद्विजकुलोद्भवः ।
सोष्णीषस्सोत्तरीयश्च नवाम्बरसमावृतः ॥

पञ्चाङ्गभूषणोपेतो देशिको निष्कृतिं चरेत् ।
प्रायश्चित्तेऽद्भुते वापि शान्तिं सद्यस्समाचरेत् ॥

दिनपक्षर्क्षलग्नादिप्रेक्षणं नात्र संमतम् ।
प्रायश्चित्तं कृतं सद्यो यदि श्रेष्ठं प्रकीर्तितम् ॥

मध्यं सप्तदिनादर्वाक् पक्षाद्वादधमं भवेत् ।
तस्मान्मासावसानं तु हीनमित्यभिधीयते ॥

मासोर्ध्वं नैव कर्तव्यं यदि शान्त्या समाचरेत् ।
लिङ्गपीठविमानादिप्रायश्चित्तादिकं नयेत् ॥ 20

आदौ मध्ये तदन्ते वा सन्धानार्थं द्विजोत्तमाः ।
प्रायश्चित्ते समुत्पन्ने कर्ता वा देशिकोऽथवा ॥

स्थानिको वा यदा कुर्युरौदासीन्यं क्रियां प्रति ।
विद्याभावान्मनःक्षोभाद्रागद्वेषादिहेतुभिः ॥

पापकर्माभिघाताद्वा एते मद्द्वेषिणो नराः ।
नृपभङ्गाय जातास्ते राष्ट्रविक्षोभकारिणः ॥

अनुशास्याश्च मद्भक्तैर्वीतरागैस्तपस्विभिः ।
देवस्वहारिणो मर्त्या येऽप्येवं शासनार्हकाः ॥

सश्रद्धं निष्कृतिं कुर्युर्मदीयास्ते नरोत्तमाः ।
राज्ञो हितकराः पुण्यकर्माणो राष्ट्रपोषकाः ॥ 25

तद्ग्रामर्द्धिकराःस्थानमत्पूजावृद्धिहेतवः ।
इति ज्ञात्वा तु यत्नेन प्रायश्चित्तं समाचरेत् ॥

अथ मन्त्रजपं कुर्यात् स्नानं चोदितभस्मना ।
मन्त्रकाय उदग्वक्त्रः पूर्वास्यः साक्षमालिकः ॥

शिवाणुमथवाघोरं यद्वा पाशुपतं वरम् ।
अघोरास्त्रं शिवास्त्रं वा ब्रह्माण्यङ्गानि वा पुनः ॥

मेलामन्त्रं तु यद्वान्यं परार्धान्तं शतादितः ।
जपेत्तदनुरूपेण मितग्रासो हविष्यभुक् ॥

अनाहारोऽथ भिक्षाशी चरुभुक् क्षीरपोऽपि वा ।
शाकयावकपिण्याककन्दमूलफलाशनः ॥ 30

स्मरंस्तद्देवतारूपं जपंस्तस्मै निवेदयेत् ।
जप एवं समाख्यातः प्रदक्षिणमथोच्यते ॥

नानाविधं तदाख्यातमन्तर्बाह्यविभेदतः ।
लिङ्गप्रासादयोर्मध्ये श्रेष्ठाश्रेष्ठं प्रकीर्तितम् ॥

अन्तर्मण्डलशालादावन्तः श्रेष्ठं प्रकीर्तितम् ।
गर्भे प्रदक्षिणं कर्तुं न शक्यं बहुदोषकृत् ॥

गर्भगेहे भवेल्लिङ्गच्छायानिर्माल्यसङ्करः ।
सोमसूत्रस्य मूलं च देवसामीप्यमेव च ॥

परिहृत्य कृतं सर्वं यदि सर्वफलावहम् ।
अन्तर्मण्डलदेशेऽपि सोमसूत्रं च विद्यते ॥ 35

प्रासादार्धप्रमाणं वा प्रासादसममेव वा ।
निर्माल्यसङ्करोऽपि स्याद्धामछाया च विद्यते ॥

परिहृत्य तु तत्सर्वं प्रदक्षिणमथाचरेत् ।
सव्यापसव्यमार्गेण कर्तव्यं वा प्रदक्षिणम् ॥

सव्यं चण्डप्रदेशः स्यादपरं सोमसूत्रतः ।
सव्यापसव्यमार्गेण मृदुगत्या समाचरेत् ॥

सव्यापसव्यमेवं स्यादन्तर्नित्योत्सवेऽपि च ।
छायाया लङ्घनं धाम्नो देवदेवोत्सवेऽपि च ॥

तत्कालकृतसेवस्य नैव दोषप्रदं भवेत् ।
तद्बाह्ये नैव दोषस्य प्रवेशोऽस्ति मनागपि ॥ 40

प्रयत्नोऽपि महान् बाह्ये बहूनि स्युः पदानि च ।
पदे पदेऽश्वमेधस्य फलं दशगुणं भवेत् ॥

अङ्गप्रदक्षिणं चान्यदुदयास्तमनान्तकम ।
अनयोः पुण्यमाहात्म्यं न शक्यं वक्तुमग्रजाः ॥

क्षेत्रमाहात्म्यतस्त्वेतदेवानन्तफलं भवेत् ।
एवं प्रदक्षिणं ख्यातं शिवाम्भस्तत्र कथ्यते ॥

कुम्भे वा कलशे वाथ स्थण्डिलोपरि संस्थिते ।
सूत्रवस्त्रसुवर्णाम्बुकूर्चचन्दनसंयुते ॥

शिवेनाङ्गैस्समभ्यर्च्य अम्भस्तत्स्थितोदकम् ।
शिवाम्भ इति निर्दिष्टमस्त्रोदं चास्त्रजापतः ॥ 45

ततः कृच्छ्रादयः प्रोक्ताः कृच्छ्रोऽन्यस्ततसंज्ञकः ।
अतिकृच्छ्रपराकौ द्वौ चान्द्रायणविधिस्ततः ॥

त्रिरात्रमेकभुक्तिस्स्यात् त्रिदिनं लङ्घनं भवेत् ।
एवं कृच्छ्रः समाख्यातः प्राजापत्य इति स्मृतः ॥

पिबेत्सोष्णं त्र्यहं वारि त्रिदिनं क्षीरभोजनम् ।
सोष्णमाज्यं त्र्यहं चाद्यात् त्रिदिनं केवलो यदा ॥

ततकृच्छ्रमिति ख्यातं त्वतिकृच्छ्रश्च कथ्यते ।
एकविंशतिनक्षत्रं त्रिपलं क्षीरभोजनम् ॥

अतिकृच्छ्रः समाख्यातः पराक इह कथ्यते ।
द्वादशाहनिराहारः पराक इति संस्मृतः ॥ 50

मासार्धं ग्रासवृद्धिस्स्याच्छुक्ले कृष्णे च ह्रासयेत् ।
चान्द्रायणविधिः प्रोक्तो जलेनैव जलात्मकः ॥

सायमाद्यन्तयोरह्नो सायं प्रातश्च मध्यमे ।
चरिष्णुरुपवासं च त्यजेत् भुक्तिचतुष्टयम् ॥

मध्यमद्वितयं वाथ तदर्धं दानमेव वा ।
उपवासः समाख्यातश्शान्तिस्त्वत्र निगद्यते ॥

मण्डपं तु शुभाशायामग्नौ वा पूर्ववर्त्मना ।
तन्मध्ये कुण्डमापाद्य वृत्तं हस्तमितं यथा ॥

शिल्पिनं च विसृज्याथ पुण्याहप्रोक्षणं नयेत् ।
देवं संशोध्य विधिना स्नपनं प्रत्यहं नयेत् ॥ 55

गन्धाद्यैः पुष्पकैरिष्ट्वा शान्तिकर्म समारभेत् ।
संस्कृत्य कुण्डं वह्निं च शिवं साङ्गं च तर्पयेत् ॥

अघोरमथवा शैवमस्त्रं पाशुपतं तु वा ।
अघोरास्त्रमथान्यं वा सुसिद्धं देशिकात्मना ॥

कर्णिकायां समभ्यर्च्य साङ्गं संतर्पयेदथ ।
समिदाज्यं च गव्यं च मधुरत्रयसंयुतम् ॥

तिलदूर्वाक्षतैर्युक्तं शुद्धान्नं वाथ पायसम् ।
सहस्रं वा तदर्धं वा शतमष्टाधिकं तु वा ॥

प्रत्यहं होमयेदेतैर्मन्त्रमादौ समुच्चरन् ।
स्वाहान्ते भगवन् सर्वक्षोभनाशपदं ततः ॥ 60

कुरुकुर्विति संयुक्तं प्रतिमन्त्रं दशान्तरम् ।
पञ्चाशदन्तरं वापि शतमन्त्रान्तरं तु वा ॥

पठन् होमं समाप्यैवं पूर्णामन्ते समाचरेत् ।
मुखवाससमायुक्तं ताम्बूलं च निवेद्य च ॥

कामिकादिशिवज्ञानं पञ्चदिक्षु व्यवस्थितम् ।
तत्तद्दिङ्मुखसंजातं पठेयुस्शास्त्रपारगाः ॥

प्राचि तत्पुरुषं घोरं दक्षिणे वाममुत्तरे ।
पश्चिमे जातमीशानं जपेयुस्तत्र दीक्षिताः ॥

ऋगाद्यध्ययनं कुर्युश्चत्वारो वेदपारगाः ।
स्तोतारो बहवो वैकः पठेयुः स्तोत्रसंहतिम् ॥ 65

तदर्थभावनोपेतास्संस्कृताश्शिवदीक्षया ।
एतत्सर्वं प्रकर्तव्यं स्नातैर्होमप्रवर्तकैः ॥

होमरक्षां च संगृह्य दत्त्वार्घ्यं च पराङ्मुखम् ।
निरोध्य तत्र देवेशं दद्यादन्तर्बहिर्बलिम् ॥

समाचम्य कृतन्यासः प्रविशेद्देवसंनिधिम् ।
होमकर्म निवेद्यास्मै प्रार्थयेद्दुरितक्षयम् ॥



एवं शान्तिस्समादिष्टा नवधा सा समीरिता ।
एकत्रिपञ्चसप्ताहनवाहैश्च द्विसप्तकैः ॥

पञ्चत्रिसप्तनक्षत्रैरविच्छिन्ना यतस्ततः ।
कुण्डे विसर्जनं नोक्तं देवस्याग्नेः पुरा विधेः ॥ 70

विसर्जनं तु वा देवे पावकस्य न सर्वथा ।
शान्तिरेवं समाख्याता शान्तिहोमो विधीयते ॥

स च द्विविध उद्दिष्टश्श्रेष्ठः पूर्वं निगद्यते ।
शुभाशास्वग्निदेशे वा मण्डपे समलंकृते ॥

स्थण्डिलं तत्र संकल्प्य तन्मध्ये विन्यसेद्घटम् ।
ससूत्रं सोदकं कूर्चवस्त्रहेमाम्बुजान्वितम् ॥

सितचन्दनदिग्धाङ्गं फलपल्लवसंयुतम् ।
परितः कलशानष्टौ वस्त्रकूर्चादिसंयुतान् ॥

विन्यस्य मध्यमे कुम्भे यजेत्पाशुपताह्वयम् ।
प्रणवासनमारूढं दुराधर्षं महाबलम् ॥ 75

पञ्चास्यं दशकर्णं च प्रतिवक्त्रं त्रिलोचनम् ।
दंष्ट्राकरालमत्युग्रं मुक्तनादं सुदुर्जयम् ॥

कपालमालाभरणं चन्द्रार्धकृतशेखरम् ।
केकराक्षं महामालानागाभरणलेलिहम् ॥

सूर्यकोटियुताभं च विघ्नसंघातमर्दकम् ।
भुजैर्दशभिरत्युग्रैर्भैरवास्त्रैस्समन्वितम् ॥

खड्गचापमहाशूलाभयपाशांश्च दक्षिणे ।
खेटबाणकपालांश्च वरप्रासौ च वामतः ॥

पिङ्गाभश्मश्रुसंयुक्तं तथाविभ्रशिरोरुहम् ।
ध्यात्वैवमुच्चरन् मन्त्रमावाह्यार्चनमारभेत् ॥ 80

ओं श्लीङ्कारसमायुक्तं पं श्रुं हुंफण्णमस्त्विति ।
प्रणवं वह्निदिग्भागे श्लीङ्कारं शाङ्करे यजेत् ॥

पङ्कारं नैर्ऋते भागे श्रुङ्कारं वायुगोचरे ।
ओङ्कारादिफडन्ताश्च वर्णाः स्थाने हृदादयः ॥

सर्वे पाशुपतोपेतहृदयादिसमन्विताः ।
फडन्तान् प्रणवोपेतान् वज्रादीन् कलशेषु तान् ॥

इष्ट्वा गन्धादिभिर्देवं नैवेद्यान्तं समर्चयेत् ।
तदग्रे हास्तिके वृत्तकुण्डे वा स्थण्डिलेऽपि वा ॥

संस्कृते पूर्ववत्पञ्चसंस्कारैस्संस्कृतेऽनले ।
देवं पाशुपतं साङ्गमावाह्याभ्यर्च्य तर्पयेत् ॥ 85

समिदाज्यतिलक्षीरसितदूर्वाचरूंस्ततः ।
सहस्रं वा तदर्धं वा शतमष्टोत्तरं तु वा ॥

प्रत्येकं जुहुयान्मन्त्रमुच्चरन् कर्म निर्दिशेत् ।
भगवन्दोषशान्तिं तु कुरुकुर्विति देशिकः ॥

अङ्गानि दश चास्त्राणि दश हुत्वा प्रतोषयेत् ।
पूर्णाहुतिं ततो दद्यादस्त्रं पाशुपतं स्मरन् ॥

प्रायश्चित्ताहुतिं हुत्वा मन्त्रं पाशुपतं स्मरन् ।
पुनः पूर्णां च ताम्बूलं दत्वार्घ्यं च पराङ्मुखम् ॥

कृत्वा व्याङ्गमाकर्मपर्यन्तं परिरक्षयेत् ।
प्रत्यहं वा तदुत्पाद्य तर्पयेदस्त्ररूपिणम् ॥ 90

अन्तर्बहिर्बलिं दत्वा समाचम्याणुविग्रहः ।
समर्पितक्रिये देवे त्वभीष्टं प्रार्थयेद्गुरुः ॥

कुम्भाद्देवं विसृज्याथ द्वादशान्ते नियोजयेत् ।
ततस्तत्कुम्भपानीयैः प्रोक्षयेदभितस्ततः ॥

होमो वा समिदाज्याद्यैः कुम्भसंस्थापनं विना ।
कर्तव्यश्शान्तिहोमोऽयं शान्त्युक्तदिनसंख्यया ॥

दिशाहोमं ततो वक्ष्ये द्विविधस्स उदाहृतः ।
प्रायश्चित्तार्थमन्योऽयं स्नपनाद्यङ्गभाग्भवेत् ॥

लिङ्गे वा प्रतिमायां वा पीठे प्रासाद एव वा ।
मण्टपे मालिकादौ वा वृक्षादेर्मूल एव वा ॥ 95

यदर्थं वर्तते प्रायश्चित्तं तस्य चतसृषु ।
दिक्षु कूटान् प्रपां वापि कृत्वा कुण्डचतुष्टयम् ॥

वेदाश्रं वा सुवृत्तं वा हस्तमात्रमितं यथा ।
स्थण्डिलं वा समापाद्य प्रोक्षयेदस्त्रवारिणा ॥

सर्वार्थं वा चतुर्दिक्षु प्रासादस्य तदाचरेत् ।
एकं वा कूटमापाद्य तत्र सर्वं समाचरेत् ॥

मध्यमे वेदिकायुक्तं कुम्भसंस्थापनाय च ।
अथैतद्यागशालायां कर्म सर्वं समापयेत् ॥

अथान्यत् कुण्डमैशान्यां ब्रह्माङ्गसहितस्य च ।
तर्पणार्थं महेशस्य कल्प्यं वा मुनिपुङ्गवाः ॥ 100

शिवं संपूज्य विधिवल्लिङ्गे वा स्थण्डिलादिके ।
तदग्रे संयजेदस्त्रं शिवाख्यं देशिकोत्तमः ॥

चतुर्वक्त्रं ज्वलत्केशं विद्युत्पुञ्जसमप्रभम् ।
चन्द्रखण्डसुमूर्धानं सचतुष्करपल्लवम् ॥

अशनिध्वनिसंयुक्तमसह्यं भीमविक्रमम् ।
द्वादशाक्षियुतं शक्तिशूलाभयवरान्वितम् ॥

ध्यात्वैवं गन्धपुष्पाद्यैः शिवास्त्रं स्वाणुनार्चयेत् ।
दक्षेऽघोरास्त्रमभ्यर्च्य पश्चात् पाशुपतं यजेत् ॥

सौम्ये प्रत्यङ्गिरा पूज्या तद्ध्यानमन्त्रमुच्यते ।
ओं ह्रींकारं ततः कृष्णवाससे चेति यत्पदम् ॥ 105

ततश्च सिंहवदने महावदन इत्यपि ।
महाभैरविवर्गे च सर्वशत्रुपदं ततः ॥

कर्मविध्वंसिनीत्येवं परमन्त्रपदं ततः ।
छेदिनीत्युद्धरेत्पश्चात् सर्वभूतदमन्यपि ॥

सर्वभूतांस्ततो बन्ध बन्धेति पदमुद्धरेत् ।
सर्वविघ्नानिति पदं छिन्धि छिन्धीति यत्पदम् ॥

सर्वव्याधि निकृन्तेति निकृन्तेति पदं च यत् ।
सर्वदुष्टांस्ततो भक्ष भक्षेति पदमुद्धरेत् ॥

ज्वालजिह्वे करालेतिपदं दंष्ट्रेपदं पुनः ।
प्रत्यङ्गिरेपदं पश्चाद् ह्रीं नमोऽस्त्विति यत्पदम् ॥ 110

ते स्वाहेत्युद्धरेदेष मन्त्रः प्रत्यङ्गिरात्मकः ।
प्रणवात् सप्तवर्गे ह्लिरः पञ्चदशाक्षरम् ॥

दशाक्षरा शिखा तस्मात् कवचं सप्तवर्णकम् ।
तथैव तस्मान्नेत्राणुश्चतुर्स्त्रिशद्विरक्षकम् ॥

त्रयोदशार्णा गायत्री सावित्री सप्तवर्णतः ।
नमःस्वाहावषड्वौषड्ढुंफड्युक्ता हृदादयः ॥

सिंहवक्त्रोग्रदंष्ट्राग्निसप्रभोर्ध्वशिखान्विताम् ।
कृष्णाञ्जननिभां वृत्तरक्तनेत्रत्रयान्विताम् ॥

वहन्तीं सव्यहस्ताभ्यां शूलं डमरुकं परम् ।
वहन्तीं वामहस्ताभ्यां मुण्डं शेषे तु पल्लवम् ॥ 115

कृष्णाम्बरधरां सास्रमांसास्यां नर्तने रताम् ।
मौक्तिकाभरणैर्युक्तां सर्वावयवभूषणाम् ॥

अट्टहासरवोपेतां कृष्णाजिनसमन्विताम् ।
ध्यात्वैवं गन्धपुष्पाद्यैरर्चयेत्परमेश्वरीम् ॥

अथवा पञ्चकुम्भांस्तु ससूत्रान् वस्त्रवेष्टितान् ।
गन्धोदकोदरान् कूर्चहेमपङ्कजसंयुतान् ॥

पृथक्स्थण्डिलकाधारान् सपिधानान् सपल्लवान् ।
चन्दनालिप्तदेहांस्तु विन्यस्य करकेण च ॥

तथाविधेन संयुक्तं तत्र मध्ये शिवाम्बिकाम् ।
प्रागुक्तया परितोऽस्त्राणि ततः प्रत्यङ्गिरामपि ॥ 120

इष्ट्वा विज्ञाप्य होमार्थं विशेषुः पावकालयम् ।
कुण्डं स्वकीयं संस्कृत्य पावकं च यथा पुरा ॥

स्वस्वदेवान् समावाह्य साङ्गान् गन्धादिना सह ।
तर्पयेयुर्यथान्यायं मूर्तिपा गुरुणा सह ॥

कुर्युश्चाध्ययनं मन्त्रजपं स्तोत्रजपादिकम् ।
प्राग्वत् समाहिताः स्वस्वदिक्षु सम्यग् व्यवस्थिताः ॥

प्लक्षोदुम्बरकाश्वत्थवटास्समिध ईरिताः ।
प्रधानस्य पलाशस्स्यात् स च सर्वत्र वा मतः ॥



तिलाज्यदूर्वास्समिधः क्षीराक्तार्काङ्गुलायताः ।
चरुश्च होमद्रव्याणि शतं पञ्चाशदेव वा ॥ 125

प्रत्येकमेतैर्जुहुयुः स्वदेवध्यानतत्पराः ।
प्रायश्चित्ताहुतिं पूर्णां ताम्बूलाहुतिसंयुताम् ॥

रक्षादानं निरोधार्थ्यं व्याङ्गे संनिरोधनम् ।
अन्तर्बहिर्बलिं पश्चादाचान्तो मन्त्रविग्रहः ॥

कर्मविज्ञापनं देवे प्रार्थयंस्तत्प्रसादतः ।
कर्तुर्भस्मप्रदानं च कुर्यात्सर्वमनुक्रमात् ॥

देवं कुम्भस्थपानीयैः संस्नाप्याभ्यर्चयेद्गुरुः ।
देवाग्नि कृतं चैतद्यदि कुम्भोदकैस्तदा ॥

प्रायश्चित्तं समुद्दिश्य वर्तते प्रोक्षयेत्तु तम् ।
दिशाहोमस्समाख्यातस्सर्वारिष्टनिवारणः ॥ 130

दिशाहोमो द्वितीयोऽसौ विशेषस्तत्र कथ्यते ।
प्रत्यङ्गिरायाश्चास्त्राणां पूजा नात्र समीरिता ॥

समिदाज्यौदनैर्होमस्सुतिलैस्सिततण्डुलैः ।
होमश्च पुरुषाघोरवामाजैर्दिक्षु संमतः ॥

स्नपनादिषु होमोऽयं चतुर्दिक्षु च संमतः ।
वक्ष्येऽहं संहिताहोमं सर्वदोषनिकृन्तनम् ॥

शुभाशायामथान्यस्मिन् नित्याग्नौ यागमण्डपे ।
तत्सभाद्यग्निमध्ये वा स्थण्डिले वा समाचरेत् ॥

समस्ताङ्गशिवस्शास्त्रे संहितेत्यभिधीयते ।
तैर्मन्त्रैस्संस्कृते वह्नौ गन्धाद्यैरर्चितो गुरुः ॥ 135

पलाशसमिदाज्यान्नैस्शतसंख्या शिवाणुना ।
शिवाद्दशांशतोऽङ्गानामाहुतिर्ब्रह्मणामपि ॥

ततोऽघोराणुना होमं पञ्चविंशतिसंख्यया ।
प्रायश्चित्तार्थमापाद्य पूर्णां कुर्याद्विधानतः ॥

संहिताहोम एष स्यान्मूर्तिहोमो विधीयते ।
हर्म्याग्रेऽन्यत्र वा कृत्वा स्थण्डिलं कृतमण्डले ॥

शिवकुम्भं न्यसेन्मध्ये वर्धनीं तस्य दक्षिणे ।
अष्टदिक्ष्वष्ट कुम्भांस्तु वज्राद्यायुधसंयुतान् ॥

ससूत्रान् सापिधानांश्च सवस्त्रान् सहिरण्यकान् ।
गन्धोदकोदरान् गन्धपुष्पधूपप्रदीपकैः ॥ 140

मध्यकुम्भे शिवं चेष्ट्वाघोरास्त्रं करके यजेत् ।
यद्वाघोरास्त्रराजानं मध्यकुम्भे शिवं विना ॥

वर्धनीमपि हित्वैव साङ्गमभ्यर्चयेद्गुरुः ।
दत्वासनमथास्त्रासनाय हुं फण्णमस्त्विति ॥

दत्वास्त्रमूर्तये हुं फण्णमो मूर्तिं च तामिति ।
ध्यायेत्सूर्यसहस्राभं प्रलयाम्बुदनिस्वनम् ॥

प्रदीप्तदशनप्रान्तप्रकाशमुखकन्दरम् ।
त्र्यक्षं तटिल्लताजिह्वादीप्तभ्रूश्मश्रुमूर्धजम् ॥

सर्पोपवीतं शूलासिशक्तिमुद्गरधारिणम् ।
चतुर्भुजं चतुर्वक्त्रं स्फुरच्चन्द्रार्धशेखरम् ॥ 145

नृत्यन्तं तं महाकायं नागाभरणभूषितम् ।
देवदानवदैत्यानां दर्पितानां विमर्दकम् ॥

वज्रादिशूलपर्यन्तान्यभितोऽस्त्राणि संयजेत् ।
पद्मं चक्रं तथैशाने नैर्ऋते च क्रमाद्यजेत् ॥

तदग्रकल्पिते कुण्डे हास्तिके वृत्तसंनिभे ।
स्थण्डिले संस्कृते वापि वह्निं विन्यस्य देशिकः ॥

संस्कृत्य पञ्चसंस्कारैर्वह्निकार्योक्तकर्मणा ।
तत्रावाह्य यजेत्साङ्गमघोरास्त्रं शिवानले ॥

समिदाज्यतिलक्षीरसितदूर्वामधुत्रयम् ।
हविष्यान्नं सहस्रं वा तदर्धं शतमेव वा ॥ 150

प्रत्येकं जुहुयादेतैरघोरास्त्रं शिवानले ।
कर्मनिर्देशसंयुक्तमन्त्रैरस्त्रैश्च तर्पयेत् ॥

पूर्णाहुतिं ततो दत्वा प्रायश्चित्तं समाप्य च ।
पुनः पूर्णां च ताम्बूलं दत्वा स्तुत्वाभिवन्द्य च ॥